Vol. XIV
१८५३ शकीय-

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिक मुखपत्रम्




सम्पादकः—श्रीक्षितीशचन्द्रचट्टोपाध्यायः
सह-सम्पादकः—श्रीउपेन्द्रमोहनसाङ्ख्यतीर्थः

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता।

वार्षिकं मूल्यम्-

## आय-व्यय-निष्कर्षः

# ( १ ) साधारण-कोषः

| आयः | |
|---|---|
| गतवर्षस्य व्ययावशिष्टः | |
| सेविंस-व्याङ्कागारे | ४४१ \|१० |
| हस्ते ··· ··· | ७६ -१० |
| वृत्तिरूपेण | |
| (कलकत्तातः) | १७१८ \|\|\|० |
| ,, (स्थानान्तरात्) | ६३० \|\|० |
| सामयिक-दानरूपेण | |
| दातृभ्यः ··· | ५३२ \|=० |
| गवर्णमेण्ट-सकाशात् (१९३०-३१) | १०००\ |
| करपोरेशन-सकाशात् (१९२९-३०) | ८५०\ |
| स्मृतिरक्षणार्थम् | १५\ |
| पुस्तकादि-विक्रयात् ··· | १६५ \|\|१० |
| प्रावेशिक-रूपेण ··· | ८ \|० |
| विज्ञापनात् ··· | ६३\ |
| वि· पि· शुल्कपत्रात् ··· | ३३ =० |
| कुसीदरूपेण ( सेविंस-व्याङ्कागारात् ) | ८ =० |
| अन्यतः ··· ··· | ३६ \|\|\|=० |
| ऋणात् (गृहकोषतः) | १०००\ |
| | ६६११\|\|\|=१० |

| व्ययः | |
|---|---|
| पत्रिकार्थम् | १४७५ \|\|\|=१५ |
| पुस्तकालयार्थम् ··· | ९४१ \|\|=१५ |
| पुस्तक-प्रकाशार्थम् ··· | ४५२ \|\|\|० |
| सभाभिनयाद्यर्थम् ··· | ३४२ \|\|≡१५ |
| शिक्षाविभागार्थम् ··· | ४२५ \|\|\|=१० |
| गृहभाटकाद्यर्थम् ··· | ९५४ \|≡१५ |
| वर्तनाद्यर्थम् ··· | ६१२ \|≡१० |
| गृहोपकरणाद्यर्थम् ··· | २०२ \|≡१० |
| ग्रन्थविक्रयार्थम् ··· | १६ \|\|\|१० |
| पाथेयार्थम् ··· | ४६ -० |
| पत्रादिमुद्रणार्थम् ··· | ३७ -१५ |
| पत्रादि-शुल्कपत्रार्थम् | ३३ \|-१० |
| प्रचारार्थम् * ··· | ४५३ \|=० |
| सारस्वत-परीक्षार्थम् | ३३ \|\|\| १५ |
| वि· पि· शुल्कपत्रार्थम् | ३६ \|\|≡० |
| विविध-विषयार्थम् ··· | ३९ =० |
| | ६१०८ \|\|≡० |
| उद्वृत्तः | |
| ष्ट्याम्प ··· ··· | ९ \|\|\|=५ |
| हस्ते ··· ··· | ३५२ -१० |
| प्राप्यः ( अग्रिमादिः ) | ३० \|\|\|-५ |
| सेविंस-व्याङ्कागारे ··· | ११० \|=१० |
| | ६६११\|\|\|=१० |

* निखिल-भारतीय-प्राच्य-महासम्मेलनावसरे पाटलीपुत्रं गत्वा अभिनय-सम्पादनार्थ-मेतन्मात्रं व्ययितम्, महासम्मेलन-कार्य्य-निर्व्वाहक-समितेः ४२६।/० लब्धम्, तत्र सामयिक-दान-रूपेण दातृभ्यः प्राप्तं ५३२।/० रूप्यं आयेऽन्तर्भूतम् ।

## ( २ ) गृहकोषः

( १३३७ वङ्गाब्दे )

गतवर्षस्य व्ययावशेषितः

( १९४५–५५ ) ५%

गवर्णमेण्ट-लोनपत्रे ··· १०००\

क्याश-सार्टिफिकेट-

पत्र-त्रितये ··· २२५०\

३२५०\

क्याश-सार्टिफिकेट-पत्रात्

कुसीदरूपेण प्राप्तः २५०\

३५००\

परिषदः साधारण-कोषे

ऋणरूपेण प्रदत्तः १०००\

उद्धृतः ··· ··· २५००\

उद्धृतस्य विवरणम्

पूर्व्वोक्ते गवर्णमेण्ट-लोन-

पत्रे ··· ··· १०००\

पूर्व्वोक्तावशिष्टे क्याश-

सार्टिफिकेट-पत्रद्वये १५००\

२५००\

आय-व्यय-लिपिरक्षकः

श्रीरामकृष्ण-चक्रवर्त्ती

आय-व्यय-लिपिपरीक्षकः

श्रीमलयकुमार-देवः

## ( ३ ) ग्रन्थालय-कोषः

( १३३७ वङ्गाब्दे )

गतवर्षस्य प्रत्यर्पणावशेषितः २३४\

१३३७ वङ्गाब्दे न्यासरूपेण

प्राप्तः ··· ··· ५८\

२९२\

१३३७ वङ्गाब्दे प्रत्यर्पितः २४\

अतिरिच्यमानः ··· २६८\

( सेविंस-व्याङ्कागारे न्यस्तः )

१३३७ वङ्गाब्दावसाने

## परिषदः साधारण-कोषस्य

ऋणम्

१३३३ वङ्गाब्दे गृह-कोषात्

गृहीतम् ··· ७८॥०

१३३४ ,, ,, ··· ७७५\

१३३६ ,, ,, ··· १०२५\

१३३७ ,, ,, ··· १०००\

२८७८॥०

सम्पादकौ

श्रीअमरेश्वर-ठाकुरः

श्रीसत्येन्द्रनाथ-वसुजश्च

चतुर्द्दशवर्षीय-

संस्कृत-साहित्य-परिषत्-पत्रिकागत-

# विषयसूचिः

[ वर्णसमाम्नायानुसारिणी



* एतच्चिह्नितनामानो निबन्धाः परिषदो मासिकाधिवेशनेषु वाचिताः ।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| May, 1931. | १८५३ शकीये वैशाखे<br>१४वर्षस्य १म-संख्या | Vol. XIV. No. 1. |

## शोकाश्रुनिर्झरः *

(१)

[ निबन्धकः—श्रीकालीपदतर्काचार्य्यः ]

यातोऽस्तं तपनः सुधांशुकिरणा लुप्ता नभः प्रावृतं
जीमूतैरतिभीषणैः प्रतिदिशं ध्वान्तं समुज्जृम्भते ।
सूचीभेद्यतमोविभेदनिपुणा विद्युन्न विद्योतते
दृष्टिर्नश्यति विश्वमिव तमसामिकायनं दृश्यते ॥

पूर्व्वस्यामुदितः पवित्रसविता दिव्यप्रभामण्डलैः
सर्व्वा एव दिशो विधाय विमला यातो दिशं पश्चिमाम् ।
हा हा हन्त चिरं ततोऽपि न विधेः सह्या तदीया स्थितिः
काले सोऽद्य गतो लयं शिवपुरे श्रीविश्वनाथेश्वरे ॥

विद्यादानकुतूहलेन किल यो वाराणसीपत्तने
वासं कल्पितवाननल्पगरिमा युक्तः स्वकीयैर्गणैः ।

* पण्डितप्रवर-महामहोपाध्याय-स्वर्गत ৺वामाचरणन्यायाचार्य्यमहोदयानां परलोकप्रयाणे संस्कृतसाहित्यपरिषदो विशेषाधिवेशने पाठितोऽयं निबन्धः ।

शिष्या यस्य परःशताः प्रयशसा दीप्ता दिशस्तन्वते
सोऽयं हन्त लयं गतः शिवपुरे श्रीविश्वनाथेश्वरे ॥
सारल्यं शिशुतोचितं सुमधुरा वाचः स्थिरं मानसं
सत्यैकप्रियता प्रिया व्यवहृतिः शास्त्रे च निष्ठा परा ।
यं विद्वन्मणिहारहीरमगमन् सम्भूय सर्वे गुणाः
सोऽयं हन्त लयं गतः शिवपुरे श्रीविश्वनाथेश्वरे ॥
तर्कं कर्कशताविशेषविषमं द्वेष्यं जनो मन्यते
तत्रैवातितरां सरागहृदयो बाल्याच्चिरं यः स्थितः ।
न्यायाचार्यपदैकवेद्यविबुधः सम्राट्समाराधितः
सोऽयं हन्त लयं गतः शिवपुरे श्रीविश्वनाथेश्वरे ॥
प्राच्याध्यापनपद्धतिः सुविषमा येनाश्रिता लीलया
तर्कैकप्रतिभाप्रकाशवशतो यं दर्शनान्याश्रयन् ।
विद्योद्योतनिराकृतान्तरतमा विद्यार्थिकल्पद्रुमः
सोऽयं हन्त लयं गतः शिवपुरे श्रीविश्वनाथेश्वरे ॥
हे धीर शोकाम्बुधिनीरपूरे विसृज्य दीनस्वजनानकस्मात् ।
कस्मादुपास्याद् गिरिशात् पृथक्त्वं जहासि काशीनगरीविहारी ॥
अम्बामसम्भाव्य जराविशीर्णां पूर्वं यदासीदसि देवभूयम् ।
तवायमन्यायपथावतारो न्यायैकनिष्ठस्य किमस्ति योग्यः ॥
सरस्वती रोदिति निःशरण्या पुण्यानि हा हन्त निरास्पदानि ।
दाक्षिण्यसौजन्यगुणप्रबन्धा बन्धोरसम्बन्धवशेन शोच्याः ।
आस्तामस्तमितव्यथं तव पदं लोकोत्तरं शर्मदं
संसारे सुचिरं विषादविषमे का वा शुभाशंसना ।
शोकादेष पुनः सुधीपरिकरस्त्वामन्तरंगान्वहं
शोच्यो लोचनवारिवारणकृते कं मार्गमालम्बताम् ॥
शुद्धिं साधयितुं निजां स्वजनताम् अन्त्यजातीनां व्रतं
येनाधारि धराम् [illegible] गुरुणा [illegible] प्राक्तनी ।

ज्योतिः किञ्चन काञ्चनाभमनघं सञ्चिन्त्य योगैस्तनुः
सोऽयं स्वीयतनुं तनोति विलयं श्रीविश्वनाथेश्वरे ॥
मायामामयसम्मितां जनिमतामुच्छिद्य कर्म्मोन्नतैः
कल्याणैरपुनर्भवं गतवता तृप्तिः परासादिता ।
तस्मादेव वियोगशोकविवशान् बन्धूनिहोपेक्षसे
पीयूषाम्बुनिधौ निमग्नवपुषो शिष्टान्तराशा कुतः ?
न्याये नित्यमनन्यधीरसुलभा निष्ठा क्व ते प्रस्थिता
भक्तिर्मातरि सोदरे नयपरे स्नेहो विलीनस्तथा ।
शिष्येषु प्रणयो गुरौ च विनयः प्रागात् क्व वात्सल्यतां
सर्व्वाण्येकपदे लघूनि किमहो मोक्षाम्बुधौ मज्जतः ॥
माता धूलिविलुण्ठिता विलुलिता शोकेन मोहं गता
रोदित्येष सहोदरस्तव पदोपान्ते दृढं बालवत् ।
अन्ये च स्वजना जना इव वनामार्त्तिं पुरो बिभ्रते
तत् सर्वं किमुपेक्षसे क्व नु गता पूर्व्वानुकम्पा निजे ॥

यशोऽभिसन्धानविमुक्तचेतसा
कृतोपकारा भवता सुदुर्गताः ।
जनाः कमद्यानुसरन्तु दुःखिता
विलोचनाश्रूणि विना विना त्वया ॥

कैलासाधिपदिष्टमिष्टफलदं दिव्यं विमानं श्रितः
कैलासाश्रममेत्य शङ्करतनौ लीनश्चिरं तिष्ठतात् ।
दुःखाभोगमसह्यवेदनमयो मोहेन हीनो भवान्
उत्तीर्णं परमार्थलाभवशतो भूयात् कृतार्थः परम् ॥

---

# शोकाश्रुनिर्झरः

(२)

[ निबन्धकः—श्रीनारायणशास्त्री खिस्ते ]

अहहाऽखिलभारताऽवनि-
प्रथिताशेषविपश्चिदीश्वरः ।
करुणाविमुखेन मृत्युना
बुध वामाचरणो बलाद्धृतः ॥१॥

अयि ! काल ! कराल ! किं ब्रुवे
भवता निष्ठुरचेतसा हठात् ।
मृदिता प्रथिताक्ष्यसौरभा
ननु वैदुष्यसुरद्रुमञ्जरी ॥२॥

कणभक्षनयः स मूर्तिमान्
अवतीर्णः किमु गौतमः स्वयम् ।
अकृपेण विधे ! कथं त्वया
सहसैवापहृतो बुधेश्वरः ॥३॥

कमुपाश्रयतां निराश्रया
जरती सम्प्रति तर्कभारती ।
अवलम्बनयष्टिकां करात्
सहसाऽऽच्छिद्य जहार यद्विधिः ॥४॥

अयि ! काशि ! कृपाप्रकारतो-
ऽप्यधिकं दुःसहमेतदस्ति ते ।
तनयो नयपारगः कृती
बुध वामाचरणोऽद्य नास्ति यत् ॥५॥

नृपनिर्मितपाठशालिके !
कुपितो हन्त विधिस्त्वयि ध्रुवम् ।

चरमस्त्वव धूर्वहः सुधी-
बुधवामाचरणेऽपि यत्नतः ॥६॥
मलिना रघुनाथदीधितिः
क्व नु गङ्गेशगवीविचारणा ? ।
अहहाऽस्तमिता महीतला-
न्मथुरानाथ-गदाधरोक्तयः ॥७॥
गहनाः खलु तर्कफक्किकाः
प्रविभज्य प्रतिपादयेन्नु कः ।
न च कोऽपि तथाविधोऽस्ति हा-
ऽखिलविद्यार्थिजनोपकारकः ॥८॥
सुहृदो निधनेन दुःखितः
प्रथितो लक्ष्मणशास्त्रि-पण्डितः ।
श्रुतिमान्यपथाऽवनेऽधुना
न सहायान्तरमीक्षते क्वचित् ॥९॥
नवपण्डितमण्डलोत्तमो
बुधराजेश्वरशास्त्रिसत्तमः ।
नवकल्पनया गुरुं निजं
कथमानन्दयतां दिवं गतम् ॥१०॥
स्मितशोभितमाननं सदा
सदया दृङ् मधुरञ्च भाषितम् ।
व्यजनेन कवित्वलेखनं
क्व पुनर्दृष्टिपथं प्रयास्यति ॥११॥
पितरीव सदाश्रवोऽग्रजे
कवितारावरणस्तु नः सुहृत् ।
अधुनाऽशनिपातदारुणं
विरहं तस्य सहेत हा कथम् ॥१२॥

त्वमतीव पुरः स मूर्तिमान्

द्रुतहेमाभवपुः स्मितोत्तरः ।

व्यथते हृदयं शुचाप्लुतं

सकलं शून्यमिवावलोकये ॥१३॥

हा हा सम्प्रति विश्वमेव सकलं निःसारमाभाति नः

शोकेनाकुलतामिता सुजनता हा हन्त सन्तप्यते ।

ब्रूमः किं बहुनाऽधुना स भगवान् वेदात्मको भास्करो-

ऽप्युच्चैरभ्रपटावगुण्ठितशिरा मालिन्यमालम्बते ॥१४॥

काशी सम्प्रति नैव राजिततरां शून्येव दीनाकृतिः

शोभां मुञ्चति राजकीयसुरगीर्विद्यालयेऽप्यद्य हा ।

छात्राश्चक्षविलोपदूनमनसस्तप्यन्त एवान्तरं

न्यायाचार्यवरं विहाय सुहृदः शैवं प्रयाते पदम् ॥१५॥

अधिकाशि विमुच्य पार्थिवं वपुरीशानकृतोपदेशभाक् ।

अधुना शिवरूपतां गतो बुध-वामाचरणोऽभिवन्द्यते ॥१६॥

---

## शोकाश्रुनिर्झरः

(२)

[ निबन्धकः—श्रीगोपीचन्द्रसांख्यतीर्थः ]

स वामाचरणन्यायाचार्य्यवर्य्यः सतां पतिः ।

छात्रमित्रदयाधर्म्मज्ञानमानयशोगतिः ॥१॥ . .

अन्तर्बहिर्विशदसुन्दरसौम्यमूर्त्तिः कैलासचन्द्रधवलातुलमूर्त्तकीर्त्तिः ।

पञ्चाननप्रकटितप्रचुरप्रभावः श्रीलक्ष्मणान्वितविलक्षणधर्म्मभावः ॥२॥

राखालदासहृदये विलसन्निवासः प्रेमप्रमुग्धफणिभूषणशङ्करस्य ।

प्राचीनरीतिरतिरञ्जितचित्तवृत्तिः स्वप्नेऽपि यस्य न कदाप्यपथे प्रवृत्तिः॥३॥

धर्म्मस्य मर्म्मविदजातरिपुर्द्वितीयो लोकोपकारकरणव्रतनिष्ठितस्य ।

ब्राह्मण्यमन्दिरधरस्फटिकप्रकाण्डस्तम्भोऽद्य कालहतकेन हतः पपात ॥४॥

मूर्त्तिश्रुतिप्रकृतिकीर्त्तिसुनीतिरीति-
धृत्यादिभिर्बत मनोहरसुन्दरस्य ।
मृत्युर्न युक्त इति चिन्तयता विधात्रा
नीतः स निश्चितममृत्युसमर्पणाय ॥५॥

किं वाद्य देवगुरुणा गुरुरेष देवः
स्पर्धां विधाय सुरसंसदि कीर्त्तिकामः ।
मर्त्त्यस्थमात्मयशसो विशदं शरीरम्
एनं निनाय बत दर्शयितुं सुराणाम् ? ॥६॥

हाहा कठोरहृदयः कुटिलश्च काल
एवंविधान् गुणनिधीन् बहुशोऽपहृत्य ।
भीतोऽतिभीत इव चात्मवधादहृश्यो
जीवत्यहो वयमतः प्रतिकुर्म्महे किम् ? ॥७॥

सुधानिधिश्चण्डकरायतेऽद्य नो वज्रायते शीतसमीरणो मृदुः ।
भारायते जीवनमेतदप्यहो शून्यायते सर्व्वमिदं चराचरम् ॥८॥

वयस्यल्पीयसि ज्ञानं विद्या मानं यशो धनम् ।
सुखदानि नृणां किन्तु मृत्युरत्यन्तदुःखदः ॥९॥

भो भारतीप्रियतमास्तनयाः सुधीराः
शोकोऽयमल्प इव मे प्रतिभाति चित्ते ।
शोकः स एव हि महानतिदारुणश्च
यन्नेदृशः पुनरिहैष्यति कोऽपि शोकः ॥१०॥

प्राणिष्वदेष यदि वर्षशतञ्च धीर-
तुल्यः किमाविरभविष्यदमुष्य कोऽपि ? ।
एतावतापि समयेन न लब्ध एकः
सत्त्वे तु तस्य भवितेति न किं दुराशा ? ॥११॥

भवन्त्वेवंविधाः शोका गौरवानन्दगर्भिताः ।
पतन्त्वजस्रमश्रूणि भान्तु शोकसभास्तथा ॥१२॥

हाहाकारास्तथा सन्तु स्फुटन्तु हृदयानि च ।
विषीदन्तु जनाः सर्वे हन्त भीष्मविनाशवद् ॥१३॥

हे वाणि ! वाणि ! शतशश्च सहस्रशश्च
शोकैर्विदग्धहृदयापि च जीवसीव ।
अद्य ह्यसह्यविरहादिव वज्रपातात्
प्राणिष्यसीह कथमित्यह हा बिभीमः ॥१४॥

जीविता ये वयं पूर्वं मर्त्त्येन भवता गुरो ।
त इदानीमस्तभाग्या अमर्त्त्येन मृता इव ॥१५॥

प्राणोपमान् प्रियतमाननुजात्मजादीं-
श्छात्रांश्च नोऽद्य परिहाय गतोऽसि गच्छ ।
वृद्धां पवित्रचरितां चिरतापसीं तां
हाहा जहासि जननीमिति किं कृतं ते ॥१६॥

यश्चाग्निहोत्र-हुतभुक् तव कामपूरः
शोकाग्निसम्मिलितदीप्तशिखः स तीव्रः ।
सर्वं दहन्निव जगन्निजसर्वभुक्त्वं
हा हाधुनातिकठिनः प्रकटीकारोति ॥१७॥

त्वामाश्रयन्ननुदिनं बहुशोऽर्च्चितश्च
हाहाद्य होमदहनः प्रदहन् भवन्तम् ।
हन्ताश्रयाशपददोषमिवेत्य दुःखा-
न्निर्व्वाणतामित इतो भवता समं सः ॥१८॥

दिवं गतोऽसि त्रिदशैर्विराजसे यशः सुखं शान्तिमपि प्रपद्यसे ।
तथाप्यहो दूयत एव नो मनो वियोग एकस्तव दुःसहः परम् ॥१९॥

# अप्पाशास्त्रिणां पत्राणि

(६)

श्रीशिवः शरणम् । पुण्यपत्तनतः

२६० शनिवार वीथी

माघ सुदि ८।१८३१

सानुरागं सवात्सल्यं मूर्ध्नुपाघ्राय गाढमालिङ्ग्य च कुशलं वार्तयति ।

अयि जीविताभ्यधिक वत्स ! समासादितमेतत् कुशलावेदकं भवतः पत्रं कोल्हापुरतः प्रतिनिवृत्तेनेदानीं जनेनानेन । यत्सत्यं निमज्जित एवास्म्येतेन प्रमदमहाम्भोधौ । प्रेष्ठ ! पत्रमिदं भवदीयमवगमयन्-मयि कृतज्ञताभावं परिस्खलयत्याबद्धधाराण्यश्रूणि । का गतिः ? अपि नाम सम्भाव्यते भवता विस्मरिष्यत्ययं जन आत्मनः प्राणानामिति ? न खलु प्रेष्ठ ! व्यपेतेष्वपि प्राणेष्वेतत् सुघटम् । एते ननु विहरन्ति भवन्तः सुखमेव मामकीने हृदये । अयमहं संलपामि निरन्तरमेव सङ्कल्पोप-नतेन भवता च प्रियबन्धुना चामीयेन । स्वप्नेऽपि ननु विलोकयामि प्रत्यहं वः सर्वान् । तदलमन्यथा सम्भाव्य । प्रेष्ठ ! यत् किल प्रिय-बान्धवे मदीयं हृदयं तदेतद् व्यक्तीकृतमेव मया वेणीसंहार आदित एव ।

तथापि ननु नैव प्राहायि मया पत्रमेकमपि प्रियबन्धवे भवते वेति स्थाने किलाशङ्कितं भवता । किन्तु वत्स ! कियद् वा ग्लपयामि दुर्भा-ग्योपहतः प्रत्यहमधिकाधिकमेव कष्टप्रायतामुपारूढामात्मनोऽवस्थितिं विनिवेद्य भवतां हृदयानीति तूष्णीमभवम् । दूरे किल ममावस्थाव-गमजन्य आनन्दः केवलं तु परिताप एवास्मात् सुलभो हृदयस्य ।

एकतस्तावद् गरीयस्यार्थिकी हानिरपरतो बलवदपकारि शरीरास्वास्थ्यं तदन्यतः श्रीमातृदेव्या वार्धकसुलभं व्याधिवैशिष्ट्यं, तदितरतः साहाय्याभावस्तदन्यतश्चाविमृश्यकारिणा श्वशुरेण नवपरिणीतायाः सहधर्मिण्या हरणं कुमारस्य च पूर्व्वभार्य्यायां जातस्य परलोकप्रयाणमित्येवंविधै रन्योपनिपातिभिरनर्थैरनारतमभिहन्यमानः क्षणमप्यनधिगतस्वास्थ्यो निःसारप्रायस्य जीवितस्यास्य वियोगमेव कामयमानः किं वा कुशलमात्मनो निवेदयामि दुर्भागः? पर्य्याकुलस्यातिभूमिं गतेन व्यसनजातेन कथं वा समुत्सहिष्ये ग्लपयितुं दुःखैकमार्गेणात्मनो वृत्तेन कुसुमसुकुमाराणि वो हृदयानि? तत एव च वत्स! समालम्बितः कालमेतावन्तमनिच्छतापि तूष्णीम्भावो दुर्दैवविपाकाभिभूतेन तवानेन ज्येष्ठतातेन। तदलमत्र विमनीभावेन। स्मर्य्यतां नन्वयं भवदेकजीवितो जनो निरन्तरमेव।

प्रार्थायि किल मया विविधविपत्प्रतप्तेन वाराणसीवासकामनया पत्रमेकं महामण्डलाध्यक्षाय। किन्तु कुतो वा भागधेयं ममैतावत्? ततश्च नैतदाश्चर्य्यं यन्न मे मनोरथः साफल्यमारूढ इति। परित्यक्तं पुनरिदानीं मया कोल्हापुरम्। अत्रैव तु कस्याञ्चिदिंग्रेजीपाठशालायां संस्कृताध्यापकत्वमापन्नोऽस्मि। अहो गरीयसी कालगतिः! श्रीमती पुनर्मातृदेवी कोल्हापुरमेवाध्यास्ते। अहं पुनरत्रैकाकी सुहृदः कस्यापि सदने निवसन्नदृशूल एव भोजनादिकं निर्वर्त्तयन्नस्मि। सर्वथा श्रीशिवः शरणम्। वत्स! अपि नाम झगिति परित्यजेयुर्मां प्राणाः? येन दुःखतोऽस्मात् सांसारिकान्मुच्येय। अथवा 'दुःखसंवेदनायैव मयि चैतन्यमर्पितं' भगवता।

'इत्थमपि व्यसनशतसमाकुलेन व्याख्यातं मया कथञ्चिद्वेणीसंहारम्। व्याचिख्यास्यते च वत्सरेऽस्मिन् प्रबन्धत्रितयम्। तदर्थं चापेक्ष्यते 'द्वादशकोषसंग्रहः'। एष च काश्यां लभ्यत इति श्रूयते। यद्येवं तदा सम्यगनुसन्धाय गृहीत्वा च प्रहीयतां यावच्छक्यं सत्वरमेव। प्रतीक्ष

माणो ह्येनमस्मि। चेष्टितव्यं किलाजीवितं पुरुषेणेत्यत एव केवल-मेतदनुतिष्ठामि।

संस्कृतचन्द्रिकायास्तु विषये प्राप्तं मया प्रियबन्धोः पत्रम्। किन्तु तत्र गरीयान् व्याकुलीभाव इत्यत एव नोत्तरितम्। बलवत् किलात्र प्रतारितोऽस्मि वर्त्तमानएजेन्सीसङ्घेन 'चन्द्रिकां' च 'वादिनीं' च प्रका-शनार्थं गृहीतवता ग्राहकेभ्यश्च मूल्यमशेषमपि गृहीतवताऽन्ततश्च पत्रिकाद्वितयमपि प्रतिबद्धवता। संहितपत्रादिकमपि तदायत्तमेवेति किं वात्र करवाणि? सर्वथेदानीं धर्माधिकरणमेव शरणम्। न खलु नेच्छामि चन्द्रिकां प्रकाशयितुं, नापि वा नावगच्छामि यशःक्षतय एवाप्रकाशनमेतस्या इति; तथापि तु कालमनुकूलं प्रतीक्षमाणो विषहे तदेतदशेषमपि।

प्रेष्ठ! समवगत्य व्याकुलत्वं व्याधिभिः श्रीमत्या मे मातृनिर्विशे-षायाः प्रजावतीदेव्याः परामेव काष्ठां परितापस्यानुप्राप्तोऽस्मि। हा दैव! जीविताभ्यधिकानां मे सुहृदामपि सुखं न सहसे। प्रणिपातय वत्स! विनयादरावनतं जनमेनं कुशलप्रश्नपुरःसरं श्रीमत्याश्चरणसरोज-द्वितये। अपि प्रत्यावृत्तं विक्रमपुरतो मे जीवितम्? एतदिदानीं प्रणश्यते सगाढाश्लेषम्।

आयुष्मन्! निवेदय प्रणतिपरम्परां मे पण्डितप्रवराय श्रीअन्नदा-चरणतर्कचूडामणिमहोदयाय। कच्चित् स्मरति मामयं महाभागः?

अत्रास्मि कुशली। श्रीमतां तु सर्वाङ्गीणं मङ्गलमनारतमेव जिज्ञासे। प्रचीयतां प्रेमेति शिवम्।

भवदेकप्रेमा

श्रीअप्पाशर्मा

२६० शनिवार वीथी, पूना सिटि।

# अस्ति स्वयम्

[ निबन्धकः—के. ए. रामलिङ्गशास्त्री ]

अस्ति स्वयम्। कोऽर्थो वाक्यस्यैतस्य "अस्ति स्वयम्" इत्यस्य ? ननु अयमेव अर्थः—अस्ति आत्मा इति। कथम् इदं ज्ञायते ? यावद् उक्तं भवति—अस्ति आत्मेति—तावद् उक्तं भवति—अस्ति ब्रह्मेति ; —आत्मा च ब्रह्म—अस्ति तावद् ब्रह्म नित्य-शुद्ध-बुद्ध-मुक्त-स्वभावम्, सर्वज्ञम्, सर्वशक्ति-समन्वितम्। ब्रह्म-शब्दस्य हि व्युत्पाद्यमानस्य नित्य-शुद्धत्वादयोऽर्थाः प्रतीयन्ते—बृहतेः ( "बृह" "बृहि" वृद्धौ ) धातो-रर्थानुगमात् ; "बृहत्त्वाद् बृंहणत्वाद् वाऽऽत्मैव ब्रह्मेति" गीयते। स चायम् आ कीटपतङ्गेभ्यः, आ च देवर्षिभ्यः ( ब्रह्मादिस्तम्ब-पर्य्यन्तेभ्यः ) प्राणभृन्मात्रस्य इदङ्कारास्पदेभ्यो देहेन्द्रिय-मनो-बुद्धि-विषयेभ्यो विवेकेन "अहम्" इति असन्दिग्धाविपर्य्यस्ताऽपरोक्षानुभव-सिद्ध इति न जिज्ञासा-( विचिकित्सा )-ऽऽस्पदम्। नहि जातु कश्चिद् अत्र सन्दिग्धे—अहम् ( अस्मि ) वा नाहं वेति ; न च विप-र्यस्यति—नाहम् एवेति नास्मेत्रवाऽहम् इति। सर्वस्य आत्मत्वाच्च ब्रह्मास्तित्व-प्रसिद्धिः—सर्वो हि आत्मास्तित्वं प्रत्येति ; न नाहमस्मि इति, अहम् अस्मि इति न प्रत्येति इति न ; प्रत्येत्येवेत्यर्थः। यदि हि नाम नात्मास्तित्व-प्रसिद्धिः स्यात्, सर्वो लोको नाहमस्मीति प्रतीयात्, अहम् अस्मीति न प्रतीयादित्यर्थः।

पांसुल-पादकस्य हालिकस्यापि ( कृषीवलादेरपि ) अस्त्यात्मेति प्रतिपत्तिः। त एते हल-जीविनः किल केदारोदरे निषण्णाः स्वोग्र-नयनरश्मिसम्पृक्तं, सवितृमण्डलमध्यवर्ति च तेजस्तर्जन्या "नायन्" 'नायन्' इति निर्दिश्य ध्यायन्तः,—

"यदादित्यगतं तेजो जगद्भासयतेऽखिलम्
यच्चन्द्रमसि यच्चाऽग्नौ तत्तेजो विद्धि मामकम् ।

इति अर्जुनाय भगवदुपदेशाऽनुसारम् अद्वैतसारम् आस्तिकेभ्यः आचचक्षत इव। "नियतिं लोक इवाऽनुरुध्यते" इति भारविश्च वरकविः चर-वनेचर-व्याहारव्याजेन सर्वोपास्यत्वं च सर्वान्तर्यामिण आत्मन सर्वव्यापित्वम् आदर्शयामासेति ज्ञायते।

स एषः, सर्वेश्वरः ईश्वरः स्थाणुः पुरुषः ·········इत्याद्यैः परःशतैरभिधानैरभिधीयते श्रुतिशीर्षमल्लिका-मतल्लिकासु। "विष्णुर्विकल्पोज्झितः" परमात्मा किल अयम् अखिल-विकल्पना-विनिर्मुक्तः। विकल्पमास्तु पुरुष-बुद्ध्यपेक्षाः। न वस्तुयाथात्म्यज्ञानं पुरुषबुद्ध्यपेक्षम्; किन्तर्हि? वस्तु-तन्त्रमेव तत्। नहि स्थाणौ एकस्मिन् स्थाणुर्वा पुरुषः अन्यो वा इति तत्त्वज्ञानं भवति। तत्र पुरुषोऽन्यो वा इति मिथ्याज्ञानम्; स्थाणुरेव इति तत्त्वज्ञानम्। तथा च आन्तराः श्लोकाः—

अस्ति स्वयमित्यस्मिन्नर्थे कस्याऽस्ति संशयः पुंसः?
अत्रापि संशयश्चेत् संशयिता यः स एव भवसि त्वम् ॥

नाहमिति वेत्ति योऽगी सत्यं ब्रह्मैव वेत्ति नास्तीति।
अहमस्मीति विजानन् ब्रह्मैवाऽसौ स्वयं विजानाति ॥

ब्रह्मत्वमेव तस्माद् बहुविध-सुख-दुःखलक्षणोपेतम्।
मोहेन भवति भेदः क्लेशाः सर्वे भवन्ति तन्मूलाः ॥

न क्लेशपञ्चकमिदं भजते मनुष्यः क्षतकोशपञ्चक-विवेकः
अत एव पञ्च कोशान् कुशलधियः सन्ततं विचिन्वन्ति ॥

अन्न-प्राण-मनोमय-विज्ञानाऽऽनन्दपञ्चकोशानाम्।
एकैकान्तरभाजां भजति विवेकात् प्रकाशताम् आत्मा ॥

क्लेश-कर्म-विपाकाऽऽशयैरपरामृष्टः पुरुष-विशेष ईश्वरः।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥
इन्द्रो मायाभिः पुरुरूप ईयते ॥
माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद !
सर्वभूतगुणोपेतं नैव मां ज्ञातुमर्हसि ॥
ते ध्यानयोगाऽधिगता अपश्यन्
देवाऽऽत्मशक्तिं स्वगुणैर्निगूढाम् ।
वेदान्त-विज्ञान-सुनिश्चितार्थाः
सन्न्यासयोगाद् यतयः शुद्धसत्त्वाः ॥
ते ब्रह्मलोके तु परान्तकाले
परामृतात् परिमुच्यन्ति सर्वे ॥
द्वे पदे बन्धमोक्षाय न ममेति ममेति च ।
ममेति बध्यते जन्तुर्न ममेति विमुच्यते ॥
दृग्-दृश्यौ द्वौ पदार्थौ स्तः परस्परविलक्षणौ ।
दृग् ब्रह्म दृश्यं मायेति इति वेदान्तडिण्डिमः ॥
"ब्रह्म वेद ब्रह्मैव भवति"
"ब्रह्मविद् आप्नोति परम्"
"अत्र ब्रह्म समश्नुते"
"नाऽवेदविन्मनुते तं बृहन्तम्"
"ब्रह्म स्वयम्भु, तस्मै ब्रह्मणे नमः
"ओत-प्रोतम् इदं सर्वं यस्मिन् सच्चित्सुखात्मके ।
पर्यवस्यन्ति वेदान्ताः ब्रह्म चाहं तदक्षरम् ॥"
"परेऽक्षरे सर्व एकं भवन्ति"
"अक्षरम् अम्बरान्तधृतेः"
"यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ।
स तु तत् पदमाप्नोति यस्माद् भूयो न जायते ॥"

न जायते म्रियते वा कदाचिद्
नाऽयं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥

"आत्मेति तूपगच्छन्ति ग्राहयन्ति च ।"

"यच्चाप्नोति यदादत्ते यच्चाऽत्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यते ॥"

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन् "ईश्वर" इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते ।
स स्थाणुः स्थिर-भक्ति-योगसुलभो निःश्रेयसायाऽस्तु नः ॥

"अविकल्पविषय एकः स्थाणुः पुरुषः श्रुतोऽस्ति यः श्रुतिषु ।
ईश्वरम् उमया न परं वन्देऽनुमयापि समधिगतम् ॥"

"यस्मात् परं नापरमस्ति किञ्चिद्
यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येक-
स्तेनेदं पूर्णं पुरुषेण सर्वम् ॥"

... ... ... ... ...

"पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ।"

"तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् ।
प्रलय-स्थिति-सर्गाणामेकः कारणतां गतः ॥"

'यत्राऽन्धकारः किल चेतसोऽपि जिह्मेतरैर्ब्रह्म तदप्यवाप्यम् ।'

'मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥'

'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।'

'ओमिति ब्रह्म

'ॐ नमोऽहम्पदार्थाय लोकानां सिद्धिहेतवे ।
सच्चिदानन्दरूपाय शिवाय परमात्मने ॥'

आत्मानुभूतिशालिभिरशालीनैर्निरन्तर्यानुसन्धाननिधानैर्योगिवरेरेवं-निरूपणीयम् आत्मास्तित्वम् अधुना महानुभावानां सूक्तानुवादेनैव नैवाविदितं भविष्यतीति विचिन्त्य, स्वीयवाक्यस्य निरूपणीये महत्येतस्मिन् विषये नास्त्यावश्यकतेति एतावताऽनुरणनेन उपसंहरामि च उपहरामि च नितराम् आनन्दामि चेति शिवम् ।

---

## न्याय-वैशेषिकयोर्वृक्षादीनां सजीवत्वविचारः *

[ निबन्धकः—श्रीहरिहरशास्त्री ]

इह खलु निखिलजम्बूद्वीपशिक्षामहासम्मेलनावसरे, सम्पद्यमाने सुरसरस्वतीसम्बन्धशालिन्याः प्राच्यशिक्षायाः समधिवेशे विशेषतः किमपि निवेदनीयं मे श्रीमत्सु सभास्तारेषु । यद्यपि स्मृतिविषयातीतकालात् प्रभृत्येव संस्कृतसाहित्यं सर्वोत्कर्षेण वर्त्तते, तथापि केचन भरतभूजन्मानोऽपि पाश्चात्त्यविद्याप्रणयिनस्तस्याधिक्षेपमिव व्रतमिवाऽऽचरन्तः समवलोक्यन्ते । 'तैलाधारः पात्रमुत पात्राधारस्तैलं'मित्यसारविचाराडम्बरेण भारतीयास्तार्किका मुधा समयमतिपातयामासुरिति तु केषाञ्चित् सर्वथैव रिक्तं वचः । अद्याप्येवं किमपि नूतनमाविष्करणं नाभूत्, यस्य मूलसूत्रं नैवास्ति संस्कृतसाहित्येषु । आध्यात्मिकविषयेष्वेव भारतीयमनीषिणां मुख्यतो दत्तचित्तत्वेऽपि तेषां रसायनविद्यानैपुण्याऽवलोकनेन पाश्चात्त्यसभ्यताऽऽलोकधन्धितचक्षुषोऽपि नितरां मुह्यन्ति,

---

* वाराणसेय-निखिलाऽऽसियाशिक्षामहासम्मेलनावसरे संस्कृतविभागे पठितः ।

प्रशंसन्ति च तत्कृतपारदादिजारणमारणपरिपाटीम्। किमधिकं, तत्तत्प्राचीनपरिपाटी अद्यापि परिवर्त्तनमन्तरेण साम्प्रतिकाम् एम्. एस्. सि. कक्षायामध्यापनार्हा, इत्यपि स्वीकुर्वन्ति कतिचन पाश्चात्त्यविपश्चितो मुक्तकण्ठम्। भारतीयरसायनशास्त्रविद्भिराविष्कृतः सर्वव्याधिनिसूदनो भेषजविशेषो 'मकरध्वजः' शर्मण्यदेशेऽप्यद्य तर्हि नितरामर्च्चित इत्यत्र तत्र तन्निर्माणकर्मस्वीकरणमेव प्रमाणभूतम्।

दर्शनविद्यासु याश्च सूक्ष्मादपि सूक्ष्मा विचाररीतयः प्राचामाचार्याणां वरिष्ठैरुपदिष्टाः, ताः खलु बोद्धुमप्यशक्या वैदेशिकैश्चिन्ताचतुरैरिति न केवलं कथामात्रमेव। एवञ्च 'वसुविज्ञानमन्दिरे' तत्रत्य-त्रयोदशवार्षिकसभाधिवेशावसरे श्रीमद्भिर्जगदीशचन्द्रवसुमहोदयैः स्वकीयमुद्भित्प्राणक्रियाविष्करणमभिनवमिव मन्यमानैर्यदुद्गीतम्, तच्चिन्त्यम्। तदुक्तं तैः—

"अस्य यन्त्रस्य साहायकेन यच्चाऽभिनवं जगदाविष्कृतमभूदितः पूर्वं तत्राऽस्माकं कापि कल्पनैव नासीत्।"—इति (आनन्दबाजार-पत्रिका, २।१२।३०)

"उद्भिदामन्येषाञ्च प्राणिनां प्राणक्रियासु कोऽपि प्रभेदोऽस्ति, इति भ्रान्तिर्यथार्थज्ञानोपचयस्य प्रत्यूहभूता।"—(आ०बा०प०, २।१२।३०)

"ये खलु प्राचीनमतमात्रमालम्बमाना वर्त्तन्ते, त एव प्रमाणसिद्धस्य सत्यस्यास्य स्वीकरणे संशेरते।" इति।—(आ० बा० प० २।१२।३०)

परन्तु नैयायिकनायकैरुदयनाचार्यैः प्रशस्तपादभाष्यव्याख्यानावसरे स्वकीये किरणावलीनिबन्धे विविधयुक्तिभिरुद्भिदां सजीवत्वप्रतिपादनं कृतमिति नैवाकर्णितं तैस्तैः पाश्चात्त्यविद्याविपश्चिद्भिरिति परं विस्मयस्थानम्। तथा हि शरीरनिरूपणावसरे भाष्यग्रन्थे वृक्षाद्युद्भिदामव्याख्यानात् किरणावलीकारैरुक्तम्,—

'यद्यपि चोद्भिदोऽपि वृक्षादयः शरीरभेदतयात्रैव व्याख्यातुमुचिताः,

तथाप्यतिमन्दान्तःसंज्ञतया लौकिकापेक्षया सुखदुःखभोक्त्रधिष्ठानत्व-ममीषामविवक्षन् प्रायेण जङ्गमोपकारकतया तदधीनतया च विषयतां विवक्षन् तेष्वेवान्तर्भाव्य व्याख्यास्यन्ते ।" —( ५७ पृ० )

विवक्षाविशेष एव निरूपणं प्रति हेतुरित्येतदर्थं भाष्यग्रन्थादेव बहून् दृष्टान्तान् प्रदर्श्य वृक्षादिषु सुखदुःखान्यतरसाक्षात्कारजनक-मनःसंयोगवत्त्वस्याऽनुमापकतयाऽनेकेषां हेतूनामुपन्यासः कृतः किरणा-वलीकृद्भिः । यथा—

"वृक्षादयः प्रतिनियतभोक्त्रधिष्ठिताः, जीवन-मरण स्वप्न-जागरण-रोग-भेषजप्रयोग-बीजसजातीयानुबन्धानुकूलोपगम-प्रतिकूलापगमादिभ्यः प्रसिद्धशरीरवत् ।"—( ५२ पृ० )

अत्र जीवनादेः प्रत्येकं हेतुता । तथा च यतो वृक्षादिषु जीवनं मरणं स्वप्नः जागरणं रोगः भेषजप्रयोगः सजातीयस्नेहव्यञ्जकचेष्टा अनुकूलवस्तुग्रहणं प्रतिकूलपदार्थपरित्यागः—इत्येते शारीरधर्माः सन्ति, तेन प्रसिद्धमनुष्यादिशरीरवत् तेषां सजीवत्वमनुमेयम् ।

आत्मनिरूपणावसरे भाष्यकारैरुक्तम्—"परिशेषादात्मकार्य्यत्वात् तेनात्मा समधिगम्यते ।" व्याख्यातञ्च कन्दलीकारैः—"ज्ञानं तावत् कार्य्यत्वात् कस्यचित् समवायिकारणस्य कार्य्यम्, शरीरेन्द्रियमनसाञ्च तदाश्रयत्वं प्रतिषिद्धम् । न चान्येषु वक्ष्यमाणेन न्यायेन ज्ञानकारणत्वं प्रति शक्तिरस्ति, अतः परिशेषादात्मकार्य्यं ज्ञानम्, आत्मकार्य्यत्वात् तेन ज्ञानेनात्मा समधिगम्यते ।" ( ७३ पृ० )

एवञ्चाऽतिमन्दान्तःसंज्ञानां वृक्षादीनामपि सात्मकत्वमनुमातुं न खलु न शक्यते ।

यच्च प्रमाणान्तरमपि भाष्यकारैरात्मसिद्धौ निगदितम्, तेनापि वृक्षाद्युद्भिदां सजीवत्वमुन्नीयते । तथा हि "शरीरसमवायिनीभ्यां च हिताहितप्राप्तिपरिहारयोग्याभ्यां प्रवृत्तिनिवृत्तिभ्यां रथकर्म्मणा सारथि-

वत् प्रयत्नवान् विग्रहस्याधिष्ठाताऽनुमीयते प्राणादिभिश्चेति।"— (६८ पृ०)

हितं सुखमहितं दुःखम्, तयोः प्राप्तिपरिहारौ हितस्य प्राप्तिरहितस्य परिहारः, तत्र योग्याभ्यां समर्थाभ्यामिति बुद्धिपूर्वकचेष्टापरिग्रहः। ईदृश्यौ च प्रवृत्तिनिवृत्ती वृक्षलतादिष्वपि स्त इत्यनुकूलोपगमप्रतिकूलापगमयोर्हेतुत्वं प्रदर्शितमाचार्य्यैः। हिताहितप्राप्तिपरिहारसमर्थायाश्चेष्टायाः प्रयत्नपूर्वकत्वात् तादृशचेष्टावत्त्वेन वृक्षादिशरीरस्य प्रयत्नवदधिष्ठितत्वं सम्भवत्येवेत्याशयः।

"प्राणादिभिश्चेत्य"नेन "प्राणापाननिमिषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानी"ति (३।२।४) काणादसूत्रं भाष्यकारः स्मारयति।

स्वकर्मोपार्जितशरीरावच्छिन्नेनात्मना मनःसंयोगो जीवनमिति लक्षणयाऽत्र जीवनकार्य्यं वृद्धिसंरोहणादि जीवनशब्देन बोद्धव्यम्। एवंलक्षणकजीवनं वृक्षादावप्यस्तीति तेषां सात्मकत्वं सिध्यति। सलिलसेचनेन दोहदार्पणेन च वृक्षादेर्वृद्धिः प्रसिद्धैव। तदुक्तं श्रीमद्भागवते—

"यथा तरोर्मूलनिषेचनेन
तृप्यन्ति तत्स्कन्धभुजोपशाखाः।" इति।

संरोहणञ्च भग्नक्षतावयवानां पुनः सङ्घटनं, तदपि वृक्षादौ प्रत्यक्षसिद्धमेव।

एवमात्मलिङ्गसाधिका मनसोऽभिलषितज्ञानसाधनेन्द्रिये गतिरपि चेतनाभिलाषाधीना लतावतानादावस्ति, कथमन्यथा 'लज्जावती'त्यभिधेयो लताविशेषः परकीयकरादिसंयोगेन सङ्कोचमञ्चति? त्वगिन्द्रिये मनःसम्बन्धमन्तरेण तादृशसङ्कोचाऽसम्भवात्।

संयोगविशेषध्वंसरूपमरणमपि वृक्षादौ सुप्रसिद्धम्। केचिद् वृक्षाः

कालविशेषे ,शतशः क्षतादयो अपि म्रियन्ते, क्वचन चानुकूलकालेऽपि जलसेकाद्यभावेन प्राणान् परित्यजन्ति ।

स्वापजागरणे अपि वृक्षादौ वर्त्तेते इत्यपि वार्त्ता सुविदिताऽस्मोदुदयनाचार्याणाम् ।

वृक्षादीनां रोगो भेषजप्रयोगश्च तत्प्रशमनार्थं विधीयत इति जानाति स्म नैयायिकनायकोऽयम् ।

स्नेहव्यञ्जकचेष्टापि सहकारतरुसमालिङ्गनादिरूपा समवलोक्यते माधवीलतादिषु ।

एते जीवनादयो धर्मा वृक्षादिषु नैव सन्तीत्याशङ्कायामाह

"न चैते सन्दिग्धासिद्धाः, आध्यात्मिकवायुसम्बन्धात् ।" (५२पृ०)

तथा च यतो वृक्षादिषु प्राणलक्षणाऽऽध्यात्मिकवायुसम्बन्धोऽस्ति, ततस्तत्र जीवनादिसत्त्वमकामेनाप्यभ्युपेयम् ।

ननु वृक्षादिषु प्राणवायुसम्बन्धोऽस्तीत्यत्र किं मानमत आह--

"सोऽपि मूले निषिक्तानामपां दोहदस्य च पार्थिवस्य धातोरभ्यादानात् ।" ( ५८ पृ० )

वृक्षादयो हि मूले निषिक्तानि सलिलानि पार्थिवरसादिरूपदोहदानि चाऽभ्याददते । एतच्चाभ्यादानं प्राणिकार्य्यम् ।

ननु वृक्षादयो दोहदान्यभ्याददत इत्यत्र न मानमस्तीत्याह

"तदपि वृद्धिभग्नक्षतसंरोहणाभ्यामिति । अन्यथा कारणं विना कार्यानुत्पत्तिप्रसङ्गे सर्वमिदमलूनं विशीर्णमापद्येतेति संक्षेपः ।'

किरणावली, ५२ पृ० )

अयमाशयः—अवयवोपचयरूपा वृद्धिर्विघटितविश्लिष्टयोर्भागयोः संरोहणञ्च वृक्षादिषु प्राणाननुमापयेताम् । यद्यभ्यादानलक्षणकारणमन्तरेण वृक्षादिकार्यं स्यात् तदा छेदं विना वृक्षादीनामुच्छेदोऽप्यापद्येत ।

ननु वृक्षादेर्गिरिपाषाणेन व्यभिचारोऽभ्यादानहेतुवायोः प्राणत्वे मानाभावश्चेत्यत आह—

"आगमश्चात्रार्थे बहुतरोऽनुसन्धेय इति।" ( किरणा०, ५२ पृ० )

यद्वा एतादृशकार्य्यकारणभाव एव किं मानमित्यत्र आह— "आगमश्चे"त्यादि।

तथा च "अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद् यो मध्येऽभ्याहन्याज्जीवन् स्रवेद् योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत् स एष जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति।" ( छान्दोग्योपनिषद्, ६।११।१ )

"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः॥" (मनुः, ८।२१)

इत्यादि श्रुतिस्मृत्यादिरूपागमसाम्राज्यस्य जागरूकत्वात् तत्तदनुमानानां नाऽप्रयोजकत्वशङ्कापि।

इदमत्रावधेयम्—सत्स्वपि बहुषु शास्त्रवाक्येषु वृक्षादिसात्मकत्वप्रतिपादकेषु किरणावलीकारात् प्राग्वर्त्तिनो न्यायवैशेषिकाचार्याः— 'केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णय' इति न्यायेन तेषां सजीवत्वं नाङ्गीकुर्वन्ति स्म। तथा च प्रशस्तपादभाष्ये योनिजायोनिजशरीरनिरूपणावसरे वृक्षादयो न व्याख्याताः, अपि तु प्रतिपादितास्ते विषयान्तर्भावेणैव (१)। वाचस्पतिमिश्र-जयन्तभट्ट-श्रीधराचार्यैरपि तत्तद्ग्रन्थसन्दर्भेषु वृक्षलताशरीरविशेषत्वं न समर्थितम्। तथा च तेषां ग्रन्थाः—

"चेष्टा व्यापारः। स चातिव्यापकतयाऽव्यापकतया च न लक्षणं, वृक्षादिषु भावादभावाच्च पाषाणमध्यवर्त्तिमण्डूकादिशरीर इति भावः। ······प्रयुक्तस्योत्पादितस्य न व्यापारमात्रं चेष्टाऽभिमता, अपि तु विशिष्टो व्यापारः। स च न वृक्षादिष्वस्तीति नातिव्यापकता।" ( तात्पर्यटीका, १४२ पृ० )

"ननु चेष्टा क्रिया, क्रियावत्त्वे च सत्यपि न वृक्षादीनां शरीरत्व-

(१) विषयस्तु द्व्यणुकादिक्रमेणारब्धस्त्रिविधो मृत्पाषाणस्थावरलक्षणः। स्थावरास्तृणौषधिवृक्षलतावतानवनस्पतयः। ( २२ पृ० )

मित्यतिव्यापकं लक्षणं, विशिष्टचेष्टाश्रयत्वस्य विशिष्टप्रमेयप्रक्रमतो-ऽवसीयमानत्वात्।" ( न्यायमञ्जरी, ४७४ पृ० )

"लतादिप्रवृत्तिव्यवच्छेदार्थं शरीरसमवायिनीभ्यामित्युक्तम्। वृक्षादिगतेन वृद्ध्यादिना व्यभिचार इति चेन्न, तस्यापीश्वरकृतत्वात्। न तु वृक्षादयः सात्मकाः, वृद्ध्याद्युत्पादनसमर्थस्य विशिष्टात्मसम्बन्धस्या-ऽभावात्। ( न्यायकन्दली, ८२—८३ पृ० )

तथा च श्रीमद्भिरुदयनाचार्यैरेव वृक्षादीनां सजीवत्वसाधनाय प्रथमं युक्तिराशिरुद्भावित इति परं गौरवस्थानं तर्करसिकानाम्। तदुक्तं प्रशस्तपादभाष्यव्याख्यानावसरे पद्मनाभमिश्रैः—

"वृक्षतृणादेस्तु शरीरत्वं श्रुतिसिद्धमपि श्रीमदाचार्यैः किरणावल्या-मनुमानेन साधितं तत्रैवानुसन्धेयमिति।" ( सेतुः, २१६ पृ० )

आर्हतास्तु वृक्षाणां सात्मकत्वं न खलु नाङ्गीकृतवन्तः। तथा चोक्तमुमास्वामिना—

"पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः।" (तत्त्वार्थसूत्रम्, २।५।१३ )

श्रीमद्भट्टकलङ्कदेवेन तत्त्वार्थराजवार्त्तिके व्याख्यातम्—

"वनस्पतिर्वनस्पतिकायो वनस्पतिकायिको वनस्पतिजीव इति योज्यम्।......कति पुनरेषां प्राणाः? चत्वारः—स्पर्शनेन्द्रियप्राणः कायबलप्राण उच्छ्वासनिश्वासप्राण आयुःप्राणश्चेति।" ( २८ पृ० )

तेषामयमाशयः—जीवो द्विविधः, त्रसस्थावरभेदात्। 'द्वीन्द्रिया-द्यस्त्रसाः', स्थावरास्तावदेकेन्द्रियाः। वनस्पतिस्तु स्थावरान्तर्भूतः, अत एव तस्य स्पर्शग्राहकमेकमेवेन्द्रियमस्ति। तथा च सूत्रितमुमा-स्वामिना—

"वनस्पत्यन्तानामेकम्।" ( २।५।२२ ) उक्तञ्च राजवार्त्तिक-कारैः—"......स्पर्शनमेकेन्द्रियमाविर्भवति।" ( ८४ पृ० )

आर्हतमते च वृक्षादीनां स्पर्शनेन्द्रियम्, स्पर्शनं रसनवृत्त्यं ह्रस्वा-

दीनाम्, स्पर्शनरसने घ्राणवृद्धे पिपीलिकादीनाम्, स्पर्शनरसनघ्राणानि चक्षुर्वृद्धानि भ्रमरादीनाम्, तानि श्रोत्रवृद्धानि मनुष्यादीनाम्। तदुक्तं तत्त्वार्थसूत्रे—

"कृमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानि।" (२।५।२३)

परन्त्वसौ सिद्धान्तो न सौगतमतसिद्धः। यतः सर्वासां त्वचामपहरणे सम्पद्यते तरूणां मरणमिति जैननयमनादृत्य न्यायबिन्दुकारैर्धर्मकीर्त्तिभिरुद्घोषितम्—

"चेतनास्तरव इति साध्ये सर्वत्वगपहरणे मरणं प्रतिवाद्यसिद्धं विज्ञानेन्द्रियायुर्निरोधलक्षणस्य मरणस्यानेनाभ्युपगमात्, तस्य च तरुष्वसम्भवात्।" ( २८ पृ० )

उक्तञ्च न्यायबिन्दुसन्दर्भव्याख्यानावसरे धर्मोत्तराचार्यैः—

"ननु च शोषोऽपि मरणमुच्यते, स च तरुषु सिद्धः। सत्यम्। केवलं विज्ञानसत्तया व्याप्तं यन्मरणं तदिह हेतुर्विज्ञाननिरोधश्च।" ( न्यायबिन्दुः, ८० पृ० )

सुश्रुतमते च वृक्षादयः स्थावरान्तर्भूताः, उद्भिज्जाश्च इन्द्रगोपमण्डूकप्रभृतयः। तदुक्तम्—"तासां स्थावराश्चतुर्विधाः। वनस्पतयो वृक्षा वीरुध ओषधय इति।......जङ्गमास्त्वपि चतुर्विधा जरायुजाण्डजस्वेदजोद्भिज्जाः।......इन्द्रगोपमण्डूकप्रभृतय उद्भिज्जाः।" ( सूत्रस्थानम्, १अ०, २२-२३ )

चरकास्तु—"......औद्भिदन्तु चतुर्विधं वनस्पतिस्तथा वीरुद् वानस्पत्यस्तथौषधिः।" ( सूत्रस्थानम्, १।७०) इति प्राहुः।

इत्यलमनल्पजल्पनेन।

# भक्तविजयम्

[ निबन्धकः—म. म. श्रीसीतारामशास्त्री ]

नमस्कृत्य रमानाथं भक्तवात्सल्यसंयुतम् ।
भक्त्यावर्जितगोपालान् भक्ताँल्लोकहिते रतान् ॥
गणेशं शारदामम्बां पितरं परमं गुरुम् ।
शिष्टाञ्छास्त्रपरानन्यान्नत्वा प्रीत्या यथायथम् ॥
यथाविधि ब्रुवे भक्तचरितं देवभाषया ।
महीपत्याख्यविदुषा भाषितं लोकभाषया ॥
महाराष्ट्रा क्रमेर्गीतल्लोकानामुपकारकम् ।
यस्य देव इति न्यायादादौ स्वोपास्यदेवताम् ॥
विठ्ठलाख्यां ग्रन्थकर्ता स्वीये ग्रन्थे प्रणौति स्वयम्
भीमातीरविहारकार्यनिरतो भक्तेषु वात्सल्ययुग्
वाणी-विघ्नहरादि-सर्व-दिविषद्रूपो दयासागरः
व्याप्येदं स चराचरं जगदसौ तत्सङ्गमाद्विच्युतो
यस्त्वं विठ्ठल तिष्ठसीह भगवंस्तस्मान्नतस्त्वाहम् ॥
परमार्थोपदेशेन यो निरास्थद्भवभ्रमम् ।
सद्गुरुं तं महाभक्तं तुकारामं नमाम्यहम् ॥
व्यासवाल्मीकिमुख्यांस्तान् प्रणमामि महाकवीन्
निरस्याज्ञानजं ध्वान्तं लोकोऽयं दीपितस्तु यैः ॥
प्रणमामि हरेर्भक्तान् सतः परमधार्मिकान् ।
यैः कलाववतीर्येह गजमूढाश्च तारिताः ॥
आरब्धो भक्तविजयग्रन्थोऽयं भवतां पुरः ।
प्रसादात् पूर्णतामेतु दरिद्रेष्टमिवेभ्यतः ॥

यथा कृपालुश्चक्षुष्मानन्धं नयति सर्वतः ।
तीर्थादिषु तथा यूयं सञ्चारयत मामिह ॥
मन्दबुद्धिरहं लोकवेदविज्ञानवर्जितः ।
देववाग्व्यवहारस्यानभिज्ञोऽस्मि तथापि तु ॥
रोचन्ते हरये भक्तचरितानीति डिण्डिमम् ।
घोषयामास भगवान् भविष्ये शङ्करः स्वयम् ॥
तदुक्तिं तां गृहीत्वाथो उदभून्मम मानसे ।
भक्तानां चरितान्यन्तर्वसन्तु मम सर्वदा ॥
प्रीयताञ्च ततो देव इतिभावस्ततस्त्वहम् ।
अविचार्य निजां शक्तिं प्रवृत्तो ग्रन्थकर्मणि ॥
सरित्पतेः शोषणाय टिट्टिभस्य यथा तथा ।
प्रयत्नोऽयं मम यतो भगवद्भक्तवर्णना ॥
ज्यायसी वर्त्तते साक्षाद् भगवत्त्वेऽपि यः पुनः ।
भगवाञ्छक्यते नेहाख्यातुं श्रुतिभिरप्यथ ॥
सहस्रशीर्षा भगवाननन्तोऽप्यक्षतार्थताम् ।
गुणानां वर्णने विष्णोः प्राप्तवान् किमुतापरः ॥
अतिशक्तिप्रयोगेण शब्दानां स किलान्वभूत् ।
जिह्वाभङ्गाद् द्विजिह्वत्वं न शक्तः सकलान् गुणान् ॥
वक्तुं ततो हरेर्जातः शय्यारूपेण सेवकः ।
ब्रह्मा शचीपतिः साक्षाद्भगवांश्च सदाशिवः ॥
न विदन्ति गुणान् रूपं कृष्णस्य किमुतापरे ।
महतामप्यवस्थेदृक् क्षुद्रोऽहं तत्र वै कथम् ॥
वक्तुं हरेर्गुणाञ्छक्तः स्यां ममायं समुद्यमः ।
दयालुना भगवता पूर्यंत स्वयमेव हि ॥
बालस्याभिमतं यद्वन्माता पूरयति क्षणात् ।
पितुरुत्सङ्गमारोढुमिच्छुः प्राप्तो ध्रुवो हरिम् ॥

बालो ध्रुवे पदे तेन स्थापितः करुणावशात्।
स्वल्पं वाञ्छन् पयः पातुमुपमन्युरगादरिम् ॥
क्षीरसागरदानेन तोषितोऽसौ यथा तथा।
ममेष्टं पूरयेन्नो किं कृपालुर्भगवानसौ ॥
कृतत्रेताद्वापरेषु य आसन् पृथिवीतले।
पूर्वं भक्ता हरेस्तेऽस्मिन्नवतेरुः कलौ युगे ॥
लोकानामुपकाराय तेषां चरितवर्णने।
ममोत्साहोऽतीव जातस्तस्मादेष समुद्यमः ॥
सावधानैः श्रोतृवरैः सार्थनीयः कृपायुतैः।
काव्येष्वहमधीती नो वेदान्तेष्वपि नो मतिः ॥
चातुर्यभाजनं नाहं देववाणीबहिष्कृतः।
कवीश्वराणां पूर्वेषां भक्तानामिव मे नहि ॥
प्रासादिकानि वाक्यानि रसवन्त्यर्थयुञ्जि नो।
रामायणे यथा भक्त एकनाथोऽथवा यथा ॥
मुक्तेश्वरो नामदेवो भारते प्राकृतः पुरा।
श्रीधरेणाथवा टीका कृता भागवते स्फुटा ॥
हरिविजयनाम्ना स ग्रन्थः प्रणायि वा यथा।
रामदासेन वा दासबोधे प्रोक्तं यथा वचः।
गणेशः केशवो वा स वाल्मी वा सरसः कविः ॥
कबीरो यवनो वापि ज्ञानदेवो यथाऽपरे ॥
वर्णयन्ति हरेर्नाम सरसैर्वाङ्मयैस्तथा।
सरसं मे वचो नास्ति तथापि न विलज्जितः ॥
नत्वा कवीनां पूर्वेषां प्रसादात् पूर्तिमिच्छुकः।
प्रवृत्त एव ग्रन्थस्य रचने यत्न एष मे।
अविशुद्धोदकं गङ्गाप्रविष्टमिव सर्वतः।
सतामाह्लादको भूयान्मणिसंस्पृष्टलोहवत् ॥

अप्रसिद्धा सरिल्लोके क्षुद्रा गङ्गासमागमात् ।
मान्या भवति सर्वेषामित्थं चरितवर्णनात् ॥
भक्तानां प्रतिमागच्छेद् भगवांस्तत्कृपावशात् ।
मान्यतामेष्यति ग्रन्थ इत्याशाप्रेरितस्य मे ॥
प्रवृत्तिरेषा सततं सतां स्यात्परितुष्टये ।
यस्य गोत्रे जनुर्धृत्वा गोत्रसम्बन्धमात्रतः ॥
सुदुष्करेऽपि कार्ये मे समुत्साहो व्यजायत ।
श्रुतिप्रसिद्धो भगवाञ्छान्तमूर्तिरसावृषिः ॥
वसिष्ठो गोत्रमूलं मे दिश्याद् ग्रन्थस्य पूर्णताम् ।
मातापित्रोः प्रणामोऽत्र ग्रन्थारम्भे विशेषतः ॥
आवश्यको यतो लभ्यो नरदेहोऽयमेतयोः ।
कृपातः सर्वतीर्थेभ्यो वरिष्ठौ ताविति श्रुतम् ॥
कुलोपास्यो ममोपास्यो रुक्मिणीरमणो हरिः ।
तस्य प्रणामात्सकलास्तुष्यन्ति विबुधा यथा ॥
समुद्रपूजनात्सर्वा नद्यः पृथ्व्याः परिक्रमात् ।
समाविष्टानि तीर्थानि यथा वा दर्शनाद्विधोः ॥
दृष्टान्युडुगणान्येवं तृप्यन्ति सकलाः सुराः ।
तं विठ्ठलं संप्रणम्य प्रवर्ते ग्रन्थकर्मणि ॥
मूलेन रहितो ग्रन्थो मया बुद्ध्या प्रकल्पितः ।
मन्तव्यमित्थं न यतो मूलत्वं ग्रन्थयोर्दयोः ॥
साक्षाद् ब्रह्मावतारेण सता नाभाजिना स्वयम् ।
वसता चोत्तरे देशे ग्वालेर्या भाषया कृतः ॥
ग्रन्थः सन्तचरित्रेति सतां चरितवर्णकः ।
मानदेशोद्भवः साक्षाद्धरिरुद्धवचिद्घनः ॥
वर्णयामास श्रीभक्तचरितं ग्रन्थमुत्तमम् ।
समाहारात्तदुक्तानां कथानामयमत्र मे ॥

प्रारब्धो भक्तविजयः समूला स्थलतामतः ।
बालकोक्तं यथा मातुरपभ्रष्टमपि प्रियम् ॥
वचो भवेन्ममाप्येवं भवतां प्रीतये वचः ।
पुरा कृष्णावतारस्यावसाने समये यदा ॥
भूतलं त्यक्तवान्देवः कृष्णरूपेण वै तदा ।
घोरः कलिः प्रववृते तस्य चोपचितिः क्रमात् ॥
सञ्जायते ततो लोके यज्ञदानादिकाः क्रियाः ।
लुप्ताः सर्वे वर्णधर्मास्त्यक्ता लोकैर्विसंशयैः ॥
आम्नायाध्ययनं विप्रैर्धर्मा जात्युचितास्तथा ।
परित्यक्ताः क्षत्रियैश्च न्याय्यवृत्तिः समुज्झिता ॥
चतुर्थमाश्रमं विप्रा नाश्रयन्ते कलौ युगे ।
पुत्रा न मानयन्त्युक्तं पितुः शिष्यास्तथा गुरोः ॥
शुश्रूषां न प्रकुर्वन्ति भर्तॄणां ललनास्तथा ।
प्रमदोक्त्यनुरोधेन पितॄंस्त्यक्त्वा निजान् पुनः ॥
पत्नीमातुर्गृहे नित्यं वसन्ति पतयस्तथा ।
नेच्छन्ति धर्मं नो तीर्थयात्रां विच्युतकल्मकाम् ॥
संकेतस्थलमित्येव बुद्धिर्दैवतमन्दिरे ।
पुराणश्रवणं भावैर्नास्ति नाम्नां च कीर्तनम् ॥
हरेः कथां परित्यज्य भावैः शृण्वन्ति वै नटान् ।
शालग्रामान् परित्यज्य पूज्यन्ते क्षुद्रदेवताः ॥
रुद्राक्षमालातुलसीस्फटिकप्रभृतींस्तथा ।
निरस्य काचमणयः सन्धार्यन्ते नरैस्तथा ॥
इभग्रा नेच्छन्ति वै दानमरोगास्तप उत्तमम् ।
राजानस्तु तथा लोकान् नेच्छन्ति समये कलौ ॥
नानुस्त्रियन्ते न्यायाश्च नीत्या चरितमुत्तमम् ।
कुलाङ्गनानां दासीत्वं कन्यानां विक्रयोऽनिशम् ॥

वडवानामिव तथा कुर्वन्ति यवनाः सदा ।
गवां वधं परे तत्र साम्राज्यं परमं नराः ॥
कुर्वन्त्यसंशयं मूढाः कलौ वृद्धिङ्गते सदा ।
अनृतं बहु जल्पन्ति निन्दन्ति बहु सज्जनान् ॥
कूटसाक्ष्यं प्रदायाथो मिथ्या सत्यापयन्ति वै ।
गायत्रीलोपमापन्ना तन्त्राणामुदयोऽभवत् ॥
विश्वास्य निर्दयं घ्नन्ति चरमे युग आगते ।
यवना देवमूर्त्तीनां भङ्गं कुर्वन्ति वै बलात् ॥

( क्रमशः )

---

## रसमीमांसा

( पूर्वतोऽनुवृत्ता )

[ निबन्धकः—साहित्यविद्याप्रवीणः बु-वेङ्कटरमणार्यः ]

विद्याधरः—

शाणोत्कीर्णमिवोज्ज्वलद्युति पदं बन्धोऽर्धनारीश्वर-
श्लाघालङ्घनजाङ्घिको दिवि लतोज्झिन्नेव पार्थोन्नतिः ।
किञ्चित्पीडितचन्द्रमण्डलगलत्पीयूषहृद्यो रस-
स्तु किञ्चित् कविकर्म्म मर्म्म न पुनर्वाग्डिण्डिमाडम्बरः ॥

( एकावली पृ० १६ )

विद्यानाथः—

"रसप्रधानाः शब्दार्थाः—" ( प्रतापरुद्रीयम् पृ० २ )

"अथ सर्वेषां प्रबन्धानां जीवितभूतस्य रसस्य स्वरूपं निरूप्यते (प्र. रु. पृ.·१५५. रसप्र० बा. म.)

तत्रभवता रत्नापणव्याख्यानिर्माता कुमारस्वामिसोमयाजिना महामहोपाध्यायमल्लिनाथसूनुना "रसप्रधानाः शब्दार्थाः" इति कारि-

काया विवृतिरेवं ह्यरूपि—"रसप्रधाना रसजीविता इत्यर्थः। यद्यपि वस्त्वलङ्काररसात्मना त्रिविधस्यापि व्यङ्ग्यस्य जीवितत्वमुक्तमत्र वक्ष्यति, तस्मात् स्वात्ममात्रविश्रान्तत्वेन प्राधान्याद्रसस्यैव मुख्यं जीवितत्वम्। वस्त्वलङ्कारव्यङ्ग्ययोस्तु सर्वथा रसपर्यवसानेनाप्राधान्यात्तदाभेऽपि वाच्यादुत्कृष्टत्वसाम्यादौपचारिको जीवितत्वव्यवहार इति न कश्चिद्विरोध इति ध्वनिलोचनरहस्यम्" इति।

वाग्भटः—

"साधुपाकेष्वनास्वाद्यं भोज्यं निर्लवणं यथा।
तथैव नीरसं काव्यमिति ब्रूमो रसान् वयम्॥"

( वाग्भटालङ्कारः )

काव्यानुशासनस्य कर्ता वाग्भटः -

"दोषमुक्तं गुणयुक्तमलङ्कारभूषितं शब्दार्थरूपमुक्तं काव्यशरीरम्। परं तत्त्वप्राणिशरीरमिव निरात्मकं न प्रतिभासते। काव्यस्य प्राणभूतान् रसानाह। तथाहि—

"यामिनीवेन्दुना मुक्ता नारीव रमणं विना।
लक्ष्मीरिव ऋते त्यागान्न वाणी भाति नीरसा॥" इति।

( काव्यानुशासनम् )

काव्यप्रकाशलक्षणं बहुधा खण्डयित्वा वस्त्वलङ्कारध्वन्योः काव्यात्मतां चित्रस्य काव्यत्वं च निराकृत्य रसवदेव वाक्यं काव्यं ब्रुवता साहित्यदर्पणकारेण विश्वनाथकविराजेन रसस्यैव प्रधानतोररीकृतेति वदनं पिष्टपेषणायमानमिति न विस्तरेण प्रतिपादितं तन्मतम्।

किञ्च रमणीयार्थप्रतिपादकशब्दस्यैव काव्यत्वमङ्गीकुर्वाणैर्जगन्नाथपण्डितराजै रसप्रस्तावे —

"एवं पञ्चात्मके ध्वनौ परम-रमणीयतया रसध्वनेः, तदात्मरसस्तावदभिधीयते" इति प्रतिपादितम्। अस्य रसगङ्गाधर इति निबन्धाभिधानमेव रसस्य प्राधान्यं सुव्यक्तीकरोति।

ये पुनरालङ्कारिका रसविषयमधिकृत्यैव पृथक् पद्धतीर्निबबन्धुः, यथा रसमञ्जरीं रसतरङ्गिणीं च कुर्वाणो भानुदत्तः, रसार्णवसुधाकरस्य प्रमाता शिङ्गभूपालः, कर्णभूषणस्य कर्ता गङ्गानन्दः, रसचन्द्रिकाया रचयिता विश्वेश्वरपण्डितश्च, तेषां मते तत्प्राधान्यमवश्यमभ्युपेयमेव।

ये पुनराचार्याः प्रत्येकमलङ्कारविषयमधिकृत्यैव निबन्धान् रचयामासुस्तेषामपि मते रसस्यैव प्रधानप्रतिपाद्यत्वमाकलनीयम्। प्रत्येकं चित्रविषय एव निबन्धिता ग्रन्थास्त्वानन्दवर्धनकृतध्वन्यालोकतोऽतीव नवीना एव परिदृश्यन्ते। ध्वनिकृदनन्तरभाविनां प्रायशः सर्वेषामपि तस्मिन्नतीवादर इति पूर्वमेवोक्तम्। तन्मतमेव तैराश्रीयत इति च नापूर्वम्।

तथा च ध्वनिकारेण—

"वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम्।
रसादिपरता यत्र स ध्वनेर्विषयो मतः॥
ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः।
रूपकादिरलङ्कारवर्ग एति यथार्थताम्॥
रसभावादितात्पर्यमाश्रित्य विनिवेशनम्।
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम्॥"

इति प्रतिपादितम्। सर्वैरप्यलङ्कारै रसपरतन्त्रतयैव भाव्यम्। तथात्व एव तेषामलङ्कारत्वसिद्धिः। अलङ्क्रियतेऽनेनेति चारुत्वहेतुः खल्वलङ्कारः। रसस्तावदङ्गी अलङ्कार्यः। यदि तं नालङ्कुर्युरलङ्कारा निरर्थका एव ते भवन्ति।

एवं रसस्य प्रधानतायां प्रमाणानि प्रदर्शितानि। वस्त्वलङ्कारव्यङ्ग्याभ्यां रसव्यङ्ग्यस्याभ्यर्हितत्वे किं मानमित्यपरत्रैवाकलनीयम्। तौ तावद् वस्त्वलङ्कारौ सर्वथा रसमेवोपकुरुत इति तदनुयायित्वं तयोरितः पूर्वमेवोक्तम्। (क्रमश: प्रचलन्ति।)

अयमपरो विशेषः, यत्तौ वस्त्वलङ्कारौ वाच्यतामपि सहेते। रसस्तु स्वप्नेऽपि न सहते वाच्यताम्। तथाहि यत्प्रतीयमानं वस्तु यथालङ्कारौ रूपकादिर्वा विनापि व्यञ्जनाव्यापारेण वाच्यतयापि प्रतिपाद्यन्ते। न तावद्रसः शब्देनाभिधातुं शक्यते। सर्वदा तस्याप्रतीयमानस्वभावत्वात्। तदाह ध्वनिकारः—

"यतश्च स्वाभिधानमन्तरेण केवलेभ्योऽपि विभावादिभ्यो रसादीनां प्रतीतिः केवलाच्च स्वाभिधानादप्रतीतिः। तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याच्छिप्तत्वमेव रसादीनाम्, न त्वभिधेयत्वं कथञ्चि"-दिति।

एवञ्चास्य सर्वदा व्यङ्ग्यत्वेन किं फलमिति चेत्; यतः स एवाह "साररूपो ह्यर्थः स्वशब्दानभिधेयत्वेन प्रकाशितः सुतरां शोभामावहति। प्रसिद्धिश्चेयमस्त्येव विदग्धपरिषत्सु, यदभिमततरं वस्तु व्यङ्ग्यत्वेन प्रकाश्यते न वाच्यत्वेन" इति। तस्माद्रमणीयताया इतरापेक्षया रस एव सद्भाव इति प्रपञ्चितम्।

अथास्य रसस्य प्रयोजनमभिधानीयम्। वेदशास्त्रपुराणातिरिक्तस्य वाङ्मयस्य काव्यस्वरूपस्य यावन्ति प्रयोजनानि तावन्ति रसविषयेऽप्याकलनीयान्येव। यदि न स्यात्प्रयोजनं रसस्य तन्नास्त्येव काव्यस्यापि।

रसस्य प्रयोजनम्।

रसवत्त्वेनैव काव्यस्योपादेयत्वात्। रसस्तावदानन्दस्वरूप इत्युत्तरत्र वक्ष्यते। यदि काव्ये रसो निबध्येत सर्वेऽपि तत्र प्रवर्तन्ते। यथा प्रभुसुहृद्वाक्ययोरादराभावेऽपि कामिनीविलासे सर्वेषामादरस्तथा वेदपुराणवाक्ययोः प्रवृत्त्यभावेऽपि रसमयत्वात्काव्यस्य पठने प्रवृत्तिर्दृश्यते। अतश्चान्याकर्षणशीलो रस इति फलितम्।

वस्तुतस्तु रसस्येदं मुख्यं प्रयोजनं तदास्वादनजनितगलितवेद्यान्तररूपानन्दानुभव एव। क्षणभङ्गुरेऽस्मिन् संसारे न किञ्चिदवशिष्यते। सुकृतदुष्कृते अपि पुनर्जन्मकारणे। तस्मात्सर्वैरपि सहृदयै-

रानन्द एवावश्यं भोग्यः। द्विविधश्चायमानन्दः पारलौकिक ऐहिकश्चेति। पारलौकिकस्तु नित्यो निर्विषयश्च। ऐहिकस्त्वनित्यो लौकिकविषयविशिष्टश्च। प्रथमः परब्रह्मास्वादस्वरूपो द्वितीयश्च परब्रह्मास्वादसब्रह्मचारी। परब्रह्मास्वाद एवोत्कृष्ट एतयोः, परं तु न स सर्वजनसुलभः। सकलमिदं चराचरात्मकं प्रपञ्चं मिथ्याभूतमिति निश्चित्य इन्द्रियार्थेभ्यश्चेन्द्रियाणि निवर्त्य मोक्षमध्यवस्यद्भिर्मुमुक्षुभिर्मुनिभिरेव केवलं लभ्यः। "आनन्दो ब्रह्मेति व्यजाना"दिति श्रुतेरयमेवानन्दो ब्रह्मपदवाच्यः।

ये तावल्लौकिकीं वासनां परित्यक्तुमसमर्थास्तैस्तावद्रसास्वादनसमुद्भूतो विगलितवेद्यान्तरो लौकिक एवानन्दोऽनुभवनीयः। यद्येतदानन्दस्यानुभवयोग्यता नास्तीति कश्चिन्मन्येत तदावस्थाचतुष्टयपरिगणनं व्यर्थमेव भवेत्। गार्हस्थ्ये खलु जनस्य लौकिकानन्दानुभवयोग्यता वर्त्तत एव। चरमावस्थयोस्तावदलौकिकानन्दविषय एव यतितव्यम्। ततश्च सर्वसहृदयजन्मनो मुख्यं प्रयोजनं रसास्वादनरूपो वा परब्रह्मास्वादनरूपो वाऽनन्द एवेति फलितम्। अत एवेतरशास्त्रापेक्षया साहित्यमीमांसाशास्त्रस्य, ततश्च शारीरमीमांसाशास्त्रस्य च प्राधान्यमवश्यमेवोररीकर्त्तव्यम्। तथा च रसस्य मुख्यप्रतिपाद्यत्वादानन्दस्वरूपत्वाच्च यस्मिन् काव्ये रसो न निबध्यते तदसत्काव्यमिति, तन्मूला च "काव्यालापांश्च वर्जये"दिति हि स्मृतिरिति चाकलय्य सर्वैरपि कविभिः सहृदयैश्च रसपरतन्त्रतयैव भाव्यमिति दिक्।

विभावादिसामग्रीनिरूपणम्।

अथ प्रतिपादनीये च रसस्वरूपे तत्कारणसामग्र्या अवगतिं विना तत्स्वरूपं न सम्यग्ज्ञायत इति तत्सामग्रीनिरूपणमेवादौ क्रियते। विभावानुभावव्यभिचारिणो रससामग्री। तत्र विभावाः कारणानि। रत्यादिस्थायिभावानां लोके तत्तन्नायकगतानां यान्यालम्बनतया उद्दीपनतया वा कारणत्वेन प्रसिद्धानि तान्येषु काव्य-

नाट्ययोर्व्यज्यमानेषु विभावशब्देन व्यपदिश्यन्ते। वासनारूपतयाति-सूक्ष्मेण रूपेणावस्थितान् रत्यादीन् स्थायिनो विभावयन्ति आस्वादन-योग्यतां नयन्तीति विभावनाव्यापारयोगाद्विभावाः। तस्माद्रसनिष्पत्ति-कारणता विभावानां सिद्धा। वागाद्यभिनयसहिताः स्थायिव्यभि-चारिलक्षणाश्चित्तवृत्तयो विभाव्यन्ते विशिष्टतया ज्ञायन्ते यैस्ते विभावा इत्यपरमनुसन्धेयम्। ते चालम्बनोद्दीपनभेदेन द्विविधाः। रसस्य सम-वायिकारणमालम्बनविभावः—नायिका नायकश्च। उद्भूते च रत्यादौ यानि तत्पोषकात्मकत्वेन वर्त्तन्ते तान्युद्दीपनकारणानि विभावाः। इतरत्सर्वं कारणजातमुद्दीपनविभावः। स चतुर्विधः। आलम्बनगुण-चेष्टालङ्कृति-तटस्थ-भेदात्। रूपयौवनादिरालम्बनगुणः, तच्चेष्टा च यौवनप्रादुर्भूतहावभावादिरूपा। नूपुराङ्गदाद्यलङ्करणम्। मलया-निलचन्द्राद्यास्तु तटस्थाः।

अनुभावाः कार्याणि। रत्यादिस्थायिभावानां लोके यानि प्रसि-द्धानि कार्याणि तानि काव्यनाट्ययोरनुभावशब्दव्यपदेश्यतां भजन्ते। रत्यादिस्थायिनोऽनुभावयन्ति अनुभवविषयान् कुर्वन्तीति अनुभावना-व्यापारयोगादनुभावाः। रत्यादिजन्यानि नायिकादिभेदेन नाना-विधानि कटाक्षभुजाक्षेपप्रभृतीनि कार्याण्यनुभावा इत्यर्थः। स्थायि-व्यभिचारिलक्षणं चित्तवृत्तिविशेषं सामाजिकजनोऽनुभवन्ननुभाव्यते साक्षात्कार्यते यैस्तेऽनुभावा इत्यपरमनुसन्धेयम्।

व्यभिचारिणः सहकारीणि। रत्यादिस्थायिभावैर्यानि सञ्चरन्ति तानि नाट्यकाव्ययोर्व्यभिचारिशब्देनोच्यन्ते। विशेषेणाभितः सर्वाङ्ग-व्यापितया रत्यादीन् स्थायिनः काव्ये चारयन्ति सञ्चारयन्ति मुहुर्मुहु-रभिव्यञ्जयन्तीति वा व्यभिचारणव्यापारयोगाद् व्यभिचारिणः। उल्लि-खितकार्य्यस्य रत्यादेर्जनने झटिति प्रतीतौ वा सहायभूतानि निर्वेदा-दीनि त्रयस्त्रिंशद्भावा व्यभिचारिणः। एवमेषैव रससामग्री। परन्तु केचित्—

"विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वादुत्वं स्थायी भावो रसः स्मृतः ॥"

( दशरूपकम्, प्रतापरुद्रयशोभूषणञ्च )

इति पठित्वा सात्त्विका अपि रससामग्रीत्वेनोपवर्णिताः । परगतसुखादिभावनया भावितान्तःकरणत्वं सत्त्वम्, ततो भवाः सात्त्विकाः । ते चाष्टौ—

"स्तम्भः पुलकरोमाञ्चौ स्वेदो वैवर्ण्यवेपथू ।
अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्त्तिताः ॥"

इति । तन्मते तेषामपि रसकारणत्वम् ।

बहुभिस्तु पृथक्तया न गणिताः सात्त्विकाः । इदमत्रानुसन्धेयम्—यद्यपि सात्त्विकानामपि भावत्वं सुस्थमेव तथापि तेषामनुभावरूपत्वान्न ते पृथग्गण्यन्ते । विभावादिदर्शनजन्या अनुरागनिर्वेदादिमनोवृत्तयो विभावादितन्मयीभवनरूपेण सत्त्वशब्दाभिधेयेन सामाजिकमनसोऽत्यन्तानुकूल्यजन्येनासाधारणकारणेनावस्थान्तरमापन्नाः स्तम्भादयः सात्त्विका अनुभावाश्च तादृशा एव । हेमचन्द्रेण तावदुपाधिभेदेन भेदः स्वीकृतः । तथाहि—

"बाह्यास्तु स्तम्भादयः शरीरधर्मा अनुभावाय ते चान्तरालिकान् भावान् गमयन्तः परमार्थतो रतिनिर्वेदादिगमका इति फलितम् ।"

( काव्यानुशासनम्, पृ १०० )

अत एव तेन पृथगनुभावा न विवेचिताः ।

सर्वालङ्कारिकप्रमाणभूतैर्नाट्याचार्यैर्भरतमुनिभिरपि सात्त्विकाः पृथङ् न गणिताः । "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति"-रिति हि तन्निर्मितं सूत्रम् । तस्मात्सात्त्विकास्त्वनुभावाभिन्ना एवेति सहृदयैराकलनीयमिति दर्शितेयं रससामग्रीदिक् ।

( क्रमशः )

# विद्याप्रस्थानम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—कालीघट्टवास्तव्यः श्रीगुरुपदशर्म्महालदारः ]

अर्थाश्च तेषां प्रदर्शिताः। शब्दज्ञानाय च निरुक्तमाकाङ्क्षितमिति शब्दास्त्रिविधा उक्ताः प्रत्यक्षवृत्तयः, परोक्षवृत्तयोऽतिपरोक्षवृत्तयश्चेति। तत्र प्रत्यक्षवृत्तयः शब्दा उक्तक्रियाः परोक्षवृत्तयोऽन्तर्लीनक्रियाः, अतिपरोक्षवृत्तयस्तु यत्र परोक्षवृत्तिमापाद्य प्रत्यक्षवृत्त्या ते निर्वक्तव्याः'। महाभारते निरुक्तेरुदाहरणं यथा—

किं कारणं जरत्कारोर्नामैतत् प्रथितं भुवि।
जरत्कारुनिरुक्तित्वं यथावद् वक्तुमर्हसि॥

सौतिरुवाच—

जरेति क्षयमाहुर्वै दारुणं कारुसंज्ञितम्।
शरीरं कारु तस्यासीत् तस्य धीमाञ्छनैः शनैः॥
क्षपयामास तीव्रेण तपसेत्यत उच्यते।
जरत्कारुरिति ब्रह्मन् वासुकेर्भगिनी तथा॥ इति।

वेदानामुपवेदा ये सन्ति त इदानीमुच्यन्ते। आयुर्वेदश्चिकित्साशास्त्रम्। स च चतुर्व्यूहो रोगो रोगहेतुरारोग्यं भैषज्यमिति। तस्य निरुक्तिर्यथा भावप्रकाशे—

'अनेन पुरुषो यस्मादायुर्विन्दति वेत्ति वा।
तस्मान्मुनिवरैरेष आयुर्वेद इति स्मृतः॥' इति।

ब्रह्मवैवर्त्ते वैद्यानामपि लक्षणमुक्तम्—

"आयुर्वेदस्य विज्ञाता चिकित्सासु यथार्थवित्।
धर्मिष्ठश्च दयालुश्च तेन वैद्यः प्रकीर्त्तितः॥

व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः ।

एतद् वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥ इति ।"

चरणव्यूहमते आयुर्वेद ऋग्वेदस्य उपवेदः, वैद्यशास्त्रमते तु स आथर्वण इति । तथा हि चरके सूत्रस्थानम्—"तत्र चेत् प्रष्टारः स्युश्चतुर्णामृक्सामयजुरथर्ववेदानां कं वेदमुपदिशन्त्यायुर्वेदविदः, तत्र भिषजा पृष्टेनैवं चतुर्णामृक् सामयजुरथर्ववेदानामात्मनोऽथर्ववेदे भक्तिरादेश्या । वेदो ह्याथर्वणः स्वस्त्ययनबलिमङ्गलहोमप्रायश्चित्तोपवासमन्त्रादिपरिसंग्रहाच्चिकित्सां प्राह" इति । तत्र पौराणिकाश्चाहुः—

"ऋग्यजुःसामाथर्व्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः ।

विचिन्त्य तेषामर्थं चैवायुर्वेदं चकार सः ॥ इति ।

गवायुर्वेदस्य चान्तर्भाव आयुर्वेदे बोद्धव्यः ।

धनुर्वेद उपवेदो यजुर्वेदस्यैव भवति । तदुक्तं चरणव्यूहे भगवता शौनकेन 'यजुर्वेदस्य धनुर्वेद' इति । चतुर्णामाश्रमाणां ये धर्माः सन्ति तेषां रक्षक इव धनुर्वेदः । रक्षणाभावे सर्वा आश्रममर्य्यादा भिद्येरन्, धर्म्माश्च यथाभिमतकार्य्यादिना दुष्येयुरिति । तस्मादपरविद्यायां धनुर्वेदस्य चान्तर्भावः । यद्यपि धनुःशब्दश्चापे रूढस्तथापि स लक्षणया रक्षयितॄणामायुधमात्रे वर्त्तते । स्मरति च तत्र भगवानग्निः—

"चतुष्पादं धनुर्वेदं वेदे पञ्चविधं द्विज ।

रथनागाश्वपत्तीनां योधांश्चाश्रित्य कीर्त्तितम् ॥

यन्त्रमुक्तं पाणिमुक्तं मुक्तसन्धारितं तथा ।

अमुक्तं बाहुयुद्धञ्च पञ्चधा तत् प्रकीर्त्तितम् ॥" इति ।

इह खलु यन्त्रशब्देन आग्नेयमस्त्रं बोद्धव्यम् । न ह्येतत् प्राचीनकालेऽपि लोकानामविदितव्यापारमासीत् ।

"आग्नेयमस्त्रं लब्ध्वा च भार्गवात् सगरो नृपः ।

जिगाय पृथिवीं हत्वा तालजङ्घान् स हैहयान् ॥"

इत्येवमादिस्मरणात् ।

पादचतुष्टयात्मको धनुर्वेदो भगवता विश्वामित्रेण प्रणीतः। तत्र प्रथमो दीक्षापादो द्वितीयः संग्रहपादस्तृतीयः सिद्धिपादश्चतुर्थः प्रयोगपाद इति पादयोजना। एवं तत्र येषामधिकारस्तेऽपि सर्व्वे चतुरङ्गव्यवस्थातश्चतुर्व्विधा भवन्ति।

गन्धर्व्ववेद उपवेदः सामवेदस्य भवति। तदुक्तं चरणव्यूहे 'साम-वेदस्य गन्धर्व्ववेद' इति। गन्धर्व्वो देवयोनिस्तद्भेदा यथा—

हाहा हूहूश्चित्ररथो हंसो विश्वावसुस्तथा।
गोमायुस्तुम्बुरुर्नन्दिरेवमाद्याश्च ते स्मृताः॥

नाट्याचार्य्येण भरतेनैव गन्धर्व्ववेद उपवर्णितः। तत्र नृत्यगीतवाद्या-दिभेदा उक्ताः। आराधनसंसिद्धये तेषामपरविद्यास्वन्तर्भावः। गीता-दिभिराराधनञ्च प्रसिद्धम्। तदुक्तं काशीखण्डे

'गीतज्ञो यदि गीतेन नाप्नोति परमं पदम्।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते॥' इति॥
गीतविद्याप्रभावेन देवर्षिर्नारदो महान्।
मान्यो वैष्णवलोके वै श्रीशम्भोश्चातिवल्लभः॥
तुम्बुरुर्नारदश्चोभौ देवानामपि दुर्ल्लभौ।
नादरूपी शिवः साक्षान्नादतत्त्वविदौ हि तौ॥
यदि गीतं क्वचिद् गीतं श्रीमच्छिवहरात्मकम्।
मोक्षं तु तत्फलं प्राहुः सान्निध्यमथवा तयोः॥' इति च।

गीतादिविद्याभेदे याः कलाश्चतुःषष्टिविधाः शैवतन्त्रोक्तास्ताः सर्व्वा एवं वर्त्तन्ते। १—गीतम्, २—वाद्यम्, ३—नृत्यम्, ४—नाट्यम्, ५—आलेख्यम्, ६—विशेषकच्छेद्यम्, ७—तण्डुलकुसुमवलिविकाराः, ८—पुष्पास्तरणम्, ९—दशनवसनाङ्गरागाः, १०—मणिभूमिकाकर्म्म, ११—शयनरचनम्, १२—उदकवाद्यम्, १३—उदकघातः, १४—चित्रायोगः, १५—मालाग्रथनविकल्पाः, १६—केशशेखरापीडयोजनम्, १७—नेपथ्ययोगः, १८—कर्णपत्रभङ्गाः, १९—गन्धयुक्तिः, २०—भूषण-

योजनम्, २१—इन्द्रजालम्, २२—कौचुमारयोगाः, २३—हस्तलाघवम्, २४—चित्रशाकपूपभक्ष्यविकारक्रिया, २५—पानकरसरागासवयोजनम्, २६—सूचीवापकर्म्माणि, २७—सूत्रक्रीडा, २८—प्रहेलिका, २९—प्रतिमाला, ३०—दुर्वचकयोगाः, ३१—पुस्तकवाचनम्, ३२—नाटिकाख्यायिकादर्शनम्, ३३—काव्यसमस्यापूरणम्, ३४—पट्टिकावेत्रवाणविकल्पाः, ३५—तर्कुकर्म्माणि, ३६—तक्षणम्, ३७—वास्तुविद्या, ३८—रूप्यरत्नपरीक्षा, ३९—धातुवादः, ४०—मणिरागज्ञानम्, ४१—आकरज्ञानम्, ४२—वृक्षायुर्वेदयोगाः, ४३—मेषकुक्कुटलावकयुद्धविधिः, ४४—शुकसारिकाप्रलापनम्, ४५—उत्सादनम्, ४६—केशमार्जनकौशलम् ४७—अक्षरमुष्टिकाकथनम्, ४८—म्लेच्छितकविकल्पाः ४९—देशभाषाज्ञानम्, ५०—पुष्पशकटिकानिमित्तज्ञानम्, ५१—यन्त्रमातृका, ५२—धारणमातृका, ५३—सम्पाठ्यम्, ५४—मानसी काव्यक्रिया, ५५—क्रियाविकल्पः, ५६—छलितकयोगः, ५७—अभिधानकोषच्छन्दोज्ञानम्, ५८—वस्त्रगोपनानि, ५९—द्यूतविशेषः, ६०—आकर्षक्रीडा, ६१—बालकक्रीडनकानि, ६२—वैनायकीविद्याज्ञानम्, ६३—वैजयिकविद्याज्ञानम्, ६४—वैतालिकीविद्याज्ञानम्। इति। इमाश्च विद्याः संसारयात्रानुवर्त्तनाय कौटिल्यादिपादैः शास्त्रान्तरे व्यवस्थापिताः।

अर्थशास्त्रमपि बहुविधं शिल्पशास्त्रं गजशास्त्रं हयशास्त्रं नीतिशास्त्रमित्येवमादि। तेषां प्रपञ्च आकरे द्रष्टव्यः। यद्यपि अर्थेन धर्मो भवतीति अर्थशास्त्रस्य प्रयोजनं तथापि धर्म्मशास्त्रार्थशास्त्रयोर्विरोधे ह्यर्थशास्त्रस्य बाध एव। धर्म्मशास्त्रात् तस्य दुर्बलत्वात्। तदुक्तं भगवता याज्ञवल्क्येन—

"स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः।
अर्थशास्त्रात्तु बलवद् धर्म्मशास्त्रमिति स्थितिः॥" इति।

शास्त्रान्तरे च--

"स्मृत्यर्थेन विरोधे हि अर्थशास्त्रस्य बाधनम् ।
परस्परविरोधे तु न्याययुक्तं प्रमाणवत् ॥" इति ।

एतच्च विवृतं मिताक्षरायाम्—"यद्यपि समानकर्त्तृकतया अर्थशास्त्रधर्म्मशास्त्रयोः स्वरूपगतो विशेषो नास्ति, तथापि प्रमेयस्य धर्म्मस्य प्राधान्यादर्थस्य चाप्राधान्याद् धर्म्मशास्त्रं बलवदित्यभिप्रायः" इति । तदेव—

"आततायिनमायान्तं हन्यादेवाविचारयन् ।
नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥"

इति वचनमर्थशास्त्रत्वेन "मा हिंस्यात् सर्व्वा भूतानी"ति धर्म्मशास्त्रेण बाध्यते ।

उपवेदा एवं सुस्थिताः । इदानीं वेदानामुपाङ्गानि वर्ण्यन्ते । तत्र प्रथमं पुराणं गृह्यते । आथर्व्वणिका मन्यन्ते यज्ञोच्छिष्टं पुराणमिति । 'ऋचः सामानि छन्दांसि पुराणं यजुषा सह'ति श्रुतेः । तच्च 'सदेव सोम्येदमग्र आसीदि'त्यादिकं जगदवस्थानमुपक्रम्य सर्गप्रतिपादकं वाक्यजातं भवति । महर्षिः पाराशरो योगज्ञानादिसम्पन्नस्तद्वक्ता किलेति प्रसिद्धिः । तदुक्तं रेवामाहात्म्ये—'अष्टादशपुराणानां वक्ता सत्यवती सुत' इति । तेषां श्रवणफलं चोक्तं भगवता मनुना—

'स्वाध्यायं श्रावयेत् पित्रे धर्म्मशास्त्राणि चैव हि ।
आख्यानानीतिहासांश्च पुराणानि खिलानि च ॥' इति ।

( क्रमशः )

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| June, 1931. | १८५३ शकीये ज्यैष्ठे १४वर्षस्य २य-संख्या | Vol. XIV. No. 2. |


## उपनिषत्कथा

( छान्दोग्ये तृतीयावृत्तिः )


[ निबन्धकः—महामहोपाध्यायः श्रीदुर्गाचरणसांख्यवेदान्ततीर्थः ]


अस्ति छान्दोग्योपनिषदि चतुर्थप्रपाठके तृतीयखण्डे सत्यकामाख्यायिका नाम परमरमणीयः कथाभागः। यमधिकृत्य गवेषणागरीयांसः पाश्चात्त्या विद्वांसस्तदनुवर्त्तिनोऽस्मद्देशीयाश्च केचनार्वाचीनाः सत्यसन्धस्यापि सत्यकामस्य स्वरूपं स्वात्मानुरूपं न्यरूपयन्। तद्विषये चास्मदीयं वक्तव्यं यथास्थानं निवेदयिष्यामः। साम्प्रतं प्रस्तुतार्थप्रस्तावनामेवारचयामः।

सत्यकामो नामान्वर्थनामा कश्चिद् ब्राह्मणतनयः शैशवपदवीमनुभवन्नासीत्। स च जवालाया मातुरपत्यमिति जावाल इत्यपि गीयते। मृतपितृकोऽसौ शिशुरात्मन उपनयनयोग्यं वयः समुपस्थितमित्यनुचिन्तयन् "जवालां मातरमामन्त्रयाञ्चक्रे—ब्रह्मचर्य्यं भवति, विवत्स्यामि" इति। ब्रह्मचर्य्यवासो ह्युपनयनानन्तरमेव सम्भवति। य

एवोपनेता वेददाता गुरुः, तस्मिन्नेव ब्रह्मचर्य्यं चरन्ति ब्रह्मचारिण इति हि श्रुतिस्मृतिवादाः । ततश्च ब्रह्मचर्य्यप्रार्थनयैव तस्योपनयनप्रार्थनमपि निःशब्दं विज्ञायत एव । उपनयनग्रहणे हि गोत्रपरिचयो नितरामपेक्ष्यते, इत्थमन्तराकलयन् सत्यकामः पुनरपि मातरमाह— "भवति, किंगोत्रोऽस्मि", तन्मे निवेद्यताम् । तदहं गुरवे यथायथं निवेदयिष्यामीति ।"

प्रियपुत्त्रेण सप्रश्रयमेवमभिधीयमाना जवाला स्वात्मनो गोत्रपरिचयेऽनभिज्ञतामावेदयन्ती सादरं "हैनमुवाच—नाहमेतद् वेद तात यद्गोत्रस्त्वमसि । बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे, साहमेतन्न वेद यद्गोत्रस्त्वमसि, जवाला तु नामाहमस्मि, सत्यकामो नाम त्वमसि, स सत्यकाम एव जावालो ब्रवीथा इति ।"

एतस्मादेवं प्रतीयते यत्—जवाला किल गृहधर्म्मरता गृहस्थोचितां परिजनपरिचर्य्यामभ्यागतसत्क्रियाञ्च पर्य्याप्तमाचरन्ती परिचारिणीव तदेकव्यग्रमानसासीत् । वयश्च यौवनमात्रं न प्रौढपदवीमयासीत् । अजातविवेकविज्ञानावसरे तस्मिन्नेव वयसि सा सत्यकामं सुषुवे । ततश्च गृहकर्म्मणि गुरुशुश्रूषादौ च समाहितचित्ततया, यौवनस्य च स्वभावत एव परिणामचिन्ताविमुखतया जवाला किल ज्ञातव्यमपि पत्युर्वंशपरिचयादिकं नाज्ञासीत् । तस्मादेव सा स्वकीयमज्ञानमनाशङ्कमाविष्कुर्वती न जिह्रियमाप ।

एतद्व्याख्यानावसरे च भगवन्तः शङ्करपादा अप्येवमेवाहुः—"बहुभर्त्तृगृहे परिचर्य्याजातमतिथ्यभ्यागतादि चरन्ती अहं परिचारिणी—परिचरन्तीति परिचरणशीला एवाहम् । परिचरणचित्ततया गोत्रादिस्मरणे मम मनो नाभूत्···। तदैव ते पितोपरतः, अतोऽनाथाहम्, साहमेतन्न वेद—यद्गोत्रस्त्वमसि" इत्यादि ।

अत्र हि जवालायाः कुलगोत्रादिपरिचयानभिज्ञाने कारणत्रयमुपन्यस्तमाचार्य्यपादैः—प्रथमं गृहकर्म्मव्यापृतता, द्वितीयं वयसोऽल्पता,

तृतीयं तदानीं पत्युरुपरमः, येन सा सहायसम्पत्परिहीना अनाथा संवृत्ता। एभिरेव कारणैरलब्धावसरा गोत्रसंविज्ञाने जवाला स्वात्मनो सत्यधर्म्मपरायणतामुपक्षिपन्ती निराशङ्कमात्मजमाह—सत्यकाम, गच्छ त्वं गुरुसमीपं, स चेत् त्वां पृच्छेत्, तर्हि ब्रवीथाः—अहमस्मि जवालाया अपत्यं जावालः सत्यकामो नामेति। एवमभिधाय सा सत्यकामं तनयं गुरवे विसर्जयामास।

मात्रैवमभिधाय विसर्जितः सत्यकामः सोत्साहं गुरुमभिप्रतस्थे। समुचितगुरुलिप्सया प्रतिष्ठमानः "स ह हारिद्रुमतं (हरिद्रुमतोऽपत्यं) गौतममेत्योवाच—ब्रह्मचर्य्यं भगवति वत्स्यामि, उपेयां भगवन्तमिति।"

उपनयनार्थं गुरुकुलमुपेत्य स्वमाशयञ्च गुरवे निवेद्य यावदसौ तद्वचनं प्रतीक्षते, तावदेव गुरुर्गौतमस्तत्परिचयजिज्ञासया "तं होवाच—किंगोत्रो नु सोम्यासीति"। वत्स, यद्यस्मत्त उपनयनमभिकाङ्क्षसि, तर्हि प्रथममात्मनो गोत्रादिकमावेदय, अन्यथा कया विधया कथं वा त्वमुपनेतव्यो भवेः। भगवता गौतमेनैवमभिधीयमानः सत्यसन्धः सत्यकामः "स होवाच—नाहमेतद्वेद भोः, यद्गोत्रोऽहमस्मि" इति। भगवन्, न केवलमहमेवात्र असंविज्ञानदोषभाक्, मदेकपुत्रा जनन्यपि नैतद्विजानाति। एतद्विविदिषया चाहम्—"अपृच्छं मातरं सापि चैतद्विषयेऽसंविज्ञानं प्रख्यापयन्ती—"सा प्रत्यब्रवीत्—बह्वहं चरन्ती परिचारिणी" इत्यादि।

एवमभिहितो गौतमः शिशोः सत्यकामस्य ब्राह्मणकुमारोचितमेवमार्जवं सत्यवादित्वञ्चावेक्ष्य प्रसन्नमनाः "तं होवाच—नैतदब्राह्मणो विवक्तुमर्हति। समिधं सोम्याहर, उप त्वानेष्ये, न सत्यादगा इति।" सत्यवदनं हि ब्राह्मणस्य शीलम्। ब्राह्मणो हि सत्यानुरोधेन सम्पदो विजहाति, मानमपचिनोति, ग्लानिमनुगच्छति, मरणमप्यङ्गीकरोति, तथापि न विजहाति सत्यम्। यतोऽयमात्मनोऽभीष्टसिद्धयेऽनृतमना-

श्चित्थं सत्यमवादीत्, तन्नूनमयं ब्राह्मणकुमार इति मनसि समाकलय्य उपनयनविधौ स्वसम्मतिमाज्ञापयन्नाश्वासयंश्च वचनोपष्टम्भेन सत्यकामं समिदाहरणार्थमादिदेश। सोऽपि तदादेशं शिरसि धारयन् गुर्वर्थं समिधमाजहार। गौतमश्च स्वच्छन्दानुवर्त्तिनं कुमारं सत्यकामं यथान्यायमुपनिन्ये।

परचर्चाचातुर्य्यमार्जवमित्याकलयन्तः स्वान्तःकरणवृत्तिभिर्जगदुपरञ्जयन्तोऽनल्पकल्पनाकुशलाः केचित् खलु वैदेशिकास्तच्चित्तदत्ताशया अस्मदीयाश्च केचन प्राज्ञम्मन्या इदमेव सत्यकाम-जाबालोपाख्यानमधिकृत्य यथाभिमतं कल्पनाकौशलमाविष्कुर्वन्ति। ते हि शुद्धशीलामपि जबालां बहुपुरुषगामितया व्यभिचारिणीं कल्पयन्ति, सत्यकाममपि जारजत्वेन चित्रयन्ति, सत्यकामं प्रति जबालाया उक्तिमेव स्वपक्षे प्रमाणयन्ति, संस्कृतभाषायाञ्चात्मनो नवमिव प्रज्ञाप्रकर्षं प्रकटयन्ति। ते खलु गुरुपरम्पराधिगतविद्यानां शुद्धसत्त्वानामध्यात्मतत्त्वपरिशीलनव्रतानां वेदवेदान्तविश्रान्तमतीनामाचार्य्याणामपि वचांसि नाद्रियन्ते, गुरुपारम्पर्य्यं न बहुमन्यन्ते, न्यायं नावबुध्यन्ते, सत्पक्षं नाश्रयन्ते, परमात्मनो मनोवृत्तिमेव प्रमाणसारतया समालम्बन्ते। ते चात्रैवं जल्पन्ति—जबाला खलु न बाला, नापि मुग्धा ; सा तु पुत्रवत्यापन्नयौवनापि सती यदात्मनोऽवश्यज्ञातव्यमपि पत्युः परिचयं नाम च निर्वक्तुं न शशाक, तस्मान्नूनमियं व्यभिचारिणी वेश्याप्रायैव। तत एव च केनायमुत्पादित इति निर्णेतुमशक्यत्वादेव "एतन्न वेद" इत्याद्याह।

सा हि यौवने वयसि वर्त्तमाना दासीवृत्त्या च जीवन्ती अस्वामिकतया बहूनां पुरुषाणामुपभोग्या ध्रुवमासीत्। अनियतपुरुषगामितया 'काकतालीय'न्यायेन समुत्पन्नः पुत्रः कस्येति विवेक्तुमशक्य एव। अशक्यत्वादेव तदवधारणे प्रयासमपहाय सत्यवादित्वमात्मनः, ख्यापयामास "नाहमेतद्वेद" इत्याद्युक्तिभिः। सा चेदेवं न भवेत्, कथं तर्हि

सा स्वयमेव "बहु अहं चरन्ती परिचारिणी यौवने त्वामलभे" इत्यादिभिर्वचनजातैरात्मनो बहुचारिणीभावं परिचारिणीभावञ्च निःशङ्कं कथयेत् ? अतस्तदुक्तिभिरेव तस्या दास्यं व्यभिचारपरत्वञ्च सम्यगवगम्यते। विशेषतश्च पुरा किल भारते वर्षे दाम्पत्यसम्बन्ध इदानीमिव नासीत्, येन तथाविधाचारो दोषदृष्ट्या परिकल्प्येत। अतश्चैवमध्यवसातव्यम्, यद् जबाला न जात्या ब्राह्मणी, तदपत्यं सत्यकामश्च न जात्या ब्राह्मणः, परन्तु सत्यवादित्वेन ब्राह्मणगुणसम्पन्नः। य एव हि सत्यवादी, स एव ब्राह्मणाधिकारं लभते। सत्यकामश्च सत्यवादी, ततः सोऽपि ब्राह्मणाधिकारं कथं न लभताम् इति मनसि निधाय गौतमेन तदुपनयनमनुज्ञातमित्यतो वर्णादिविभागोऽपि तदानीमिदानीन्तन इव नासीदित्यप्यनुमीयतामित्येवमनल्पकल्पनाकल्पवल्लरीमधिरूढास्ते यथेच्छं जल्पन्ति। तेषां मुखमुद्रणायेदमभिधीयते। ( क्रमशः )

---

## विद्याप्रस्थानम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—कालीघट्टवास्तव्यः श्रीगुरुपदहालदारः ]

शतपथीयसंवादतः पुराणलक्षणं बृहदारण्यकभाष्ये शङ्कराचार्यपादैरुक्तं पुराणमसद्वा इदमग्र आसीदिति। तदेव सायणाचार्य्य ऐतरेयब्राह्मणोपक्रमे—इदं वा अग्रे नैव किञ्चिदासीदित्यादिकं जगतः प्रागवस्थामुपक्रम्य सर्गप्रतिपादकं वाक्यजातं पुराणमिति। तत्रैव पौराणिका आहुः—

'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम्॥' इति।

शुकपरीक्षित्संवादे तु महदल्पव्यवस्थाभेदात् पुराणस्य द्वैविध्यम्

यत्र दशापि लक्षणानि पृथक् पृथङ्निरूप्यन्ते तन्महापुराणं, यत्र तु पञ्चसु लक्षणेषु अन्येषामन्तर्भावस्तदल्पमिति। तदुक्तं—

'सर्गोऽस्याथ विसर्गश्च वृत्तिरक्षान्तराणि च।
वंशानुचरितं वंशः संस्था हेतुरपाश्रयः॥
दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः।
केचित् पञ्चविधं ब्रह्मन् महदल्पव्यवस्थया॥' इति।

तत्र केचित् पञ्चविधमित्यस्यायमभिप्रायः—सर्गः प्रतिसर्गो वंशो मन्वन्तरं वंशानुचरितं चेति।

अष्टादशविधं पुराणम्। तद्भेदा विष्णुपुराणे वर्णिताः।—

ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा।
तथान्यन्नारदीयञ्च मार्कण्डेयञ्च सप्तमम्॥
आग्नेयमष्टमं चैव भविष्यं नवमं तथा॥
दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं स्मृतम्।
वाराहं द्वादशं चैव स्कान्दं चैव त्रयोदशम्॥
चतुर्दशं वामनञ्च कौर्म्मं पञ्चदशं स्मृतम्।
मात्स्यञ्च गारुडं चैव ब्रह्माण्डञ्च ततः परम्॥ इति।

तत्र भागवतं देवीभागवतमिति नीलकण्ठादयः शाक्ताः, श्रीधरादयस्तु सात्वता विष्णुभागवतमिति। अन्यैः पुनर्नागोजिभट्टादिभिर्विष्णुभागवतस्य पुराणत्वं स्वीकृत्य देवीभागवतस्य धर्म्मशास्त्रेष्वन्तर्भाव उक्तः। उदारस्तृतीयः कल्पः किन्तु देवीभागवतेनामौ सर्वथा विसंवदति। एवं वस्तुगतौ सत्यामस्मन्मते हि मीमांसादिवत् पूर्वभागो देवीभागवतमुत्तरभागो विष्णुभागवतमिति द्वयमेव मिलित्वा पञ्चमं भागवतं भवति। महाभारतपुराणशास्त्रादिभिश्चित्तप्रसादमलभमानस्य कृष्णद्वैपायनस्य नारदोपदेशतो विष्णुभागवतप्रणयनेन तल्लाभ इति शास्त्रप्रसिद्धेः।

तेषामुपपुराणान्यपि सन्ति। तानि यथा कौर्म्मे—

"आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ।
तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ॥
चतुर्थं शिवधर्म्माख्यं साक्षान्नन्दीशभाषितम् ।
दुर्व्वाससोक्तमाश्चर्य्यं नारदीयमतः परम् ॥
कापिलं वारुणं चैव तथैवौशनसेरितम् ।
ब्रह्माण्डं वामनं चैव कालिकाह्वयमेव च ॥
माहेश्वरं तथा शाम्बं सौरं सर्व्वार्थसञ्चयम् ।
पराशरोक्तं मारीचं तथैव भार्गवाह्वयम् ॥ इति ।

एतानि खलु निदर्शकत्वेन भवन्ति, वृहन्नन्दिकेश्वरादीनामुपपुराण-मध्ये पठितत्वात् । उपपुराणानामपि महदल्पव्यवस्थाभेदात् पूर्व्वोक्तं दंशलक्षणवत्त्वं पञ्चलक्षणवत्त्वं वा बोध्यम् ।

अथ स्मृतिपदवाच्यं धर्म्मशास्त्रम् । मन्वादयस्तस्य स्मर्त्तारो भवन्ति । उक्तञ्च—

"मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिरो-
यमापस्तम्बसंवर्त्ताः कात्यायनवृहस्पती ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ॥
शातातपो वशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः ॥" इति ।

एते प्राधान्यादुक्ता अन्ये तु वृद्ध-देवल-सोम-जमदग्नि-प्रजापति-विश्वामित्र-जातूकर्ण-वृद्धशातातप-पैठीनसि-पितामह-बौधायन-जावालि-च्यवन-मरीचि-कश्यपादय इति । तत्रापि मनोः प्राधान्यं सर्वतो ग्राह्यम् । यदाह भगवान् वृहस्पतिः—

"वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोः स्मृतम् ।
मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते ॥" इति ।

अन्येषामपि स्मृतयो वर्णाश्रमधर्म्मविशेषेषु प्रमाणमिति दिक् ।

यान्येव पञ्चरात्रविष्णुधर्म्मशिवधर्म्मरुद्राध्यासंग्रहादीनि सन्ति, तेषामपि धर्म्मशास्त्रेष्वन्तर्भावः । यदेव पुना रामायणं महाभारतञ्च तदपि

धर्म्मशास्त्रेषु गृहीतं वेदितव्यम्। सांख्यपातञ्जलयोर्धर्म्मशास्त्रान्तर्भावेऽपि स्वशब्देनैव दर्शनतया प्रस्थानभेदे तयोः पृथगेव सङ्गतिर्वाच्या।

अथ न्यायमीमांसे। ननु, यद्यपि आत्मसाक्षात्कारो मोक्षः, यद्यपि स आत्मसाक्षात्कारश्चित्तशुद्धिद्वारा नितरां प्रवर्त्तते, यद्यपि कर्म्माणि चित्तशुद्धिं जनयन्ति, यद्यपि वेदः कर्म्मादिप्रतिपादको भवति, तर्हि पुनर्दर्शनानां किं-प्रयोजनम् ?

उच्यते। विनैवोपदेशं स्वभावतो लोका देहातिरिक्तमात्मानमपह्नुवाना वेदबाह्यं शास्त्रमनुवर्त्तमानाः सुखमेव पुरुषार्थं मन्यमानाश्चानुभूयन्ते। तदेव तेषां रञ्जनार्थं लोकायतादिकं शास्त्रमपि प्रवृत्तम्। तत्कर्त्तारश्च आहुः—

"अङ्गनालिङ्गनाज्जन्यसुखमेव पुमर्थता।
कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते॥
लोकसिद्धो भवेद्राजा परेशो नापरः स्मृतः।
देहस्य नाशो मुक्तिस्तु न ज्ञानाद् मुक्तिरिष्यते॥
अत्र चत्वारि भूतानि भूमिवार्य्यनलानिलाः।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते॥
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्।
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः॥
देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः।
मम देहोऽयमित्युक्तिः सम्भवेदौपचारिकी॥" इति।

एतदुक्तं भवति देह एव चैतन्यापरपर्य्याय आत्मा यस्य विनाशो मरणाख्यो मोक्षस्तस्मात् कामिनीकाञ्चनादिसुखावाप्तिः पुरुषार्थता परमेश्वरश्च शशविषाणायत इति।

एवं वस्तुगतौ सत्यां तत्पक्षनिरसनाय प्राचीनैः सरणयो नानाविधा दर्शिताः। ताः सर्व्वा दर्शनशब्दाभिलप्या भवन्ति। दर्शनानि षट्। तदुक्तं हयशीर्षपञ्चरात्रे—

'गोतमस्य कणादस्य कपिलस्य पतञ्जलेः ।
व्यासस्य जैमिनेश्चापि दर्शनानि षडेव हि ॥' इति ।

षट्स्वपि दर्शनेषु सत्सु सर्वेषामभिप्राय एक एव भवति । आत्मनि तेषां तात्पर्य्यावधारणात् । अत एव दर्शनानां प्रयोजनं वेदबाह्य-चार्व्वाकादिमतनिराकरणपूर्वकं जगत्कारणतया सर्वत आत्मसंस्थापन-मिति । आत्मनि सिद्धे वेदप्रतिपाद्यं ब्रह्म स्वत एव सिध्यतीति प्रागेव युक्तितो न्यायशास्त्रेण प्रतिपादितमात्मा देहातिरिक्तो न तु देह इति । देहातिरिक्तत्वेऽपि न्यायशास्त्रे तस्य बहुत्वं गुणाश्रयत्वं चाभ्युपगतम् । बहिर्मुखप्रवणानामधिकारिणामेकपदे तस्य सूक्ष्मनिर्गुणत्वादिविषये प्रवेशासम्भवात् । शास्त्रञ्च—'अधिकारिविभेदेन शास्त्राण्युक्तान्यशेषत' इति । तदुक्तं परिशनिष्ठैरुदयनाचार्य्यपादैः—"आत्मा तु किं स्वप्रकाश-सुखस्वभावोऽन्यथा वेति पृच्छामः । आद्योऽसि चेत्, उपनिषदं पृच्छ । मध्यस्थोऽसि चेत्, अनुभवं पृच्छ । नैयायिकोऽसि चेत्, नैयायिक-सुखज्ञानातिरिक्तस्वभाव इति निश्चिनुयाः" इति ।

न्यायशास्त्रं द्विविधं कणाददर्शनमक्षपाददर्शनं चेति । तत्र—

'यदा चर्म्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥'

इत्येवमादि श्रौतप्रामाण्याद् दुःखहानोपायः श्रवणमनननिदिध्यासनै-रात्मसाक्षात्कारो यतः श्रवणोत्तरं मननमभ्युपेयं मननं चानुमानस्वरूप-मनुमानञ्च व्याप्तिज्ञानापेक्षं व्याप्तिज्ञानञ्च द्रव्यगुणकर्म्मसामान्यविशेष-समवायरूपपदार्थविवेकसापेक्षमिति पदार्थषट्कं कणादेन वैशेषिक-दर्शने व्यवस्थापितम् । तत्र भाष्यकारादिभिरधिकरणबलादभावोऽपि पदार्थत्वेन गृहीतः । अतः षण्णां भावपदार्थानामभावसप्तमानां द्रव्या-दीनां साधर्म्यवैधर्म्याभ्यां श्रुतिविहितमननदृढीकरणमेव वैशेषिकस्य प्रयोजनम् । तत्र परिशनिष्ठ उदयनाचार्य्य आह—

"न्यायचर्च्चेयमीशस्य मननव्यपदेशभाक्।
उपासनैव क्रियते श्रवणानन्तरागता॥" इति।

तदेव दशाध्यायं वैशेषिकदर्शनमुद्देशो लक्षणं परीक्षा चेति त्रिविधां शास्त्रप्रवृत्तिमादाय भगवता कणभक्षेण प्रणीतं तस्य भाष्यमपि पदार्थधर्म्मसंग्रहकारादिभिराचार्य्यैः सम्यगारचितम्। तत्र प्रथमाध्याय आह्निकद्वयशालिनि जातिमतां द्रव्यादीनां विचारः। द्वितीये तथाविधे भूतविशेषादिप्रतिपादनम्। तृतीये तथाविध आत्मान्तःकरणलक्षणम्। चतुर्थे तथाविधे शरीरतदुपयोगितादिनिर्णयः। पञ्चमे तथाविधे कर्म्मस्वरूपविवेचनम्। षष्ठे तथाविधे दानप्रतिग्रहादिधर्म्मप्रतिपादनम्। सप्तमे तथाविधे गुणसमवायनिरूपणम्। अष्टमे तथाविधे निर्विकल्पसविकल्पप्रत्यक्षप्रमाणचिन्तनम्। नवमे तथाविधे बुद्धिविशेषप्रतिपादनम्। शेषतो दशमे तथाविधेऽनुमानभेदविचारः। एवं वैशेषिकदर्शनेन वेदानामभ्युदयनिःश्रेयसहेतुत्वमात्मसाक्षात्काराय साधितं भवति।

तत्त्वज्ञानाद्दुःखोच्छेदलक्षणं निःश्रेयसमिति प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानमक्षपाददर्शने निरूपितम्। तदाह सूत्रकारः 'प्रमाण-प्रमेय-संशयप्रयोजन-दृष्टान्तसिद्धान्तावयव-तर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम' इति। एतेषां षोडशपदार्थानां लक्षणमपि निर्द्धारितं "प्रत्यक्षानुमानशब्दाः प्रमाणानी"त्येवमादे "विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानमि"त्यन्तादिति। एतद्दर्शनकारो भगवान् गौतमो य एव अक्षपाद इति नाम्ना प्रसिद्धः। तस्य भाष्यकारो भगवान् वात्स्यायनश्चाणक्यापरपर्य्यायस्तद्वार्त्तिककार उद्योतकरभारद्वाजस्तट्टीकाकारो वाचस्पतिमिश्रो यस्य परिशुद्धौ सर्वतन्त्रस्वतन्त्र उदयनाचार्य्यो नव्यन्यायसरणिमकार्षीत्। एते खलु सर्वे नैयायिकाः प्राचीना नवीनस्तु गङ्गेशोपाध्यायो यः प्रत्यक्षानुमानोपमानशब्दाख्यखण्डचतुष्टयात्मकं तत्त्वचिन्तामणिनामकं

प्रकरणग्रन्थं प्रणैषीत्, वर्द्धमानस्तत्त्वचिन्तामणिः प्रकाशकारः, यज्ञपतिस्तत्त्वचिन्तामणिः प्रभाकारः, पक्षधरमिश्रस्तत्त्वचिन्तामणेरालोककारः, रघुनाथशिरोमणिस्तत्त्वचिन्तामणेर्दीधितिकारः, मथुरानाथतर्कवागीशस्तत्त्वचिन्तामणिदीधित्योष्टीकाकारः, जगदीशगदाधरौ दीधितिटीकाकाराविति। एवं न्यायशास्त्रेषु पदार्थज्ञानदृढीकरणेन तत्त्वविचारसौकर्य्यं साधितम्। तदुक्तं वात्स्यायनेन—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्म्मणाम्।
आश्रयः सर्वधर्म्माणां विद्योद्देशे गरीयसी॥ इति।

इत्थं पदार्थाननुवदता न्यायशास्त्रेण गुणाश्रयत्वमभ्युपगम्य देहातिरिक्तत्वमात्मनः प्रतिपादितम्। तदुक्तं विज्ञानभिक्षुणा—'न्यायवैशेषिकाभ्यां सुखदुःखाद्यनुवादतो देहादिमात्रविवेकेनात्मा प्रथमभूमिकायामनुमापित' इति। तदनन्तरं सांख्ये तस्य गुणाश्रयत्वं निरसितम्। तन्निरसनेऽपि चात्मनो बहुत्वमभ्युपगतम्। अचतुरचेतसामधिकारिणामेकदा ब्रह्मण एकत्वे प्रतिष्ठाभावात्। तदेव छान्दोग्योपनिषदि श्रूयते—'सोपानारोहणवत् स्थूलादारभ्य सूक्ष्मं सूक्ष्मतरञ्च बुद्धिविषयं ज्ञापयित्वा तदतिरिक्ते स्वाराज्येऽभिषेक्ष्यामो'ति।

घटद्रष्टा घटाद्भिन्नः सर्वथा न घटो यथा।
देहद्रष्टा तथा देहो नाहमित्यादिरूपतः॥

इत्यादिना देहाद्यात्मनिरसनात् तत्त्वजिज्ञासुरात्मनो निर्गुणत्वप्रतिपादनपरे सांख्यशास्त्रे प्रवर्त्तते। सांख्यशास्त्रञ्च द्वेधा स्यात् कापिलमतेन हैरण्यगर्भमतेन वा। तत्र प्रथमेन विवेकवैराग्याभ्यासो द्वितीयेन तु भगवदुपास्तिरिति विशेषः। यथाहुः—

नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम्।
अत्र वः संशयो मा भूज् ज्ञानं सांख्यं परं मतम्॥ इति।

तत्त्वसंग्रहरूपेण सांख्यशास्त्रमथातस्तत्त्वसमाम्नाय इत्यादेस्त्रिविधं दुःखमित्यन्तात् कृपासिन्धुः कपिलमूर्त्तिरादिविद्वान् भगवान् नारायण

उपदिदेश। तत्र संक्षेपेण चतस्रो विधाः सम्भाव्यन्ते मूलप्रकृतिः प्रकृति-विकृतिर्विकृतिरनुभयः पुरुषश्चेति।

मूलप्रकृतिः प्रधानमव्यक्तं वा। मूलं सत्त्वानामादिरिति। प्रकृतिः प्रकरणात् प्रसवधर्मकत्वाद्वा। तथा हि ब्रह्मवैवर्त्तपुराणम्—

प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः।
सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्त्तिता॥ इति॥

सा च प्रधानमित्युच्यते, प्रकर्षेण धीयते स्थाप्यते निखिलमत्रेति निर्वचनात्। ननु, कथं सा प्रधानत्वेन गृहीता? उच्यते। सृष्टेरेकमूलत्वमभ्युपगमनीयम् अनेकेभ्यः कार्य्योत्पत्त्यभ्युपगमे कारणानवस्थानदोषप्रसङ्गात्। तन्त्वादयो ह्यवयवाः स्वांशगतैः सूक्ष्मैः परस्परं संयुज्यमाना अवयविनमुत्पादयन्ति, ते च तन्त्वादयः स्वांशभूतैरवयवैः संयुज्यमानैरुत्पाद्यन्ते, ते पुनस्त्रसरेणुभिः स्वकीयैरंशैः, त्रसरेणवश्च द्व्यणुकादिभिस्तथाभूतैः, द्व्यणुकादयः पुनः परमाणुभिस्तथाभूतैः, परमाणवोऽपि पुनः शक्तिविशेषाणां सङ्घातमात्रत्वात् तद्गतैः स्वांशैरिति न क्वचित् कारणव्यवस्थितिरुपलभ्यते। अत एव कारणव्यवस्थासंसिद्ध्यै नानाविधपरिणामशक्तियुक्तं स्वयं तु स्वरणादिस्वभावरहितं कृत्स्नस्य जगतः सर्व्वावस्थाश्रयस्वरूपमेकं द्रव्यं कारणत्वेनाश्रयणीयम्। तच्च कारणमव्यक्तं गुणसाम्यरूपा प्रकृतिरिति तत्कल्पनहेतूनुपन्यस्यति-सांख्यकारिका—

भेदानां परिमाणात् समन्वयाच्छक्तितः प्रवृत्तेश्च।
कारणकार्य्यविभागादविभागाद्वैश्वरूप्यस्य॥
कारणमस्त्यव्यक्तम्। इति।

अतः सैव प्रकृतिरेका स्वयमचेतनाऽनेकचेतनभोगापवर्गार्था सनातनी न कस्यचिद् विकृतिः, त्रिगुणं वैश्वरूप्यं तु गुणत्रयसाम्यप्रकृत्येककारणकमिति प्रकृतिः प्रकृतिरेवेति निश्चीयते।

सामान्याहङ्कारादयः सप्त प्रकृतयो विकृतयश्च भवन्ति। तद्यथा—

सामान्याहंकारो विशेषाहंकारं जनयतीति प्रकृतिः, स च प्रकृतेर्जात इति विकृतिर्विकारः। विशेषाहङ्कारः शब्दतन्मात्रं जनयतीति प्रकृतिः, स च सामान्याहङ्काराज्जात इति विकृतिः। शब्दतन्मात्रमाकाशमुत्पादयतीति प्रकृतिः, तच्च विशेषाहङ्कारादुत्पन्नमिति विकृतिः। स्पर्शतन्मात्रं वायुमुत्पादयतीति प्रकृतिः, तच्च विशेषाहङ्कारादुत्पद्यत इति विकृतिः। रूपतन्मात्रं तेज उत्पादयतीति प्रकृतिः, तच्च विशेषाहङ्कारादुत्पद्यत इति विकृतिः। रसतन्मात्रमप उत्पादयतीति प्रकृतिः, तच्च विशेषाहङ्कारादुत्पद्यत इति विकृतिः। गन्धतन्मात्रं पृथिवीमुत्पादयतीति प्रकृतिः, तच्च विशेषाहङ्कारादुत्पद्यत इति विकृतिः। अत उत्पादकत्वादुत्पन्नत्वाच्च सप्तेमाः प्रकृतिविकृतय उच्यन्ते।

विशेषाहङ्कारस्त्रिविधो वैकारिकस्तैजसो भूतादिश्चेति। तत्र वैकारिकः सात्त्विक इन्द्रियादिः, भूतादिस्तामसो महाभूतहेतुभूततन्मात्रहेतुः, तैजसो राजस उभयोरनुग्राहक इति केचित्। पौराणिकास्तु भूतादिस्तामसः क्षित्यादिहेतुभूततन्मात्रहेतुः, तैजसो राजस इन्द्रियादिः, वैकारिकः सात्त्विको देवादिरुभयोरनुग्राहक इति। तथा हि कौर्म्मे—

वैकारिकस्तैजसश्च भूतादिश्चैव तामसः।
त्रिविधोऽयमहंकारो महतः संबभूव ह॥
तैजसादीन्द्रियाणि स्युर्देवा वैकारिका दश।
एकादशं मनश्चात्र स्वगुणेनोभयात्मकम्॥
भूततन्मात्रसर्गस्तु भूतादेरभवन् प्रजाः। इति।

अत आकाशादीनि पञ्चमहाभूतानि श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि वागादीनि पञ्च कर्म्मेन्द्रियाणि मनश्चेति षोडशको गणः केवलविकारः। स एव गणः केवलविकारोऽन्यस्मादुत्पन्नो न तु ततोऽन्यदुत्पद्यत इति।

पुरुषस्तु निष्परिणामत्वेन न कस्यचित् प्रकृतिरन्येषामनुत्पादक-

त्वात्, न च कस्यचिद् विकृतिर्जनयितॄसकाशादनुत्पन्नत्वात्। एवं स पुरुष आत्मा-विरूपितः सूक्ष्मः सर्व्वगतो नित्यो निर्गुणो निर्धर्म्मको द्रष्टा चैतन्यमात्रवपुः क्षेत्रविदप्रसवधर्म्मा प्रतिशरीरं भिन्नश्चेति। पुरुषः पुराणत्वात् पुरि शयनाच्च। आत्मशब्दः स्वभावे वर्त्तते ब्रह्मभावात् सुखलक्षणत्वाच्च। सूक्ष्मो निरवयवत्वात्। सर्व्वगतः सर्व्वत्र पदार्थैर्जडादिभिरप्रतिहतत्वाद् विश्वव्यापकत्वाच्च। यदुक्तं बहुत्वे ससीमत्वमित्युत्सर्गो निरपवाद इति, तदेव गुणपदार्थे स्याज्ज्ञपदार्थे तु तदपवादो न विप्रतिपन्नः। नित्योऽकृतकत्वात्। निर्गुणः सत्त्वरजस्तमोगुणैरननुविद्धत्वात्। निर्धर्म्मकः स्वरूपप्रतिष्ठितत्वात्। द्रष्टा सर्वत्र उदासीनत्वात्। क्षेत्रवित् क्षेत्रोत्थगुणवेदनात्। यथाहुः पौराणिकाः—

तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः॥ इति।

अप्रसवधर्म्मा गुणकार्य्यैरालिप्त्यात्। तदुक्तम्—

जाग्रत् स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः।
तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः॥ इति।

प्रतिशरीरं भिन्नो जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेस्त्रैगुण्यविपर्य्ययाच्चैव। एवंभूते तत्त्वे प्रकृतिपुरुषसन्निधिमात्रेण पुरुषस्य चैतन्यं प्रकृतावध्यस्य प्रकृतेश्च कर्त्तृत्वं स्फटिकमणौ जपाया अरुणिमानमिव पुरुषेऽध्यस्य मूढाः कर्त्ताहं भोक्ताहमिति मन्यन्ते। तदेव प्रकृतिरचेतनापि चेतनावतीव प्रवर्त्तते। दृष्टान्तश्च तत्र यथाऽनुष्णाशीतो घटः शीतसंयुक्तः शीत उष्णसंयुक्त उष्णो भवति। यद्यपि लोके पुरुषश्चेतनस्वभावः कर्त्तेति प्रयुज्यते, तथापि वस्तुत एव प्रकृतिरध्यवसायं करोति, न तु पुरुषः। यथा निरपराधो जनश्चौरैः सह गृहीतश्चौरतया प्रतीतस्तथा प्रकृतिः कर्त्रपि तत्संसर्गात् पुरुषोऽकर्त्ता कर्त्तेव भवतीत्यवधारणात्। एवमज्ञानाद् भोगस्तत्त्वज्ञानादपवर्गः। तदेतत् सांख्यवृद्धाः प्रत्यक्षानुमानाप्तवचनैः साध-

यन्ति। तत्र प्रत्यक्षं दृष्टमक्षमिन्द्रियं प्रतीत्य यदुत्पद्यते तदिति भावः। यथा चक्षुःकर्णनासिकाजिह्वात्वचां रूपादयः पञ्चेन्द्रियार्थाः पञ्चानां प्रत्यक्षं प्रमाणम्। प्रथममेतद् मुख्यं सकलप्रमाणानाम्, अनुमानादीनां तदधीनत्वात् सर्व्ववादिनामविप्रतिपत्तेश्च। य एव व्यापारः प्रत्यक्षेण साधयितुं न पार्य्यते तत्रानुमानस्यावकाशः। कमपि व्यापारमन्वीक्ष्य ततः पश्चान्मीयत इत्यनुमानम्। यथा धूम-व्यापारमन्वीक्ष्य वह्नेरस्तित्वं साध्यते। अनुमानं त्रिविधमाख्यातं—पूर्व्ववत्, शेषवत्, सामान्यतो दृष्टं चेति। तत्र पूर्व्वमस्यास्तीति पूर्व्ववत्। यथा विशिष्टघनोदयेन भवित्रीं वृष्टिं साधयति पूर्व्वदृष्टत्वात्। पुनर्यथा नदीपूरदर्शनादुपरि वृष्टो देव इति प्रत्ययः। शेषवद् यथा समुद्रात् कमपि जललवं प्राप्य शेषस्य क्षाररसानुमानम्। सामान्यतो दृष्टं गतिमांश्चन्द्रः क्षितिवदिति। स्थितिमान् सूर्य्यः स्थाणुवदिति वा। प्रत्यक्षेणानुमानेन वा यत्र कश्चिद् व्यापारः साधयितुं न शक्य-स्तत्रागमस्यावकाशः। नित्यानित्यभेदाद् द्विविधः स आगमः। नित्यो यथा—"नासदासीन्नो सदासीत् तदानीं तम आसीदि"त्येवंजातीयकः। अनित्यो यथा—"मा हिंस्यात् सर्व्वा भूतानि"। कुतस्तस्यानित्यत्वम्? 'वायव्यं श्वेतमालभेते'त्येवमादिना स एव बाध्यत इति। तथा हि स्मर्य्यते—

"आगमो द्विविधो ज्ञेयो नित्योऽनित्यस्तथैव च।
ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम्॥
मूलरामायणं चैव पुराणं चैतदात्मकम्।
ये चानुयायिनस्तेषां सर्वे ते च सदागमाः॥" इति।

आगमः पुनराप्तवचनम्। तद् यथा—

"नित्यः सर्व्वगतः स्थाणुरचलोऽयं सनातनः।"

पुनर्यथा—"योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्

आप्तिः साक्षादर्थप्राप्तिर्यथार्थोपलम्भस्तया वर्त्तन्त इत्याप्ता वासुदेव

सनत्कुमारादय आचार्य्या रागद्वेषादिरहिताः श्रुतार्थग्राहिणस्तद्वचनम्। इत्थं सांख्यवृद्धानां प्रमाणसिद्धिः।

सिद्धानि चेत् प्रमाणानि प्रत्यक्षानुमानशब्दा इति, तर्हि किमुपमानार्थापत्त्यभावसम्भवैतिह्यादीनि न स्युः ? प्रमेयव्यवस्थार्थं प्रमाणस्वीकारः। त्रिविधप्रमाणसिद्धौ सर्व्वाणि प्रमाणान्तराणि सिद्धानि भवन्ति। प्रमाणत्रये तेषामन्तर्भावात्। तथा हि गौरिव गवय इत्युपमानम्। तदेवानुमाने नितरामन्तर्भूतम्। उपपाद्यानुपपत्त्या या ह्युपपादकस्य कल्पना सा खल्वेवार्थापत्तिः। साऽप्यनुमानम्। तद् यथा—पीनो देवदत्तो दिवा न भुङ्क्ते। अतोऽनुमीयते नितरां स रात्रौ भुङ्क्त इति। तत्रैव नैयायिका अपि समामनन्ति

"अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते।
व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः॥" इति।

अभावो नाम प्राक्प्रध्वंसेतरेतरात्यन्ताभावलक्षणो भवति। तत्र ग्रावणि प्रतिमा प्रागुत्पत्तेर्नोपलभ्यत इति प्रागभावः। प्रध्वंसाभावो यथा दण्डाघातेन प्रध्वस्तो घटो नोपलभ्यते। इतरेतराभावो यथा घटे पटत्वं पटे घटत्वम्। अत्यन्ताभावो द्वितीयशिरस्तृतीयबाहुशशविषाणवन्ध्यासुतगगनकुसुमवदिति। सोऽप्यनुमानविशेषः। सिन्धुदेश इत्युक्ते सप्तसिन्धव इति बोधसम्भवः। स शाब्दः श्रौतनिर्देशात्। रावणह्रदे विकटविग्रहो दृष्ट इत्युक्ते तत्र लङ्केश्वरेण देवादिदेवो महादेव उपासित इति बोध ऐतिह्यम्। यद्वा शतद्रुरित्युक्ते देवो वशिष्ठः कण्ठे शिलां बद्धा नद्यामस्यां प्रविष्टस्ततो भीत्या सा स्वयमेव शतधा द्रुतेति ज्ञानमैतिह्यम्। तदप्यनुमानमेव। प्रतिभाऽपि प्रमाणमिति केचित्। प्रतिभा यथा—नैष्कर्म्म्यात्लभते सिद्धिं रोचनार्था फलश्रुतिरित्युक्ते कर्म्मणि कामनालेशविवर्जिते गुणाधिक्यमस्तीति प्रतिभा संजाता। साप्यनुमानमेव। इत्थं प्रत्यक्षानुमानशब्दात्मकप्रमाणसिद्धिः सांख्यदर्शने निर्द्धारिता।

# दुर्गापुष्पाञ्जलिः

[ निबन्धकः—महामहोपाध्यायो दुर्गाप्रसादद्विवेदी ]

## अथ त्रयोदशः स्तवः

अयं दाता तुष्येदयमपि धरित्रीपरिवृढः
प्रसीदेदित्याशा जगति बहु तावद् भ्रमयति ।
शिवे ! यावद्युष्मच्चरणयुगले नम्रकमले
व्यपेतान्यासक्तिर्न हि भवति भक्तिः शिखरिणी ॥१॥

दिवा तत्तत्कार्यव्यतिकरपरीतेन मनसा
निशायामप्यारान्मुहुरुपचितस्वप्नमहसा ।
पराक्रान्तो दूये जननि ! जगतामेकशरणि !
कथं वीच्योपेच्चासरणिमनुसर्तुं प्रभवसि ॥२॥

बहु भ्रान्तं मातर्दिशि दिशि दुराशाहृतधिया
परां काष्ठां नीतं मलिनमपि भूपालचरितम् ।
इतिप्रायैः कृत्यैः परिकलितकाये मयि दया-
सुधाधारासारैः शिशिरितदृशं पातय मनाक् ॥३॥

परित्यक्तो मित्रैरपि बहु विचित्रैरहरहः
कथैवान्येषां का प्रतिपदनिजार्थार्पितधियाम् ।
दुराधिव्याधिभ्यां व्यथित इह वर्त्ते त्रिजगतां
शरण्ये कर्णे किं गमयसि न मे क्रन्दितमिदम् ॥४॥

धृताप्युच्चैर्वाणी व्रजति बहुधा संशयपथं
कथं तिष्ठेत्पद्मा कमलशितनालच्चतपदा ।
इदानीं कारुण्यं जननि ! यदि चित्ते न कुरुषे
तदार्तिव्यस्तस्य प्रकथय कथंकारमवनम् ॥५॥

त्वयाचार्याकृत्या (३५) कथितमपि पथ्यं न कलितं
• न सख्यं त्वत्सेवासरणिषु ममाद्यापि करणम् ।
अहो ध्यातुं वाञ्छन्नपि चटुलचित्तेन भुवनं
विहर्तुं जञ्जाल: कथमिव भजाम्यम्ब ! भवतीम् ॥६॥
न सक्तिस्त्वत्पूजाविधिषु न च भक्तिस्तव पदे
क्व वा शक्तिर्ध्याने भवतु तरलानामविषये ।
इति क्लेशक्लिष्टे मयि यदि न ते मातरधुना
दयायोगो योगो भवति जनुषो निष्फल इह ॥७॥
सुधाधाराकारां मयि वितर दृष्टिं सकरुणा-
मये ! मातस्त्वत्तो गतिरिह ममान्या न भुवने ।
प्रसूपार्श्वं त्यक्त्वा कथय कथमन्यं शिशुरिया-
द्दया वा दण्डो वा भवतु पुनरौदास्यमतुले ॥८॥
संसारपङ्कनिर्मग्नसमुद्धरणपण्डिता ।
मण्डिता सकलैश्वर्यै: मा परा सम्प्रसीदतु ॥९॥
इत्यवस्थानिवेदनम् ।

## अथ चतुर्दश: स्तव:

अपारकारुण्यसुधासमुद्र-
रिङ्गत्तरङ्गावलिलीनचेता: ।
वन्दारुवृन्दार्थितकल्पवल्लि !
दुर्गा-प्रसादस्य गतिस्त्वमेका ॥१॥
असीमसारल्यलताप्रतान-
विजृम्भणोद्यानविशालसीमा ।
नि:शेषभक्तार्तिविनाशशीले !
दुर्गा-प्रसादस्य गतिस्त्वमेका ॥२॥

---

३५—गुरुमूर्त्या ।

उदारचारित्रविकाशगन्ध-
सञ्चारणाडम्बररोदसीका ।
हृद्यावदानोत्करभासमाने !
दुर्गा-प्रसादस्य गतिस्त्वमेका ॥३॥

संसारदावानलदीनभक्त-
प्रसादनैकामृतपूरपूर्तिः ।
उपासकप्रीणनबद्धकक्षे !
दुर्गा-प्रसादस्य गतिस्त्वमेका ॥४॥

दौर्भाग्यतूलज्वलनायमान-
(३६)सहस्रनामश्रवणार्द्रचित्ता ।
निसर्गसौभाग्यविसर्गनिष्ठे !
दुर्गा-प्रसादस्य गतिस्त्वमेका ॥५॥

क्लिश्यत्कविव्रततीवितान-
प्रकाशनानभ्रनभस्यवृष्टिः ।
समुच्छलद्भक्तिविशेषतुष्टे !
दुर्गा-प्रसादस्य गतिस्त्वमेका ॥६॥

दृक्पातमात्रार्पितसाध्यसिद्धि-
निषेवणानन्दितसाधकेन्द्रा ।
वदान्यसीमायितचित्तवृत्ते !
दुर्गा-प्रसादस्य गतिस्त्वमेका ॥७॥

पद्मासनोपेन्द्रमहेन्द्रमौलि-
मन्दारमालाङ्कितपादपीठा ।
मातः ! शिशूक्तिश्रवणस्वभावे !
दुर्गा-प्रसादस्य गतिस्त्वमेका ॥८॥

---

३६—सहस्रनाम—'श्रीमाता श्रीमहाराज्ञी—' इत्यादिलक्षणम् ।

सेवासक्तसुरासुरावलिशिरोमाल्यान्तरालस्खल-
द्धूलीधूसरपादपीठविलुठत्सौभाग्यसीमायिते ! ।
निर्व्याजस्थिरभक्तियोगसुलभे ! मातस्तवाराधने
चेतो मेऽनिशमुन्नताधिकरसं वैपुल्यमालम्बताम् ॥८॥
इत्यात्मार्पणम् ।

## अथ पञ्चदशः स्तवः

यः पार्थिवं लिङ्गमुपेत्य शाल-
ग्रामो वटोऽश्वत्थमुखो भवंश्च ।
नानाविधाम्मूर्तगुणान् प्रपेदे
(३७)तमष्टमूर्तिं शरणं प्रपद्ये ॥१॥
योऽम्भांसि पावित्र्यगुणस्य सीमा-
मासादयंस्तीर्थपरम्पराभिः ।
एतां त्रिलोकीं शतधा पुनीते
तमष्टमूर्तिं शरणं प्रपद्ये ॥२॥
य आश्रयात् त्रित्वमुपागतोऽपि
त्रेता त्रयीमन्त्रगुणेन भूयः ।
चराचराधारतयात्मभूत-
स्तमष्टमूर्तिं शरणं प्रपद्ये ॥३॥

---

३७—तदिति सर्वनाम्नः स्त्रीत्वेऽपि अष्टमूर्तिरिति समानम् । अष्टमूर्तिरिति प्रसिद्धं शिवशक्तिनाम । तथाच रघुकारः—'अवेहि मां किङ्करमष्टमूर्तेः' इति । 'अष्टमूर्तिरजाजैत्री' इति ब्रह्माण्डपुराणञ्च । उपबृंहणन्तु—'त्वमर्कस्त्वं सोमः—' इति शिवमहिम्नपद्यादौ । यावद्देवताविशेषाणां समष्टिः परमेश्वरः । अभियुक्तानां यत्र देवतापदेन व्यवहारः सः श्रौतः स्मार्तो वा दैवतपदार्थ इति दिक् । विस्तरस्तु निरुक्तबृहद्देवतादिसन्दर्भतोऽवधेयः ।

यो योगिनां योगविभूतिसिद्धै-
समाधिसिद्धान्तपथाधिरूढः ।
चतुर्विधप्राणिनिकायमूल-
स्तमष्टमूर्तिं शरणं प्रपद्ये ॥४॥
योऽनन्तखस्यापि गुरुर्गरीया-
नोमित्यहो ! व्यस्तसमस्तरीत्या ।
'खं ब्रह्म'पाठेन यजुष्वमात्र-
स्तमष्टमूर्तिं शरणं प्रपद्ये ॥५॥
यो देवपौरोगवतां प्रयातः
सूर्याश्रयात् त्वमिकरः पितॄणाम् ।
आप्यायकः सर्वमहौषधीनां
तमष्टमूर्तिं शरणं प्रपद्ये ॥६॥
य उष्णताद्योत-खगर्क्षचन्द्र-
मेकायनं मुक्तिपथोन्मुखानाम् ।
धामर्ग्यजुःसाममहोदयानां
तमष्टमूर्तिं शिवमेकमीडे ॥७॥
आत्मा य एको यत एव विष्वग्-
ब्रह्माण्डवैचित्र्यविकासभूमा ।
तमःप्रकाशादिविसर्गबीजं
तमष्टमूर्तिं सहशक्तिमीडे ॥८॥
तर्काग्नि(३६)तत्त्वनिलयं विलयं भ्रमाणा-
मानन्दसिन्धुसदनं कदनं कुसृष्टेः ।
एतन्महेश्वरपदस्तवनं हि यस्मिन्
ज्ञाते वसन्ततिलकायितविश्वमेतत् ॥९॥
इत्यष्टमूर्तिस्तोत्रम् ।
इति श्रीदुर्गाप्रसादकृतो दुर्गापुष्पाञ्जलिः समाप्त इति शिवम् ।

# सप्तपातालोपवर्णनम्

[ निबन्धकः—श्रीवसन्तकुमार-रायविद्यारत्नः ]

अवनेरप्यधस्तात् सप्तभूविवरा एकैकशो योजनायुतान्तरेणायामविस्तारेणोपक्लृप्ताः। अतलं वितलं सुतलं तलातलं महातलं रसातलं पातालमिति।

एतेषु बिलस्वर्गेषु स्वर्गादप्यधिककामभोगैश्वर्य्यानन्दभूतिविभूतिभिः सुसमृद्धभवनोद्यानाक्रीडविहारेषु दैत्यदानवकाद्रवेया नित्यप्रमुदितानुरक्तकलत्रापत्यबन्धुसुहृदनुचरा गृहपतय ईश्वरादप्यप्रतिहतकामा मायाविनोदा निवसन्ति।

येषु महाराजमयेन मायाविना विनिर्म्मिताः पुरो नानामणिप्रवरप्रवेकविरचितविचित्रभवनप्राकारगोपुर-सभा-चैत्यचत्वरायतनादिभिर्नागासुरमिथुनपारावतशुकसारिकाकीर्णकृत्रिमभूमिभिर्विवरेश्वरगृहोत्तमैः समलङ्कृताश्चकासति।

उद्यानानि चातितरां मनइन्द्रियानन्दिभिः कुसुम-फलस्तबक-सुभग-किसलयावनत-रुचिरविटपविटपिनां लताङ्गालिङ्गितानां श्रीभिः समिथुनविविधविहङ्गजलाशयानाममलजलपूर्णानां झषकुलोल्लङ्घन-क्षुभितनीर-नीरज-कुमुद-कुवलय-कह्लारनीलोत्पल-लोहितशतपत्रादि-वनेषु कृतनिकेतनानामेकविहाराकुल-मधुर-विविधस्वनादिभिरिन्द्रियोत्सवैरमरलोकश्रियमतिशयितानि।

यत्र हि वाव न भयमहोरात्रादिभिः कालविभागैरुपलक्ष्यते।

यत्र हि महाहिप्रवरशिरोमणयः सर्व्वतस्तमः प्रबाधन्ते।

न वा एतेषु वसतां दिव्यौषधिरसरसायनाशनपानस्नानादिभिराधयो व्याधयो वलीपलितजरादयश्च देहवैवर्ण्यं दौर्गन्ध्यं स्वेदः क्लमो ग्लानिरिति वयोऽवस्थाश्च भवन्ति।

न हि तेषां कल्याणानां प्रभवति कुतश्चन मृत्युर्विना भगवत्तेजसश्चक्रापदेशात् ।

यस्मिन् प्रविष्टेऽसुरवधूनां प्रायः पुंसवनानि भयादेव स्रवन्ति पतन्ति च ।

अथातले मयपुत्रोऽसुरो तथैव निवसति । येन ह वा इह सृष्टाः षस्रवतिर्माया याः काश्चनाद्यापि मायाविनो धारयन्ति । यस्य च जृम्भमाणस्य मुखतस्त्रयः स्त्रीगणा उदपद्यन्त स्वैरिण्यः कामिन्यः पुंश्चल्य इति । या वै विलायनं प्रविष्टं पुरुषं रसेन हाटकाख्येन साधयित्वा स्वविलासावलोकानुरागस्मितसंलापोपगूहनादिभिः स्वैरं किल रमयन्ति । यस्मिन्नुपयुक्ते पुरुष ईश्वरोऽहं सिद्धोऽहमित्ययुतमहागजबलमात्मानमभिमन्यमानः कत्थते मदान्ध इव ।

ततोऽधस्ताद् वितले हरो भगवान् हाटकेश्वरः स्वपार्षदभूतगणावृतः प्रजापतिसर्गोपबृंहणाय भवो भवान्या सह मिथुनीभूयास्ते । यतः प्रवृत्ता सरित्प्रवरा हाटकी नाम भवयोर्वीर्येण । यत्तच्चित्रभानुर्मातरिश्वना समिध्यमान ओजसा पिबति । तन्निष्ठ्यूतं हाटकाख्यं सुवर्णं भूषणेनासुरेन्द्रावरोधेषु पुरुषाः सह पुरुषीभिर्धारयन्ति ।

ततोऽधस्तात् सुतल उदारश्रवाः पुण्यश्लोको विरोचनात्मजो बलिर्भगवता महेन्द्रस्य प्रियं चिकीर्षमाणेनादितेर्लब्धकायो भूत्वा वटुवामनरूपेण पराक्षिप्तलोकत्रयो भगवदनुकम्पयैव पुनः प्रवेशित इन्द्रादिष्वविद्यमानया सुसमृद्धया श्रियाभिजुष्टः सधर्म्मेणाराधयंस्तमेव भगवन्तमाराधनीयमपगतसाध्वस आस्तेऽधुनापि ।

नो एवैतत् साक्षात्कारो भूमिदानस्य यत्तद्भगवत्यशेषजीवनिकायानां जीवभूतात्मभूते परमात्मनि वासुदेवे तीर्थतमे पात्र उपपन्ने परया श्रद्धया परमादरेण समाहितमनसा सम्प्रतिपादितस्य साक्षादपवर्गद्वारस्य यद्बिलनिलयैश्वर्य्यम् ।

यस्य ह वाव क्षुत्पतनप्रस्खलनादिषु विवशः सकृन्नामाभिगृणन्

पुरुषः कर्म्मबन्धनमञ्जसा विधुनोति। यस्य हैव प्रतिबाधनन्तु मुमुक्षवोऽन्यथैवोपलभन्ते। तद्भर्वतामात्मवतां सर्वेषामात्मन्यात्मद आत्मतमे च। नवै भगवान् नूनममुष्यानुजग्राह। यदुत पुनरात्मानुस्मृतिमोषणं मायामयं भोगैश्वर्य्यमेवातनुतेति। यत्तद्भगवतानधिगतान्योपायेन याञ्चाच्छलेनापहृतस्वशरीरावशेषितलोकत्रयो वरुणपाशैः सम्प्रतिमुक्तो गिरिदर्य्यांञ्चापविद्ध इति होवाच।

नूनं बतायं भगवानर्थेषु न निष्णातो योऽसाविन्द्रो यस्य सचिवो मन्त्राय वृत एकान्ततो बृहस्पतिस्तमतिहाय स्वयमुपेन्द्रेण आत्मानमयाचत आत्मनश्चाशिषो नो एव तद्दास्यम्। अतिगम्भीरवयसः कालस्य मन्वन्तरपरिवृत्तं कियल्लोकत्रयमिदम्।

यस्यानुदास्यमेवास्मत्पितामहः किल वव्रे न तु स्वं पित्र्यं यदुताकुतोभयं पदं दीयमानं भगवतः परमिति भगवतोपरते खलु स्वपितरि। तस्य महानुभावस्यानुपथममृजितकषायः को वास्मद्विधः परिहीणभगवदनुग्रह उपजिगमिषतीति।

यस्य भगवान् स्वयमखिलजगद्गुरुर्नारायणो द्वारि गदापाणिरवतिष्ठते निजजनानुकम्पितहृदयः। येनाङ्गुष्ठेन पदा दशकन्धरो योजनायुतायुतं दिग्विजय उच्चाटितः।

ततोऽधस्तात् तलातले मयो नाम दानवेन्द्रस्त्रिपुराधिपतिर्भगवता त्रिपुरारिणा त्रिलोक्याः शं चिकीर्षुणा निर्दग्धस्वपुरत्रयस्तत्प्रसादाल्लब्धपदो मायाविनामाचार्य्यो महादेवेन परिरक्षितो विगतसुदर्शनभयो महीयते।

ततोऽधस्तान्महातले काद्रवेयाणां सर्पाणां नैकशिरसां क्रोधवशो नाम गणः कुहक-तक्षक-कालिय-सुषेणादिप्रधाना महाभोगवन्तः पतत्त्रिराजाधिपतेः पुरुषवाहादनवरतमुद्विजमानाः स्वकलत्रापत्यसुहृत्-कुटुम्बसङ्गेन क्वचित् प्रमत्ता विहरन्ति।

ततोऽधस्ताद्रसातले दैतेया दानवाः पणयो नाम निवातकवचाः

कालकेया हिरण्यपुरवासिन इति विबुधप्रत्यनीका उत्पत्त्या महौजसो महासाहसिनो भगवतः सकललोकानुभावस्य हरेरेव तेजसा प्रतिहत-बलावलेपा बिलेशया इव वसन्ति। ये वै सरमयेन्द्रदूत्या वाग्भिर्मन्त्र-वर्णाभिरिन्द्राद्बिभ्यति।

ततोऽधस्तात् पाताले नागलोकपतयो वासुकिप्रमुखाः शङ्ख-कुलिक-महाशङ्ख-श्वेतधनञ्जयधृतराष्ट्रशङ्खचूडकम्बलाश्वतरदेवदत्तादयो महा-भोगिनो महामर्षा निवसन्ति, येषामु ह वै पञ्चसप्तदशसतसहस्रशीर्षाणां फणासु विरचिता महामणयो रोचिष्णवः पातालविवरतिमिरनिकरं स्वरोचिषा विधमन्ति। ( श्रीमद्भागवते ५।२४ )

विराड्देहतज्जीवतदन्तर्यामिणामभेदेनोपासनं कर्त्तव्यमित्या-शयेनाह—

पातालमेतस्य हि पादमूलं
पठन्ति पार्ष्णिप्रपदे रसातलम्।
महातलं विश्वसृजोऽथ गुल्फौ
तलातलं वै पुरुषस्य जङ्घे॥
द्वे जानुनी सुतलं विश्वमूर्त्ते-
रूरुद्वयं वितलञ्चातलञ्च।

( श्रीमद्भागवते २।१ )

(२)

( विष्णुपुराणे २।५ )

अतलं वितलञ्चैव नितलञ्च गभस्तिनम्।
महाख्यं सुतलञ्चाग्रं पातालञ्चापि सप्तमम्॥
शुक्लाकृष्णारुणापीता शर्कराशैलकाञ्चनाः।
भूमयो यत्र मैत्रेय! वरप्रासादमण्डिताः॥

तेषु दानवदैतेया यक्षाश्च शतशस्तथा ।
निवसन्ति महानाग-जातयश्च महामुने ॥
स्वर्लोकादपि रम्याणि पातालानीति नारदः ।
प्राह स्वर्गसदां मध्ये पातालेभ्यो गतो दिवि ॥
आह्लादकारिणः शुभ्रा मणयो यत्र सुप्रभाः ।
नागैराभ्रियमाणासु पातालं केन तत्समम् ॥
दैत्यदानवकन्याभिरितश्चेतश्च शोभिते ।
पाताले कस्य न प्रीतिर्विमुक्तस्यापि जायते ॥
दिवार्करश्मयो यत्र प्रभां तन्वन्ति नातपम् ।
शशिनश्च न शीताय निशि द्योताय केवलम् ॥
भक्ष्यभोज्यमहापान-मुदितैरतिभोगिभिः ।
यत्र न ज्ञायते कालो गतोऽपि दनुजादिभिः ॥
वनानि नद्यो रम्याणि सरांसि कमलाकराः ।
पुंस्कोकिलाभिलापाश्च मनोज्ञान्यपराणि च ॥
भूषणान्यतिरम्याणि गन्धाढ्यञ्चानुलेपनम् ।
वीणावेणुमृदङ्गानां स्वनास्तूर्य्याणि च द्विज ॥
एतान्यन्यानि चोदारभोग्यभोगानि दानवैः ।
दैत्योरगैश्च भुज्यन्ते पातालान्तरगोचरैः ॥
पातालानामधश्चास्ते विष्णोर्या तामसी तनुः ।
शेषाख्या यद्गुणान् वक्तुं न शक्ता दैत्यदानवाः ॥
योऽनन्तः पठ्यते सिद्धैर्देवो देवर्षिपूजितः ।
स सहस्रशिरा व्यक्तः स्वस्तिकामलभूषणः ॥
फणामणिसहस्रेण यः स विद्योतयन् दिशः ।
सर्वान् करोति निर्वीर्य्यान् हिताय जगतोऽसुरान् ॥
मदाघूर्णितनेत्रोऽसौ यः सदैवैककुण्डलः ।
किरीटी स्रग्धरो भाति साग्निः श्वेत इवाचलः ॥

नीलवासा मदोत्सिक्तः श्वेतहारोपशोभितः ।
साभ्रगङ्गाप्रवाहोऽसौ कैलासाद्रिरिवोन्नतः ॥
लाङ्गलासक्तहस्ताग्रो बिभ्रन्मुषलमुत्तमम् ।
उपास्यते स्वयं कान्त्या यो वारुण्या च मूर्त्तया ॥
कल्पान्ते यस्य वक्त्रेभ्यो विषानलशिखोज्ज्वलः ।
सङ्कर्षणात्मको रुद्रो निष्क्रम्यात्ति जगत्त्रयम् ॥
स बिभ्रच्छेखरीभूतमशेषं क्षितिमण्डलम् ।
आस्ते पातालमूलस्थः शेषोऽशेषसुरार्च्चितः ॥
तस्य वीर्य्यं प्रभावश्च स्वरूपं रूपमेव च ।
न हि वर्णयितुं शक्यं ज्ञातुं वा त्रिदशैरपि ॥
यस्यैषा सकला पृथ्वी फणामणिशिखारुणा ।
आस्ते कुसुममालेव कस्तद्वीर्य्यं वदिष्यति ॥
यदा विजृम्भतेऽनन्तो मदाघूर्णितलोचनः ।
तदा चलति भूरेषा साद्रितोयाब्धिकानना ॥
गन्धर्व्वाप्सरसः सिद्धाः किन्नरोरगचारणाः ।
नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमव्ययः ॥
यस्य नागवधूहस्तैर्गलितं हरिचन्दनम् ।
मुहुः श्वासानिलापास्तं याति दिक्सूदवासताम् ॥
यमाराध्य पुराणर्षिर्गर्गो ज्योतींषि तत्त्वतः ।
ज्ञातवान् सकलञ्चैव निमित्तपठितं फलम् ॥
तेनेयं नागवर्य्येण शिरसा विधृता मही ।
बिभर्त्ति मालां लोकानां सदेवासुरमानुषम् ॥

( क्रमशः )

# वसन्तोत्सवः

[ निबन्धकः—श्रीकालीचरणसिंहः ]

यद्यपि युगकालादिपरिच्छेदद्वारेण भारतीयराष्ट्रतन्त्रपरिणामप्रवाहोदन्तः शास्त्रत्वेन नोपनिबद्धो नो वा परिशीलित आसीत् पूर्व्वस्मिन् काले, अत एव भारतवर्षीयाणां प्राचीनेतिवृत्तदारिद्र्यं दुनोति साम्प्रतिकानां चेतांसि, तथाप्येतत् समर्थार्दं दुरपह्नवप्रमाणबलेन च दृढतरं निरूपयितुं शक्यते यत्, सामाजिकपरिस्थितिविषये विद्याविनयधर्म्माचारादिविभवे लौकिकधनसम्पत्प्राचुर्य्ये इदं खलु भारतं वर्षं प्राचि काले समुत्कर्षकाष्ठापर्य्यन्तमध्यासीनमासीदिति । न केवलं साहित्यदर्शनादिविषय एव भारतीयानां नदीष्णता लोकविस्मयकर्य्यासीत्, अपि तु सुकुमारकलानाम् चतुःषष्टिसंख्यायाद्य यावत् साहित्यरसिकानामतिमात्रं प्रतीताम् भारतीयानां प्रावीण्यं स्वच्छन्दप्रचारं प्रवहत इत्यत्रापि नास्ति संशयलेशस्याप्यवकाशः । एतत्तु प्राचीनसाहित्यक्षत्यमाणामतिप्रकटमेव । ऐहिकधनसम्पत्समृद्ध्यात्यन्ततिरस्कृते लोकयात्राचिन्ताप्रसरे भूम्नानन्दपारिप्लवे च लोकसमाजे सर्व्वाणि समाजयात्रोत्सवादयः क्रियासमभिहारेण स्वतः प्रवर्त्तिता अभवन् । अद्यत्वेऽस्मत्कथनिरूपणेऽपि प्राचीनानां संख्यामत्सरिणि समाजोत्सवे चित्रो वसन्तोत्सवः खलु सर्वेषां मूर्द्धन्यवास्थितेति निश्चप्रचमेतत् ।

प्रतिवर्षं वसन्तकाले यदा प्रकृतिर्नानाविधमनोज्ञ-कुसुमविभूषिता, दिग्विभागाः पुलकितपरभृतध्वनिमुखरितासूतसहकाराम्राम्र-प्रवालस्तबकावनम्राः पुष्पितचारुगात्रा नवीनमाधवीलतिका "मत्तद्विरेफपरिचुम्बितचारुपुष्पा मन्दानिलाकुलितनम्रमृदुप्रवालाः" शोभन्ते, यदा च "द्रुमाः सपुष्पाः, सलिलं सपद्मं, स्त्रियः सकामाः, पवनः सुगन्धिः,

सुखा: प्रदोषा दिवसाश्च रम्या:"—सर्व्वमेव सर्व्वतश्चारुतरं भवति, तदास्य वसन्तमहोत्सवस्य सम्यगनुष्ठानावसरः ।

वसन्तसमय: खल्वपूर्वमनोरमसौन्दर्य्येण चतुर्दिगामोदितविविध-मधुरसौरभेण च नूनं सकललोकचित्तचञ्चरीकानाकुलीकरोति। वसन्त-काले हि निसर्गशोभा मूर्त्तिमती। तथा च—

"आदीप्तवह्निसदृशैर्मरुतावधूतै:
सर्व्वत्र किंशुकवनै: कुसुमावनम्रै: ।
सद्यो वसन्तसमये हि समाचितेयं
रक्तांशुका नववधूरिव भाति भूमि: ॥"

अपि च—

"आकम्पयन् कुसुमिता: सहकारशाखा
विस्तारयन् परभृतस्य वचांसि दिक्षु ।
वायुर्विवाति हृदयानि हरन्नराणां
नीहारपातविगमात् सुभगो वसन्ते ॥"

इति कविचक्रवर्त्तिना कालिदासेनोपश्लोकितं वसन्तस्यानन्यसामान्यं कामनीयकम् ।

यदा वसन्तसमागमे प्रकृतिदेवी वासांसि जीर्णानि विहायाभि-रामवसनभूषितास्ते, सुकुमार-कुसुमसौरभमयी वासन्ती वनराजिर्यदा धीरगतिमलयानिल-हिल्लोलस्य मृदुमन्दान्दोलनेन नर्त्तिता भवति, विहङ्गमराजकुलवसन्तदूतवृन्दं पुलकेन मधुरस्वरेण पञ्चमतानेन गायति, मधुलोभिनो मधुपा भृङ्गश्च नवोद्भिन्नकिसलयदलानजस्रं विकम्प्य समन्ततो विचरन्ति, तदैव खलु नागा नागरिकाश्च चूताङ्कुर-नवोद्गमालोकजनितौत्सुक्येनोत्सवदिवसागमनप्रतीक्षया कथं कथमपि कालं नयन्ति ।

अस्मिन् वसन्तोत्सवे जना: सर्वत्रामुक्तमौक्तिकसौवर्णालङ्कारा:

सानन्दं सञ्चरन्ति। "मधुरमभिहन्यमानमृदुमृदङ्गानुगतमङ्गीतमधुरः सर्वत्र जनानामुच्चरति चर्च्चरीध्वनिः। समन्ततः स्वच्छन्दमर्दलोद्दामशब्दमुखरितानि रथ्यामुखानि। प्रकीर्णानि च सर्वतः कुसुमपरागात् तण्डुलचूर्णानि सर्व्वाङ्गलग्नाभरणानां रमणीनां हैमालङ्कारा अतीव रमणीयपीतरागप्रभामुद्गिरन्ति। सर्व्वैः प्रदेशः पीतवर्णमयो दृश्यते। कुत्रचिद्वा प्राङ्गणे सुदर्शनकुट्टिमः सिन्दूरपातेन नितरां लोहितः सञ्जातः। धारायन्त्रनिर्मुक्तसलिलशीकरैः सर्वं सिक्तं परिलक्ष्यते। कौसुम्भरागरञ्जितवेषा जनास्तत्र परस्परं सुखेन संक्रीडमाना दृश्यन्ते, कुत्रचिद् वा "वर्णोदकैः काञ्चनशृङ्गमुक्तैः" परिप्लुते पादतलनोत्पन्नेन कार्दमेन कृतक्रीडे प्राङ्गणे ग्राम्ये स्थली तामुल्लासमत्तानां रमणीनां कपालच्युतसिन्दूररक्तिम्ना लोहितैश्चरणैर्जनाः सिन्दूरवर्णां कुर्वन्ति। गलिताङ्गरागैरवरोधैर्विगाह्यमानः "सन्ध्योदयः साभ्र इवैष वर्णं पुष्यत्यनेकं" सलिलधारः। कुत्रचित् -

"तीरस्थली बर्हिभिरुत्कलापैः प्रस्निग्धकेकैरभिनन्द्यमानम्।
श्रोत्रेषु संमूर्च्छति रक्तमासां गीतानुगं वारि मृदङ्गवाद्यम्॥"

क्वचिच्च—

"एताः करोत्पीडितवारिधारा दर्पात् सखोभिर्वदनेषु सिक्ताः।
वक्रेतराग्रैरलकैस्तरुण्यश्चूर्णारुणान् वारिलवान् वमन्ति॥"

कुत्रचन पिष्टातकचूर्णैर्दिङ्मण्डलं छादितमकालसन्ध्याविर्भावविभ्रममुत्पादयति। तरुणीनां रत्नालङ्कारमयूखस्यन्दिप्रभाजालेन कथञ्चिदालोकिते दिग्वलये शृङ्गयन्त्रसनाथा विटा अस्पष्टं दृश्यन्ते। कामिनीजना मदनपरवशा वेषं वहन्त्योऽभिनवं मदनलीलां सर्वत्र खलु नाटयन्ति द्विपदीखण्डञ्च गायन्ति। निपीय सुरां नार्य्योऽपि मत्ततां गच्छन्तितमाम्। तण्डुलमोदकादिभिर्विविधभक्ष्यैश्च वसन्तोत्सवोपायनं सर्वत्राभीक्ष्णं दीयते। सर्वेषामेव जनानां वसन्तविजयघोषणाव्यपदेशेन हर्षकलकलो गगनप्राङ्गणे भृशं ध्वनितो भवति। अहो!

हृदयोल्लासकराणीमानि सुदृश्यानि। इदानीमपि प्रत्यक्षायन्ते सुकौशलचित्रितान्येतान्यद्दामदृश्यान्यस्य महोत्सवस्य।

मन्मथः खलु वसन्तोत्सवस्याधिष्ठात्री देवता। अतो वसन्तोत्सवोऽनङ्गदेवपूजाविधानहेतोर्मदनमहोत्सव इत्याख्यया लोके प्रचारित आसीत्। पुराणेषु मधुमासस्य शुक्लत्रयोदश्यां यो मदनस्योल्लेखो दृश्यते तस्यैव खलु नाम मदनोत्सव इति। वसन्तसमागमेऽस्यानुष्ठानाद्वसन्तोत्सव इति नाम्नापि कीर्त्त्यतेऽयम्। उत्सवदिवसे सङ्गीतसुराकर्पूरकुङ्कुमचोदगन्धताम्बूलादिविलाससामग्रीप्रभावेण सहृदयऋतुराजेन सह रतिपतिर्ध्रुवमेवोज्जीवित इव प्रतिभाति। तद्धि—

"रम्यप्रदोषसमयः स्फुटचन्द्रहासः
　　　　पुंस्कोकिलस्य विरुतं पवनः सुगन्धिः।
मत्तालियूथविरुतं निशि सीधुपानं
　　　　सर्वं रसायनमिदं कुसुमायुधस्य॥"

अपरञ्च—

"आम्रो मञ्जुलमञ्जरी वरशरः सत्किंशुकं यद्धनु-
र्ज्या यस्यालिकुलं कलङ्करहितं छत्रं सितांशुः सितम्।
मत्तेभो मलयानिलः परभृतो यद्वन्दिनो लोकजित्
सोऽयं वो वितरीतरीतु वितनुर्भद्रं वसन्तान्वितः॥"

कठोरतपसि स्थिते सति सतीपतौ सतीप्रयाणानन्तरं व्यत्ययः सृष्टिकार्य्यस्य स्यादेवेति ब्रह्मप्रमुखा द्युषदः प्रियसहचरेण मधुनानुप्रयातस्य मनोभवस्य साहायकं प्रतिपद्यमाना देवादिदेवस्य विधाय तपोभङ्गं सर्गरक्षायां यतमाना आसत। भस्मीभूतदेहो बभूव रतिपतिर्हरकोपाग्निना। ततो रतिशोकावलोकनजातानुकम्पायाः पार्वत्या अनुरोधेन सुप्रसन्न आशुतोषो मधुमासि लोकमध्ये मदनपूजाप्रचलनविधानेनानुगृहीतवाननङ्गम्। तथा च भविष्यपुराणे श्रीकृष्ण-युधिष्ठिरसंवादे मदनपूजाया मदनमहोत्सवस्य चोल्लेखो दृश्यते। अस्योत्-

मवोल्लेखस्योपक्रम एतन्नामास्माकीनं नयनपथमापतति। कृष्ण उवाच—

गौरीविवाहाज्जग्राह हरः पाशुपतं व्रतम्।
उमापतिः पशुपतिर्ध्यानासक्तो बभूव ह॥
ब्रह्मादिभिस्तु सम्मन्त्र्य विबुधैः पुत्रलब्धये।
गौर्य्या मनोभिलषितपूर्णाय च प्रहर्षितैः॥
प्रहितः क्षोभणार्थाय समर्थ इति मन्मथः।
ततो मारः स्मरः कामो व्याजगाम तदाश्रयम्॥
रतिप्रीतिमदोन्मादवसन्तस्त्रीसहायवान्।
विधानवारुणीदीर्घशृङ्गारैः परिवारितः॥
आम्रपुन्नागकमलमालतीकृतशेखरः।
वीणामृदङ्गसङ्गीतकोकिलाभृङ्गगीतिकम्॥
सुमनश्चापमासज्य मदनोन्मादकं शरम्।
चिक्षेप त्रिपुरघ्नाय समाधिभङ्गहेतवे॥
बुद्ध्वा तस्य स सङ्कल्पं रुद्रः क्रुद्धो ज्वलद्रुषा।
ललाटादग्निमसृजत्तृतीयनयनाद्धरः॥
कामोऽवलोकितस्तेन भस्मभूतस्ततः क्षणात्।
दग्धं दृष्ट्वा स्मरं शोके रतिप्रीतिर्हिते तदा॥
करुणं विललापाथ सर्वमन्यद्दिशो गतम्।
ततः शोकार्द्रहृदया गौरी रुद्रमुवाच ह॥

( क्रमशः )

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रविः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| July, 1931. | १८५३ शकीये आषाढे १४वर्षस्य ३य-संख्या | Vol. XIV, No. 3. |


## मतिमञ्जरी

**शोकसन्देशः**—विपश्चितो वाचकाः, निष्करुणाया नियतेरतिवेलं प्रातिकूल्यं दर्शं दर्शं दृषद्भेदान्यपि नश्चेतांसि पुनरनुरूपयाद्य विधेर्वामतया ताम्यन्तीति सर्व्वथा तमेवाभिनन्दामो मन्दभाग्याः। स्निग्धजनसंविभक्ताः किल शोकः सह्यवेदनः सम्पद्यत इत्यनुभवं प्रमाणीकुर्वाणास्तदिदं दुःखं भवद्भ्यो विभागेनानुबुभूषामश्चानुशोचामश्चैषां परेतानां पारिषद्यानाम् ।

तत्रादौ महामहोपाध्यायो **वामाचरणन्यायाचार्य्यः** काश्यां प्रवसन् व्यतीते सौरचैत्रमासस्य कस्मिंश्चिद्वासरे वाराणस्यामसूनपास्य स्वोपास्येन काशीपतिना समयौत्। सोऽयं महात्मा पूर्व्ववङ्गीय-फरिदपुरमण्डलाधीन-धानुकाग्रामे ब्राह्मण्यादिगुणविशिष्टे विद्वद्भूयिष्ठे वंशे जन्म पर्य्यग्रहीत्। काले काश्यां विश्वविद्यालये न्यायाध्यापकतामाधायान्तकालं यावत्तत्रैव प्रावसत्। न्यायादिशास्त्रेऽस्य प्रतिभा तथा परां कोटिमध्यरोहद् यथा साम्प्रतिककाले न्यायाचार्य्यमन्तरेण

नान्यं कोऽपि नवीनं न्याये निष्णातमस्माकमिति शास्त्रान्तरे । एवमपि तदीयां शास्त्रबुद्धिं धर्मानुवर्त्तिनी बुद्धिरेव व्यजयतेति लोकोत्तरगुणोऽयं कथमल्पेन वचसा प्राकाश्यं नीयताम् । स भवान् क्रियाबहुलेऽप्यस्मिन् कलौ काले यथाशास्त्रमग्निमाधाय प्रत्यहमग्निहोत्रादिसदाहिताग्नितासंजातामनन्यदुर्लभां शारीरकान्तिम् । यं ह्याहिताग्निमुद्दिश्य भवभूतिरपि समयां भारतीमबिभः—'सङ्कटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थते'ति ।

अत्रभवतः कृते शोकप्रकाशार्थं विगते सौरवैशाखस्य षोडशदिवसे महामहोपाध्यायस्य श्रीमतः कामाख्यानाथतर्कवागीशमहोदयस्याध्यक्ष्येण परिषदं न्यविशत विशेषाधिवेशः कश्चिदिति प्रमोदमनुभवामः । तत्र समेताः प्रभूता विद्वांसः स्वं स्वमाशयं प्रकटय्य तत्रभवति श्रद्धाञ्च भक्तिञ्च प्रीतिञ्च निःशेषं निरवशेषयन्निति ।

पण्डितप्रकाण्डाः द्राविडलक्ष्मणशास्त्रिणश्च विगतसौरज्यैष्ठे मासि काश्यामेव देहं विहाय शिवसायुज्यमुपार्जयत् । के वात्मनो भारतीयभावमभितः प्रख्यापयितुकामास्तत्रभवन्तं नाम्नापि तावन्न जानन्तीति । यस्य हि श्रोत्थानात्क्षयनपर्यन्तं सर्वमेव विचेष्टितं परैकप्रयोजनमासीन्न स्वप्रयोजनम् । समयदोषदुर्गतस्य सनातनधर्मस्य दुर्गतानाञ्च सनातनधर्मावलम्बिनामवलम्बनभूतोऽयं महाभूतसमाधिनिर्मितो महात्मा न केवलमात्मनो द्रविणमेव पणीकृत्य तेषामुपकृत्यै प्रायतत परं प्राणानपि पणीकृत्य यदि तेषामुपकाराय प्राभवत्तदापि न विमनायते स्म । स हि महात्मा स्ववृत्तिरिति भृतिकर्म्म पर्यहरत्, अमनःपूतमिति राजसम्मानमवाजानात्, चित्तमलाधायकमिति प्रतिग्रहमप्यजहात्, किं बहुना यदा यदेव तस्य यत्किञ्चिदमतमुदतिष्ठत् तदा तदेव स तत्सर्वं तूलोत्क्षेपं सगर्वमुदक्षिपत् । द्राविडोऽपि महात्मासौ वङ्गीयानां सौकर्य्यार्थं कियन्नान्वतिष्ठत् कर्म्म, कियद्वागर्गतदृष्टिपातं नासहत क्लेशजालम् । दृश्यते एकदेशवासित्वसाजात्येनोपकार्य्योपकारक-

भावः साधारणेषु, तद्यथा वङ्गीया यथा तद्देशवासिन एवोपकर्त्तुं यतन्ते न तथा द्राविडान्, एवं द्राविडा अपि यथा द्राविडानुपकुर्वते न तथा वङ्गान् इति। परमर्व्वागृदृशामियं भेददृष्टिर्नात्रभवन्तः दूरदर्शिनमध्यकरोत्, स हि मानव इत्येव निवृत्तकारणस्तुल्यमुपकर्त्तुं प्रायततेति महदिदमनितरसाधारणं महत्त्वम्।

अस्यापि महाभागस्य कृते विगतसौराषाढस्य पञ्चदशदिवसे परिषद्भवने विशेषानुष्ठानमेकमजनिष्ट। अत्रापि तत्रभवतो गुणमुग्धाश्चारित्रचमत्कृता विद्याविशेषवशीकृता बहवो विषयिणश्च पण्डिताश्च समभिलन् सभायाम्। अत्र च महामहोपाध्यायबिरुदवता श्रीमता शितिकण्ठवाचस्पतिमहोदयेनाध्यक्षपदमलमकारि।

पूर्व्ववङ्गजन्मा **हरिहरशास्त्रि**-महोदयश्च व्यतीतसौरज्यैष्ठमासे कलिकातानगर्य्यां गङ्गातीरे भौतिकशरीरपरिहारेण स्वर्गमन्वभूत्। अयञ्च पूर्व्वस्मिन् वङ्गविषये फरिदपुरमण्डलान्तःपातिनि कोटालीपाटपुटभेदने विद्याब्राह्मण्यादिगुणावदाते कुले जन्म परिगृह्यापि चिरस्य वाराणस्यामेव वसतिमन्वग्रहीत्। यद्यप्ययमुपरिष्टादुपवर्णितयोर्महात्मनोरेकासनमधिवस्तुं नोत्सहते विद्यया वा चारित्रेण वा, तथाप्येतस्यानन्तरमासनं नैव वारयितुं शक्यते। विद्याब्राह्मण्यादिगुणोज्ज्वलानां महात्मनां गणनाप्रसङ्गे नैतन्नाम्नि मा नाम कठिनी तत्प्राथम्येन निपततु परं तथाविधा अङ्गुलिसंख्याता एवेत्यविप्रतिपन्नं वचः। स्थानस्यैवेदं माहात्म्यं यदत्र नाल्पविद्या नाचारहीनाश्च प्रायेण प्रतिवसन्ति। सन्त्येतत्सम्पादितानि कानि च पुस्तकानि नातिचिरादेव प्रकाशमुपगतानि। परं स्वर्गिणोऽप्यस्यैतच्छोचनीयं वर्त्तते, यदयं मृत्योः कियतो दिनात् पूर्व्वमेव वाराणसीं परिहृत्य कलिकातायामागत्यात्रैव व्यपद्यतेति। यद्यपि नाल्पेन तपसा गङ्गायामपि मृत्युः सम्भवति, तथापि काशीमृत्युः काम्यतम एवेति नः शोककारणम्।

प्रियपाठकाः तदेते प्रत्येकमद्वितीया इव महात्मानः परिषदः सदस्या आसन्निति मर्मं शोकेन स्तोकं सुखमपि हृदयमधिकरोति। किं कुर्म्मः न हि कश्चित्प्रभवति मानवो विधात्र इति भवतु तस्यैवाभिलषितमनियन्त्रितम्। भावि सर्वमेव भगवता नियन्त्रितमिति यद्यप्याकालिकं न भवति, तथापि भूयोदर्शनानुमितं समयमतिक्रम्य यत्किञ्चन निष्पद्यते तदेव वयमाकालिकं ब्रूमः। अनया च दिशा तत्रभवन्तः सर्व्वे एवाकालिकं मृत्युमधिगतवन्त इति महदेव दुःखकारणमस्माकम्। जानीमहे एषामकालमृत्यौ या किल क्षतिरतिमहत्यद्य जाता, भूयसापि कालेन तस्य पूर्त्ति र्नैव भविष्यतीति। आशास्महे यथाकालमेतेषामनुकार्य्याणि च महनीयानि च महान्ति च चरितानि प्रचार्य्य प्रमोदमनुभावयितुं भवतः।

पाठकमहाभागाः, तदेभिः प्रघट्टकैः सेयं मतिमञ्जरी शोकमञ्जरी वा मतिमञ्जरी वा जातेति निर्णेतुं भवत एवाधिकृत्य शोकक्षुब्धा वयमिहैव विरमामश्च विषीदामश्च तत्रभवतां परिजनान् सान्त्वयामश्चेति शम्।

---

## स्वर्गत-द्राविडलक्ष्मणशास्त्रिमहात्मनां शोकोच्छ्वासः

[ निबन्धकः—महामहोपाध्याय-श्रीकमलकृष्णस्मृतितीर्थः ]

नष्टो ज्ञानमहीरुहोऽद्य विलयं सद्ब्रह्मवर्च्चो गतम्
आचारोऽथ निराश्रयः स भगवान् धर्म्मोऽपि खञ्जोऽधुना।
मीमांसा सरणिस्खलब्धशरणा वाचः सुधासोदरा
लुप्ताः सम्प्रति शास्त्रिपादविरहात् किं किं न नष्टं क्षितौ ॥१॥

दुर्द्दैवेन सुदीनवेदविहिताचारस्य संरक्षणे
सर्वस्यैव जनस्य चेतसि सदा सद्भावसंक्रामणे।

मूर्त्तो धर्म्म इवाद्य भारतधराप्राणोपमोऽन्यः पुमान्
हा हा नश्यति लक्ष्मणः क्षणमितो विश्वद्विलायायितम् ॥२॥

जीवता येन नालोकि जीवतां शास्त्रिणां मुखम् ।
नाकर्णिता च तद्वाणी वृथैव तस्य जीवितम् ॥३॥

वर्णाश्रमीयसमितेर्दृढबन्धनं क्व
तज्जीवरक्षणतरोः प्रलयः क्व वायम् ।
जीवः प्रफुल्लहृदयस्तनुते यतो यत्
वैरी विधिर्घटयतीह तदन्यथैव ॥४॥

लोकातिशायिगुणराशिरसौ महात्मा
कार्य्येषु वाक्षु हृदयेऽस्य न दोषलेशः ।
अन्यस्य दोषभरतः कथमेनमारात्
त्वं नीतवान् बत विधे विषमं मनस्ते ॥४॥

दृष्टा वयं कुविधिना भरितास्त्रितापैः
कालाहिदष्टहृदया यदकाण्डमस्मान् ।
शास्त्री विहाय गतवान् निजकर्म्मलब्धं
ज्योतिस्त्वनिन्धनमितः सुहृदो विहाय ॥६॥

योऽप्राकृतस्य चरितातिशयस्य भावै-
रत्यद्भुतैर्जनमनांसि वशीचकार ।
मर्त्त्योऽपि यो विबुधवन्महनीय आसीत्
तस्याधुना स्मृतिरपीह सुखाय पुंसाम् ॥७॥

स श्रीमान् राघवो रामो लक्ष्मणं सन्निधिं गतम् ।
सायुज्यं संविधायैव प्रीयतां धार्म्मिकेषु च ॥८॥

---

# पण्डितप्रकाण्डलक्ष्मणशास्त्रिमहाप्रयाणम् *

[ निबन्धकः—श्रीयोगेन्द्रमोहनविद्यारत्नः ]

हा धिग् ब्राह्मण्यतेजःसुखकरसविता कालमेघावृतो द्राक्
ग्रीष्मे वैदग्ध्यसिन्धुं शमनकलशभूः पीतवानातपार्त्तः ।
सौजन्योद्यानशोभारचनसुचतुरः पादपो वज्रभिन्नः
कीर्त्तिस्तम्भो धरण्या बत नियतिवशाद् धिक् चिराय प्रनष्टः ॥१॥
सदा सदाचारपरः सुधीवरः सुरोपमो न्यायचरः सुभूसुरः ।
सदैव सन्तोषवशः स्मितानना न विद्यते शास्त्रिवरः स लक्ष्मणः ॥२॥
शास्त्राण्यस्मिन्नशेषाण्युपचितमहिमान्यासते स्म प्रकर्षात्
तेनासावद्वितीयः प्रथितगुणगणः शास्त्रिशब्दाभिधेयः ।
सर्वं शास्त्रानुशिष्टं विदधदनलसो लालसाहीनचेता
नृणामेको वरेण्यः शरणगतसुहल्लक्ष्मणो लक्ष्मणाभः ॥३॥
मूर्त्तं ब्राह्मण्यतेजः कलिकवलगतेऽप्यत्र संसारभारे
सम्भूयास्मिन्नसङ्ख्यानपथगतनरान् दर्शयामास चेत्थम् ।
स्वे धर्मे यद्वरेण्यं तदिह नु शरणं तेन नश्येष्टसिद्धि-
र्हेयं सर्वं ततोऽन्यद् विषमिव नियतं रम्यमापाततो यत् ॥४॥
स वेद वेदान्तमशेषतः सुधीर्न भामती तेन विनाद्य भावती ।
अलक्ष्मणं भारतवर्षमेतद् विभाति नश्यत्सुखमद्य सर्व्वतः ॥५॥
शिक्षाभावादनार्य्यैः क्षतमतिरधुना क्लव्यजातं समन्तात्
स्वेच्छाचारप्रचारः प्रतिपदमहह क्षीणशक्तिर्गतायुः ।
स्वेष्टार्थाद् विप्रकृष्टो निखिलजनगणोऽनर्थराशीनुदस्युः
स्वैः कार्य्यैर्जीतवीर्य्यान् निरसितुमनलं रोगशोकातिशीर्णः ॥६॥
दृष्ट्वैवं बहुधा जनानपथगान् मोहार्दितान् सव्यथः
शिक्षाभवजदुःखनाशनमतिर्विद्वद्वरो लक्ष्मणः ।

---

* शास्त्रिपादानां शोकसभायां परिषद्भवने वाचितम् ।

शिक्षापद्धतिमत्र काञ्चन नवां पूर्वानुशिष्टां शुभां
यत्नं चालयितुं चकार सुचिरं प्रोत्साहसक्तान्तरः ॥७॥
विद्या ते वशगा प्रसूय विनयं वन्ध्येतरा कीर्त्तिता
पात्रत्वञ्च ततस्ततो धनमलो धर्म्मश्च सर्व्वोपरि ।
इत्थं मानवकाम्यवस्तुनिवहं सौख्यैश्च कीर्त्त्यन्वितैः
सम्प्राप्तस्तदनु स्वपुण्यविजितं कैलासवासं गतः ॥८॥
धनं नु भस्मान्वयभातिभूषितं नृपञ्च दीनं गणयन्नभेदतः ।
स्वपुण्यपण्येन भवापणे स्थितः शिवोपमोऽसौ शिवतां समागतः ॥९॥
हा हन्त सन्तः सुतरां विषादिताः सौजन्यधाम्नोऽस्य सतो वियोगतः ।
नानेन तुल्योऽस्ति जनोऽत्र सर्व्वथा पाण्डित्यमैत्रीकरुणादिभिस्तथा॥१०॥
आस्तिक्यबुद्धिर्बहुशास्त्रशीलनाद् वैशिष्ट्यमासात्र जने प्रकर्षतः ।
दुर्भाग्यसारः किल तस्य मृत्युना विद्योतते नोऽद्य सपद्यशेषतः ॥११॥
न त्वं मृतो लक्ष्मण लक्ष्मणाग्रजपादाब्जजास्वामिपुरे तनुत्त्यजात् ।
कीर्त्तिः पुनस्त्वाममरं विधास्यते शोकान्मृतास्ते वयमत्र दुर्गताः ॥१२॥

---

## शोकः

[ निबन्धकः—श्रीश्रीजीवदेवशर्म्मा ]

वज्रध्वस्तं हिमगिरिशिरः स्रस्तमाशान्तरालं
भूमौ भ्रष्टं विबुधमुकुटश्रेष्ठमाङ्गल्यरत्नम् ।
लुप्तो दीप्तो दिनकरकरः प्राप्तवानन्तकालं
सान्द्रश्चान्द्रो विमलकिरणो ज्ञानसिन्धुर्विशुष्कः ॥१॥

ब्राह्मण्यनिर्म्मलरुचिः शुचिमर्म्मसारो
मानोन्नतो बहुमतो महिमावदातः ।
ज्ञानाचलः स विपुलः किल लक्ष्मणाख्यो
हा लोकलोचनपथात् क्व तिरोहितोऽद्य ॥

निस्तब्धशब्दनिवहा सहसाद्य वाणी
वीणा विभर्त्ति विकलेव गुणैर्विहीना ।
वज्रावली दिशि दिशि ज्वलतीव तीव्रं
तापं तनोति धरणी च जनैरसह्यम् ॥३॥

यो वर्णाश्रमधर्म्ममर्म्मरमहाहर्म्यैकचूडामणिः
स्निग्धज्योतिरजस्रसूनृतवचःस्यन्दो जनानन्दनः ।
कार्य्येषु स्थिरसारहीरकठिनो धीरप्रशस्तो महान्
आदर्शः सहसा स हा ! क्व नु हृतश्चौरात्मना मृत्युना ॥४॥

सौजन्यजन्यविनयः सरलः स्वभाव-
स्त्यागक्षमाशमदमा दृढधर्म्मता च ।
फुल्लप्रसूनफलपल्लवतुल्यरूपा-
स्ते ते गुणाः कमिह पादपमाश्रयन्तु ॥५॥

तस्मिन् यथोक्तगुणगौरवयुक्तगौर-
च्छाये स्वधर्म्मसुहिताय च मुक्तकाये ।
सत्यैकरक्षणविलक्षणलक्ष्मणेऽद्य
दूरं गते विघटितं न हि किं जगत्याम् ॥६॥

आकाशमीरकुमारिवङ्गजलधेरासिन्धुदेशावधि
ज्योतिर्यस्य यशःशशाङ्कजनितं निःशङ्कमुज्जृम्भितम् ।
भाषा भास इवोन्नता दशदिशो यस्मादलञ्चक्रिरे
क्रूरः कालघनो घनेन तमसा हा हा तमाच्छादयत् ॥७॥

काशीतटे सुरसरिन्निकटे विलीनः
सद्यो यदद्य परनिर्वृतिमेषि देव !
शोकानलज्वलितलोकमिमं विविच्य
संसिच्यतां सुमधुरा करुणाम्बुधारा ॥८॥

---

वेङ्कटाध्वरि-कवि-विरचिता

# आचार्यपञ्चाशत्

"श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥"
वेङ्कटनाथं देवं वेदान्तविहारिणं गुरुं च भजे ।
शेषगिरिधुर्यमाद्यं यं विदुरन्यं त्वशेषं गिरिधुर्यम् ॥१॥

श्रीमद्वेङ्कटनाथाख्यौ साधुचक्रमहादरौ ।
परमानन्दनिलयौ प्रपद्ये देवदेशिकौ ॥२॥

त्रातुं स्वयं भुवं जातं त्रय्यन्ताख्यातगौरवम् ।
शुभे भागवतं सन्तं स्तुहि देवं गुरुं च वाक् ॥३॥

रसनां दुर्नरेशानवर्णनापङ्कदूषिताम् ।
श्रुत्यन्तदेशिकोदन्तसुधाभिः शोधयाम्यहम् ॥४॥

सन्तस्त्रय्यन्तसूरीन्द्रचरणद्वन्द्वचिन्तकाः ।
आद्रियन्तामिदं स्तोत्रमन्तःसन्तमसच्छिदम् ॥५॥

धनायावैयात्यप्रभवकुजनस्तोत्ररचना-
घनायासोद्विग्नः परिमुषिततापत्रयभयम् ।
बुधानन्दोत्पादक्षमनिगमचूडागुरुकथा-
सुधापाथोराशिं सुचिरमवगाहेऽहमधुना ॥६॥

पुराकूपारक्ष्माधरक्रतुगणोद्यानपवन-
स्मरादिक्षोदीयोगुणकथननिर्विण्णरसनः ।
निबध्नामि श्रीमन्निगमशिखरार्यस्तवमिमं
समन्तां धीमन्तः क्वचिदचतुरां वाचमपि मे ॥७॥

क्व वाचामाचार्यः कविकथककण्ठीरवगुरुः
क्व चाहं मोघात्मा विचतुरवचःस्वप्यचतुरः ।
निराकृत्य व्रीडां निपुणपरिहासोपजनितां
तदीयस्तोत्रे मामिह तदपि भक्तिस्त्वरयति ॥८॥

निषद्या विद्यानां निखिलकुमतिव्यालगरुडः
सभा सौभाग्यानां सरसकवितापद्मसविता ।
प्रमाणं भाष्यस्य प्रपदनकलाजन्मजलधिः
करोतु क्षेमं नः कविकथककण्ठीरवगुरुः ॥९॥

करौ बध्नन् भक्त्या कविकथकसिंहार्यगुरवे
नमस्याः कुर्वेऽहं नतविततिमन्दारतरवे ।
प्रबन्धास्त्वय्यन्तप्रचुरतरसौरभ्यजटिलाः
प्रथन्ते यत्कॢप्ताः प्रतिभटचपेटाहतिकृतः ॥१०॥

प्रबन्धान् कर्त्तारः प्रतिजनपदं सन्ति बहव-
स्त्रयीचूडाचार्यैः सह गगनमर्हन्ति न हि ते ।
समन्ताज्जृम्भन्तां दिशि दिशि शकुन्ताः कृतरवाः
प्रकल्पन्ते किन्ते सरणिमनुसर्तुं खगपतेः ॥११॥

प्रसादौजःकान्तिप्रभृतिगुणसङ्केतभवनं
प्रगल्भं सन्दर्भं कविकथकसिंहार्यवचसाम् ।
लिहानः कर्णाभ्यां मुहुरभिदुहानं शमरसं
कविम्मन्यानन्यान् क इह बहुमन्येत रसिकः ॥१२॥

कवीनां सम्राजं कथकरथिकानामधिपतिं
नमःकर्मीकुर्मो निगममकुटीदेशिकममुम् ।
सहस्रेणी श्लोकैः सहृदयसुखैरेकनिशया
मधुस्रोतोह्रङ्क्षियैः मधुरिपुपदत्रद्वयमनौत् ॥१३॥

यदेतत्त्रीन् वर्णानवति चतुरो वा यदपरं
त्रयीशीर्षं प्राज्ञैस्तदुभयमविज्ञेयहृदयम् ।
कलौ स्फूर्तिं नीतं कविकथकहर्यक्षकविना
विना कश्चित्तिग्मांशोरयनयुगलोल्लासनचणः ॥१४॥

यः स्वर्गान्तरसर्गकर्मणि महत्येकाननः पद्मभू-
रस्त्राचार्यकमर्कवंशपतिना च्छालेण यत्रार्पितम् ।
तस्यैतस्य घने मुनेरभिजने तत्रावतीर्णात्मने
त्रय्यन्तैकधनाय विश्वगुरवे तस्मै परस्मै नमः ॥१५॥

यद्यत्रावजिगाहिषा यतिपतेः सिद्धान्तदुग्धाम्बुधा-
वुद्यद्दर्पकुदृष्टिदर्पदमने यद्यस्ति कौतूहलम् ।
जिज्ञासा यदि वा रहस्यकृतिषु प्राज्ञाः कुरुध्वं तदा
त्रय्यन्तार्यपदारविन्दयुगलीपर्य्यन्तलग्नं मनः ॥१६॥

श्रीमान् वेदशिरोगुरुः प्रदिशतु श्रेयांसि भूयांसि मे
यस्य श्रीपतिभक्तिनर्तनकलारङ्गैस्तरङ्गैर्गिराम् ।
वादायोधनवीरवारणघटासंहारसिंहारवै-
रस्ताबिल्यगिरां ज्वराभवसतिविस्तारनिस्तारकैः (?) ॥१७॥

ग्रथ्नन्तु प्रथिता बहूनि कवयो गद्यानि पद्यानि वा
श्रोत्रेषु श्रुतिमौलिदेशिकगिरो वर्षन्ति हर्षं सताम् ।
भूयांसि व्रततीततिः प्रतिवनं पुष्पाणि निष्पादय-
त्वामोदाभ्युदयं तथापि तनुते जातीव नातीव नः ॥१८॥

त्रय्यन्तार्य्यनिबन्धनानि कतिचित्कव्यन्तरव्याहृतैः
साम्येन प्रतियन्तु मन्दमतयः किं तावता हीयते ।
श्रीडल्कर्कटकीटकोटिनिबिडादेग्रन्तकीलालतो
मण्डूकाः कलयन्ति किं न्वतिशयं वैकुण्ठपादोदके ॥१९॥

जात्यन्धाः पदबन्धवर्त्मसु हठाद्विद्याचरोन्मारिणो
निर्मीता निगमाध्वलाध्यैकविना नित्यं प्रबन्धायुतम् ।
स्पर्धां केचन वर्धयन्ति यदि तद्धैर्यापि खद्योतकः
कामं तिग्मरुचा कचाकचिविधिं कस्मादिहोपेक्षते ॥२०॥

षट्सप्तानि निबन्धनानि बहुभिः सम्पाद्य संवत्सरै-
र्दृप्ता ये कवयोऽत्र तेऽपि सुजनैः स्तोत्रस्य पात्रीकृताः ।
निर्यत्नं तु निबन्धरत्नशतकं निर्माय धर्माय यो
निर्दर्पो निगमान्तदेशिकमणिर्न स्तौति कस्तं बुधः ॥२१॥

आचामीकरभूधरेन्द्रशिखरादा चापि लङ्कापुरा-
दाचार्यानखिलान् प्रणम्य शुभया याचामि वाचानया ।
सत्तादृक्कवितासुतर्कसरणौ तन्त्रे तथान्ते श्रुते-
र्दृष्टः किं सदृगागमान्तगुरुणा तथ्यं ग्रपे कथ्यताम् ॥२२॥

कुमतिहृदयतापीः कोऽपि वेदान्तसूरि-
दुरितरुचिपिशाचीं दूरमुच्चाटयेन्नः ।
श्रुतिमधुरमहाध्वन्युन्मिषद्गौरवं यं
विदुरुचितमभिज्ञा विष्णुघण्टावतारम् ॥२३॥

परमतदुरहन्ता (?) प्राप्तशास्त्रारिहन्ता
विकसितगुणभूम्ना वेदचूडार्यनाम्ना ।
विहरतु हृदि कश्चिद्विश्वमान्यो विपश्चि-
द्विदितसकलमन्त्रः सर्वतन्त्रस्वतन्त्रः ॥२४॥

प्रकटितनिजपक्षप्रक्रियोदर्कतर्क-
प्रणमितमकुटालीशाणसंघर्षशोणम् ।
शरणवरणविद्याविभ्रमोद्यानभूमि-
श्चरणयुगमुपासे चारुवेदान्तसूरेः ॥२५॥

दुरितमलिनमाद्यद्दुष्टमातङ्गभङ्गा-
दिह निजपदभाजां दत्तमुक्त्यनुषङ्गः ।
अधिकवनविहारी केसरी कश्चिदुच्चैः
श्रुतियुगपरिपूर्तिं स्तौति गम्भीरशब्दैः ॥२६॥

वितरतु निजमाध्वीसारसारस्वतं मे
विमतफणिनरेन्द्रो वेङ्कटेशः कवीन्द्रः ।
समजनि निरवद्यैः सुन्दरैर्यस्य पद्यै-
र्गलितकवनविद्याचण्डिमा डिण्डिमाख्यः ॥२७॥

जनयति निजशब्दैर्जिह्मगानां प्रकम्पं
समुपगतसदध्वा वेङ्कटेशः कविर्यः ।
अधिगतनिगमान्तं तं हरेः सन्निधाना-
दमृतमुपनयन्तं जानते वैनतेयम् ॥२८॥

द्रमिडनिगमशाखाद्रष्टुरुच्चैर्महर्ष-
श्चरणकमलसेवाचातुरीलब्धभूमा ।
श्रितजनसुरशाखी श्रेयसे भूयसे नः
कविकथकमृगेन्द्रः कल्पतेऽनल्पतेजाः ॥२९॥

प्रतिभटवादिकूटपरिपाटनकेलिपटु-
र्घटयतु वेङ्कटेशकविराडविरामपदम् ।
यतिपतिपादयोगशुचिरत्नदुरुक्तिनदी
विषयनिषद्वरव्यतिकरं हरते भजताम् ॥३०॥

मलयगुहाविहारिमरुदर्भकविभ्रमण-
प्रणमितमाधवीप्रविसरन्मधुवेपथुकृत् ।
रुजमधुना धुनातु मधुनाशनपादयुगी-
सरसिजवासिता श्रुतिशिरोगुरुसूक्तिझरी ॥३१॥

अक्षतकभारतीशिखरदेशिकदिव्यवचः-
परिचयचातुरीपरिपचेलिमशेमुषिकाः ।
चिरंमुरगीशवैरितुरगी निहितात्मभरा
विदधति दुर्मतप्रबलजिह्मगमर्मभिदाम् ॥३२॥

स्थिरं किमपि वैभवं दिशति या मुकुन्दप्रिया
तदीयमपि वैभवं त्रिजगति प्रतिष्ठापयन् ।
त्रयीमकुटदेशिकस्त्रुटितवैरिवाचाटको
ददाति भुवि सम्पदं तदपि निर्व्यदासं पदम् ॥३३॥

नटन् मृडजटाच्छटा लुठदमर्त्यलोकापगा
तरङ्गमदभङ्गदास्त्रिजगदामयच्छेदिनी ।
सुधा इव बुधादृताः सुरभिदुग्धसंस्पर्धिनी-
रमुष्यवशिरोगुरोरनुदिनं धयेयं गिरः ॥३४॥

श्रुतिमकुटगुरूक्तिमौक्तिकानि
श्रुतिपुटयोर्दधतां सतां पुरस्तात् ।
वयमपि कवयः स्म इत्यतोऽन्ये
वदितुमहो न सभासु किं त्रपन्ते ॥३५॥

वेदान्तरङ्गचरविश्वजनभ्रुकाम्य- (?)
पादान्तरङ्गनिगमान्तगुरूक्तिधाराम् ।
वेदान्तरञ्जनकलाकुशला विगाह्य
वादान्तरं जहति नो भुवि वावदूकाः ॥३६॥

आचार्य्यवर्य्यमविपल्लवमुल्लसन्तं
शाखाग्रताकलनपालितसद्द्विजेन्द्रम् ।
उच्चैरनन्तगुरुनन्दनमुद्यतार्ति-
रामोदिनं कमपि कल्पकमाश्रयेऽहम् ॥३७॥

रसने निपुणं भुजङ्गभङ्गे
　　विनतानन्दनमुत्तमं द्विजानाम् ।
परमागममौलिदेशिकं तं
　　स्तुहि वैकुण्ठगतिप्रदस्वपक्षम् ॥३८॥

कृतभारतगौरवप्रतिष्ठं
　　कृतिनं लक्ष्मणदर्शनैकनिष्ठम् ।
परया तु कुदृष्टिभङ्गशक्त्या
　　निगमान्तार्य्यमवैमि रामचन्द्रम् ॥३९॥

त्रयीमपि द्राविडसंस्कृतात्मना
　　द्वयीं दशां प्राप्तवतीं प्रपञ्चयन् ।
द्वयैकनिष्ठश्चतुराकृतिः कृती
　　करोत्यसंख्यां कविवादिकेसरी ॥४०॥

अर्वन्तमास्थे तमुपास्य देवं
　　गर्वन्तमोजं कुदृशां प्रशान्तम् ।
कुर्वन्तमेनं गुरुमन्तरेण
　　गुर्वन्तरं कोऽत्र गुणी वृणीते ॥४१॥

धरणिरमणे भिक्षाके वा धनेषु तृणेषु वा
　　निजगुणनुतौ निन्दायां वाबलासु शिलासु वा ।
समदृशमिमं सत्त्वोद्रेकप्रसन्नधियं हरि-
　　प्रपदनधनं त्रय्यन्तार्यं भजे मम दैवतम् ॥४२॥

विहरणगृहं विद्यादेव्या विरक्तिसरोजिनी-
　　विकसनरविर्जैत्रस्थानं विवेकमहीभुजः ।
शमदमगुणप्राणत्राणं दयाभ्युदयावनी
　　रचयतु मुदं वेदान्तार्यो रहस्यकलानिधिः ॥४३॥

प्रथितगरिमप्राचीनोक्तिप्रवर्त्तनवर्त्तनी
 प्रकटनपरश्रीभाष्यार्थप्रकाशनदीपिका।
विहितदुरितच्छेदा वेदान्तदेशिकभारती
 नवमरसदा नैषा केषां स्वदेत हृदे सताम् ॥४४॥

वासुदेवकमनप्रियान् दया-
 वासदेशहृदयान्वयाश्रयान्।
कौशिकान्वयभुवस्त्रयीशिरो-
 देशिकान् वयमुपाश्रयामहे ॥४५॥

स्वप्रकाशपरिभासिताखिलं
 तन्तुवर्णवरगोत्रसम्भवम्।
वेदमौलिगुरुरत्नमङ्गुतं
 श्लाघते भुवि न कः परीक्षकः ॥४६॥

भद्राभद्राक्षयेद्धा शमितविमतमुद्धीरवाधीरवाचां
धाराधारायमाणा गिर इह हि सतां स्वादिमा वादिमान्या।
कल्या कल्याणदाने श्रुतिशिखरगुरोरागता,रागतापैः
साकं सा कल्मषाणां गणमपनयतात्कारणा कारणानाम् ॥४७॥

न्यञ्चद्दैरिव्रवाञ्चि प्रकटम्डमतप्रक्रियाख्यक्रियाणि
लुव्यद्दुद्धोक्तिकानि हृतकृतगुरुवाग्धोरणावारणानि (?)।
स्वायम्भायामतानि प्रतिहतसुगतव्यागतव्याहृतानि
त्रय्यान्तर्योदितानि स्फुटनिगममतस्थापनानैपुणानि ॥४८॥

आस्तां दुस्तार्किकोक्तिः क्षतिरतिकृशतामागता सौगतानां
शैवी सा वीतपुष्टिः सरणिरुपनमत्तानवा जैनवादाः।
अध्वा मध्वादिसृष्टो विगलति कुदृशं चुक्षुभे पक्षभेदै-
र्निस्तन्द्रे देशिकेन्द्रे जयति यतिपतिप्रौढवागब्धिचन्द्रे ॥४९॥

अन्तर्ध्वान्तनितान्तक्लान्तनरविद्योताग्निकल्पच्छवि-
र्दुर्वादिव्रजगर्वपर्वतपविः श्रीवेङ्कटेशः कविः ।
अंहःकुञ्जरपुञ्जभञ्जनसृणिर्ज्ञानाग्निदिव्यारणिः
सत्त्वस्थैरभिनन्दनीयसरणिः सर्वज्ञचूडामणिः ॥५०॥

मोदाय वेदान्तगुरुः स भूया-
दध्यात्मविद्यामनघां गृहीतुम् ।
गुरुं त्रिवंशोद्दहमत्रिवंशो-
द्दहश्च रामानुजमाश्रयद्यः ॥५१॥

आसेतोर्विश्वजीवातोरा च गौरीगुरोर्गिरेः ।
इन्धे कविजनाहन्ता हन्ता वेदान्तदेशिकः ॥५२॥

श्रीताताध्वरिसोदरीतनुभुवः श्रीश्रीनिवासेष्टिनो
जातः श्रीरघुनाथदीक्षितकविर्जागर्ति यः कीर्तिमान् ।
आत्रेयस्य सुतः स तस्य सुमतेराम्नायचूडागुरुं
पद्यैरस्तुत वेङ्कटाध्वरिकविः पञ्चाशता मञ्जुभिः ॥५३॥

वेदान्तार्य्यस्तवमुषसि ये विद्वदानन्दहेतुं
पापठ्यन्ते पटुधिय इमं पावनानाममीषाम् ।
राजीवाक्षो वसति हृदये तद्गृहा गेहभागे
तद्भूपत्नीवदननलिने तत्कलिस्त्वस्तु दूरे ॥५४॥

इति श्रीरघुनाथार्य्यदीक्षिततनयस्य श्रीवेङ्कटार्य्ययज्वनः कृतिषु
आचार्य्यपञ्चाशत् सम्पूर्णा ॥

---

# सौदामनी-नीरदीयम्

[ निबन्धकः—के. ए. रामलिङ्गशास्त्री ]

कविसार्वभौमः कालिदासः किल तडित्तोयदयोर्योगं सकलरसिककुलाभिनन्दनीयं स्वीयकाव्यमणिमयमञ्जूषासु सुष्ठु प्रत्यतिष्ठिपत्, प्रणिजगाद च वंशमय-काकलमतल्लिकासु सुलिखितम्। तथाहि—

इन्दीवर-श्याम-तनुर्नृपोऽसौ
त्वं रोचना-गौर-शरीर-यष्टिः।
अन्योन्य-शोभा-परिवृद्धये वां
योगस्तडित्तोयदयोरिवाऽस्तु॥

इति रघुवंशे इन्दुमतिस्वयंवरघट्टे;

तां कस्याञ्चिद्भवनवलभौ सुप्तपारावतायां
रात्रिं नीत्वा चिरविलसनात् खिन्न-विद्युत्कलत्रः।
सूर्ये दृष्टे पुनरपि भवान् वाहयेदध्वशेषं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः॥
एतत् कृत्वा प्रियमनुचितप्रार्थना-वर्त्तिनो मे
सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या।
इष्टान् देशान् जलद! विचर प्रावृषा सम्भृतश्री-
र्मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः॥

यथा अहम् अबलाविप्रयुक्तः मन्नोदृशीं शोच्याम् अवस्थाम् आपन्नः, तथा त्वभवतः क्षणमपि चञ्चलयाऽप्यनुकूलतमया प्रियतमया सञ्चारिण्या यावदायुर्वीप्सया वियोगो माभूत्, सदा संयोग

एव भवतु इति यक्षेण, कविना च चारु आशास्यत इति व्यतिरेक-दृष्टान्तोऽयम् इत्यवधारणीयम् ।

किञ्च महाकवितल्लजोऽसौ सौदामनं स्फुरणं स्तनितं च स्तनयित्नो-रपरिमेयकार्यनिर्वाहकतया सङ्घटयामास। तद्यथा—यक्षस्तोसम-वस्थापरिज्ञानाय अवनिशयनासन्नवातायनस्थः विद्युदुन्मेषदृष्टिं खद्यो-तालीविलसितनिभां कर्तुम् अर्हसि अल्पाल्पभासम्, रमणवसतिं गच्छ-न्तीनां सीमन्तिनीनां रुद्धालोके नरतिपथे सूचिभेद्यैस्तमोभिरभि-संवृते—

सौदामन्या कनकनिकषस्निग्धया दर्शयोर्वीम्,
तोयोत्सर्गस्तनितमुखरो मा स्म भूर्विक्लवास्ताः ॥

इति, कुसुमसधम्माणी हि योसिदो······पुरन्ध्रीणां चित्तं कुसुम-सुकुमारं हि भवति ( आसाबन्धो सहावेदि)

आशाबन्धः कुसुमसदृशप्राणमप्यङ्गनानां
सद्यःपातप्रणयि हृदयं विप्रयोगे रुणद्धि ।
ताभ्यो मोक्षस्तव यदि सखे ! धर्मलब्धस्य न स्यात्
क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भाययेस्ताः ॥
निर्ह्रादस्ते मुरज इव चेत् कन्दरेषु ध्वनिः स्यात्
सङ्गीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥

त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु सत्सु सुरतसुखफलकं कल्पवृक्षप्रसूतं मधु पिबन्ति सुवासिनीसहिताः ; ·········

धौतापाङ्गं हर-शशि-रुचा पावकेस्तं मयूरं
पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ॥
विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
सङ्गीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् ।
स्निग्धगम्भीरनिर्घोषम् एकं स्यन्दनमास्थितौ
प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥

इत्थं पद्येऽस्मिन् किञ्चिद् अवधेयम्—वर्षाकालिके कालाम्बुदे प्रतिमुहुर्विलसन्तीं विद्युल्लतां कविसार्वभौमोऽयम् अभूतोपमाचमत्-कृत्याधानप्रसाधनेन सुदक्षिणादिलीपयोर्नीलमेघ-श्यामल-कृष्णवर्णा-भ्यन्तरथतल्लजाधिरूढयोः जाया-पत्योः कनत्कनकपीतवर्णयोरसदृश-लावण्योपवर्णनवाञ्छया ऐरावणस्य प्रेयसीं प्रकल्पयतीति। यथा किल श्रीमद्भगवद्गीतायां माघकविकृतौ 'शिशुपालवध' महाकाव्ये च

'दिवि सूर्य-सहस्रस्य भवेद् युगपदुत्थिता।
यदि भाः, सदृशी सा स्याद् भासस्तस्य महात्मनः॥'

'उभौ यदि व्योम्नि पृथक् पतेतामाकाशगङ्गापयसः प्रवाहौ॥
तेनोपमीयेत तमाल-नीलम् आमुक्तमुक्तालतमस्य वक्षः॥'

इतिवदित्यादि···

'शशिना सह याति कौमुदी सह मेघेन तडित् प्रलीयते।
प्रमदाः पति-वर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि॥'

शशिनमुपगतेयं कौमुदी मेघमुक्तम्
जलनिधिमनुरूपं जह्नुकन्याऽवतीर्णा।

अत्र—

"जलदमुपगतेयं चञ्चला श्यामलाङ्गम्"

इत्याद्यपि कविहृदये धारावाहिकया बहुनिदर्शन-प्रदर्शनरसिकसुहृदि तरङ्गितं विद्योतते इत्यभ्यूहितुं शक्यते; परन्तु महाकविना प्रस्तुत-वर्णनासक्तेन सर्वमप्युदाहरणम् एकत्र न सन्निवेशितम्।

रघुवंशे विद्युतं कवितल्लजोऽयं कनकमयवलयतया वर्णयामास। तथाहि—

'सृष्टस्त्वया चण्डि! कुतूहलिन्या
··· ··· ··· ···
'आमुञ्चती वाऽऽभरणं द्वितीयम्
उद्भिन्न-विद्युद्-वलयो घनस्ते॥'

अतश्च कविसार्वभौमोऽयं सर्वत्र सौदामनी-नीरदयोर्दाम्पत्ये स्वास्थ्यम् अपरिमेयम् अभिनन्दतीत्यकामैरप्यूरीकरणीयम्; प्रकृतं विवक्षामः; पायसं भक्षयामः।

'सौधे क्वापि महेन्द्रनीलघटिते सौदामनीवाऽम्बुदे
क्रीडन्ती सवयोभिरिन्दुवदना दिष्ट्या मयाऽध्यैक्ष्यत।
सा लीलावलितभ्रु संहितवती ताटङ्करुङ्गाञ्चलान्
कालिन्दीलहरीवलत्कुवलय-स्निग्धान् कटाक्षान् मयि॥'

इति मल्लिकामारुतप्रकरणे श्रीयुत उद्दण्डमहाकविः।

सौधे क्वापि महेन्द्रनीलकलिते सौदामनीनीरदौ
क्रीडन्तौ सवयोभिरिन्दुवदनौ दिष्ट्या मयाऽध्यक्षितौ।
तौ लीलावलितभ्रुवोर्विलसितैस्ताटङ्करुङ्गाञ्चलैः
कालिन्दीलहरीचलत्कुवलयस्निग्धैः कटाक्षैर्मुहुः॥

सौदामनी—सुदाम्ना अद्रिणा, जलधरेण वा एकदिक् समान-दिग्भवा 'तेनैकदिक्' इति पाणिनिसूत्रेण अण्प्रत्यये कृते सुदा-मन्शब्दात् आदिवृद्धौ, 'अन्' अन्, अणि प्रकृत्या स्यादिति टि-लोपाभावे, 'टिड्ढाणञ्...' इति 'सौदामन—' इति अणन्तप्रातिपदि-काद् अणन्तत्वप्रयुक्तङीपि, 'यस्येति च' इति अकारलोपे ङ्यन्तात् सु-प्रत्यय-तल्लोपयो कृतयोः 'सौदामनी' इति रूपं सिद्ध्यतीति विदित-मेव व्याकरण-निष्णातानाम्। अत्रैतद् अवधेयम्—

केचित् किल शास्त्रिमहाभागाः पदसौष्ठवे ईषदप्यवधानहीनाः 'सौदामिनी' इत्यपभाषन्ते। तत्त्वबोधिन्यां नाम वैयाकरण-सिद्धान्त-कौमुदीटीकाग्रन्थे मूल-प्रतीक-विवरणानाम् असाङ्गत्यं सन्दृश्यते मुम्बईस्थ 'निर्णयसागर'मुद्रणालये चतुर्वारं मुद्रितेऽपि पुस्तके; किं बहुना? महाकविभवभूतिविरचिते 'मालतीमाधव'प्रकरणेऽपि तत्रैव २६०० तम हायने मङ्गेशरामकृष्णतेलङ्गमहाशयेन शोधित-संस्कृतमुद्रापिते 'सौदामनी'नामक पात्रविशेषनामधेयेमपि बहुत्र

सौदामिनी सौदामिनी······इति अपशब्दभूयिष्ठयैव रीत्या द्योतमानं मानसम् आस्माकीनं विषादयतितमाम् इति संसूच्यते। प्रथमाङ्केऽपि कामन्दकीसुभाषिते—'अस्मत् सौदामिनी—'ममत्वम्······अष्टमाङ्कस्थे अन्तिमपद्येऽपि—

... ... ... ... ...

'सौदामिनीस्फुरणचञ्चलमेव सर्वम् ॥'

इति अङ्कितम्। तादृक् प्रकरणव्याख्यात्रितयेऽप्यपभ्रंशबहुलमेव प्रतीक-वाक्यमुपलभ्यते। किं बहुना? मद्रपुर्यां नाम (Madras) राजधान्याम् एतदीयशाखानगरादिषु द्राविडाक्षराकर 'ग्रन्थलिप्य'पर-नामकवर्णाङ्कितेष्वपि पुस्तकेषु 'तडित् सौदामिनी विद्युत् चञ्चला चपलाऽपि च।' इति श्रीमदमरसिंहीयं नाम लिङ्गानुशासनीयं पद्यम् 'सौदामिनी'पदयुक्तमेव उपलभ्यते।

व्याख्यासुधाख्यायां श्रीमद्भानुजीदीक्षितविरचितायां नाम लिङ्गा-नुशासनव्याख्यायां 'सौदामनी—' पदनिर्वचनानन्तरं 'सौदामिनी' इत्यपपाठ इति मुक्तकण्ठम् आख्यातम्; श्रीमज्जीवानन्द-विद्या-सागरीयेष्वपि मुद्रणेषु कलिकातावर्णाङ्कितेषु 'सौदामिनी' इत्येव समीक्ष्यते मालतीमाधवे।

यथा तथा वा भवतु, अस्माभिस्तु सौदामनी-नाम्नी काचिदाख्या-यिका लिलिखिषिता, तदेतद् भूमिकाऽपदेशेन एतावता प्रबन्धेन अप्रकृतं वा प्रकृतं वा अवश्य विज्ञेयम् आदितस्तावदेतावदावेदित-मित्यवधारयन्तु सहृदयधौरेया इति सकुतूहलं पारिषद्यानां पाद-कमलेष्वास्माकीनान् नमस्कारान् वा मनस्कारान् वा वितराम इति कल्याणम्।

---

# संस्तृतिः

[ निबन्धकः—श्रीसुरेन्द्रनाथविद्यारत्नः एम्. ए. ]

असृक्क्लिन्नः पिण्डो जरठजठरादेति हि रुदन्
रुदंस्तिष्ठत्यन्ते चलति हि रुदन्नेव यदितः।
जगद्दुःखग्रस्तं विषवदिति हेयं निगदतां
सतामीहा स्थाने तदिह विभवोच्छेदनपरा ॥१॥

मलयवलयवाता भ्रूविलासालकश्री-
प्रमदमदनलीलास्वार्थसम्पत् प्रभुत्वम्।
प्रतनुविततचञ्चत्कूटबन्धेन बद्ध्वा
प्रतिदिनमधिकाधीन् नून् हि कुर्वन्ति शोच्यान् ॥२॥

भोगा भोगिमहाशिरोमणिनिभा मृग्या हि नाप्याः क्वचिद्
आलोकं क्षणिकं विकीर्य कुलिशं क्षिप्यन्ति विद्युद् यथा।
रूपभ्रान्तमबोधविक्लवधियं लोभं नु लोभं नरं
ध्वंसायैव मरीचिका मृगमिवाकर्षन्ति ते केवलम् ॥३॥

संसारः प्रतिमीयते हि बहुशः पाथोधिदावादिभि-
र्वैमत्यं न च तत्र किञ्चिदपि नः किन्तूच्यते साञ्जलि।
ज्ञात्वा विज्ञतरा भवन्ति कति वा धन्यस्य कस्यापि भू-
रद्वैतस्य सुखेऽसुखे च सुधियः स्वर्गं प्रतिस्पर्द्धते ॥४॥

रतिर्धर्मे धर्म्याकृतिरनवगीता व्यवहृतिः
पराक्षेपे क्षान्तिः स्थितिरुचितमार्गे च शुचिता।
सुखेनैतास्त्याज्याः स्रगिव मदमत्तैर्वनगजै-
र्भवव्याधेर्बाधे रिपुरिति विजानद्भिरपि भोः ॥५॥

हृदारामे रामे विपदघविरामे रुचिमुषि
प्रपञ्चे सत्त्वानां व्यसननिवहे यद् व्यसनिता ।
तदामिच्छा भैक्ष्यं विरसपयसां क्षीरजलधौ
मरौ तृष्णाहामं सुरससरितो वा रसमुचाम् ॥६॥

सर्वथा बुद्बुदप्राया वासनाश्चलदासनाः ।
तत्प्रतिष्ठसुखानां तत्प्रतिष्ठा सुखतः कुतः ॥७॥

---

## अप्राप्तशास्त्रिणां पत्राणि *

(७)

श्रीशिवः शरणम् । पुण्यम् ।
आश्विनवदि २
१८३५

सविनयं सानुरागं सप्रणामं च प्रत्यावेदकः

प्रियभ्रातरः ! समधिगतं श्रीमतां कृपापत्रम् । समासादित-श्चामन्द आनन्दः । प्रेष्ठाः ! कुत इदानीं श्रीमती मे जननीदेवी ? सा किल विहाय तनयमिममेकाकिनमतीते मार्गशीर्ष एवारूढा त्रिदिवम् । सर्वथा प्रभवति दैवम् । सहधर्मिणी तु नाद्यापि [बालभाव-मतिक्रान्ता] । सकृदेव चोपागत्य मन्दिरमेतदात्मीयं प्रतिगता पितुः सदनम् । सम्प्रति चात्र गरीयान् ग्रन्थिज्वरप्रसर इति नेदानीमिमामा-नेतुमिच्छामि । अहमेव त्वचिराद् ग्रामान्तरं गमिष्यामि । विनिश्चितं

---

* अत्र प्रकाशितं पत्रद्वितयम् अभिनवभट्टबाणाचार्येति बिरुदविभूषिताय मद्रपुरनिवासिने विपश्चिद्वर्याय श्रीमन्त R. V. कृष्णमाचार्याय विलिखितं पुण्यश्लोकेन राशिवडेकरमहोदयेन । श्रीमता कृष्णमाचार्यमहोदयेन पुनरत्र-त्रिमेण प्रेम्णा अनल्पेन च कारुण्येन प्रसादीकृतमेतत् पत्रद्वितयं स्वीयानि च महार्हाणि प्रबन्धरत्नानीति चिराय तस्मिन् कृतज्ञतां वहामः । अचिराच्च प्रका-शयिष्यते समालोचनामीषां प्रबन्धानाम् इति । स. सा. प. स.

संस्कृतचन्द्रिकायाः प्रकाशनम्। समासादिता राजानुमतिः। सेयं प्रशान्ते ग्रन्थिज्वरे बहिरवतरिष्यति। आधीयतां कृपया लेखसाहाय्यमेतस्याः। अपि नाम प्रकाश्यत इदानीं व्याकरणग्रन्थरत्नावली? प्रकाशितायां चन्द्रिकायां प्रयतिष्येऽस्याः सविशेषमेव प्रचाराय। श्रेष्ठाः, अपि नाम शक्येत मद्रविभागीयानां संस्कृतपाठशालानामधिष्ठानानि सपत्रप्रापणनिर्देशमधिगन्तुम्? यदि शक्यं तदा तत्प्रेरणेनानुग्राह्यमात्मानमिच्छामि। अत्र कुशली जिज्ञासे सर्वाङ्गीणं मङ्गलं भवदीयमिति शम्।

विनीतः प्रियो बन्धुः
श्रीअप्पाशर्मा

(८)

श्रीशिवः शरणम्  सांगलीतः
७।१८३५

सविनयं सानुरागं सप्रणामं चावेदकः

प्रियबन्धवः! कियान् वा समयः समधिगतस्य श्रीमतां कुशलोदन्तस्य। अहं पुनः कालमेतावन्तमनधिगतभवदधिष्ठानः समीहमानोऽपि पत्रप्रेरणं नापारयं स्वाभीष्टं पूरयितुम्। नातिपूर्वमेव तु समासादितरत्नावलीकः प्रकाममेव प्रामोदिषि। अहमिदानीं कुशली। परिणीतं किलेदानीं मया भूयोऽपि। चतुर्दशवर्षदेशीया चेयं वः प्रजावती। जिज्ञासे श्रीमतां सर्वाङ्गीणं मङ्गलमनारतमेव। मा किल विस्मृतिपथमनुप्राप्यतामयं बन्धुः। वाञ्छामि प्रतिवचनप्रणयम्। प्रचीयतां प्रेमेति शिवम्।

विनीतवशंवदः सखा
श्रीअप्पाशर्म्मा।

प्रत्युत्तरं पुण्यपत्तने प्रेर्यम्। अपीदानीं प्रचरति विज्ञानचिन्तामणिः?

# किमपि संशयोद्घाटनम्

[ निबन्धकः—श्रीउपेन्द्रमोहनसांख्यतीर्थः ]

अव्ययो वानव्ययो वाव्ययीभावो भवेदिति ।
कातन्त्रपरतन्त्रेण यत्किञ्चन विविच्यते ॥

षट्समास्यां योऽयमव्ययीभाव इति श्रूयते शब्दानुशासने तदन्तपदमव्ययमनव्ययं वेति विप्रतिपत्तिः। अथ यद्यव्ययं स्याद् भवितव्यं तर्ह्येतत्पदोत्तरमव्ययश्रुतिविहितेन कार्य्येण, प्रतिषिद्धेन चानव्ययनिबन्धनकार्य्येणेति ।

तत्राव्ययीभावसमस्तशब्दानामव्ययत्वेऽनव्ययत्वे वा रूपनिबन्धनं वैलक्षण्यं नास्तीति प्रथमतः प्रस्तूयते। तथाहि—विभक्तिलोपस्तावदव्ययकृतो विशेषः शब्दकार्य्याणाम्, स च लोपोऽकारान्तप्रकृतौ सौत्रेणाम्भावेन बाध्यमानस्तदितरत्र च सूत्रान्तरेण व्यवस्थाप्यमानः कथमव्ययत्वमनव्ययत्वं वास्य प्रतिपादयेत् ।

न चाव्ययत्वादुपकुम्भादित्यादौ पञ्चम्याम्, उपकुम्भेन उपकुम्भे इत्यादौ च तृतीयासप्तम्योर्वैकल्पिकप्रयोगे विभक्तिलोपो दुरुद्धर इति वाच्यं, कलापमते अनकारान्तपदोत्तरतो विभक्तिलोपविधानसामर्थ्यादर्थादिह विभक्तिस्थितिः कल्प्यते। तेनाव्ययत्वे स्वीकृतेऽपि न काप्यनुपपत्तिः। पाणिनिमते तत्र विभक्तिलोपशङ्कया सौत्रिकी विभक्तिस्थितिर्व्यवस्थाप्यते। एतेनैतन्मते अव्ययत्वमस्योट्टङ्कितं भवति ।

इदानीं कार्य्यान्तरमालोचनीयं यदव्ययत्वे प्रतिसिध्येत प्रत्यवस्थाप्येत वा। तत्र यद्युपकुम्भादिपदमव्ययं स्यात्तदा तेन सह षष्ठीसमासो न स्यात्, 'सर्व्वपश्चात्प्रभृतिष्वेवाव्ययेने'ति समाससूत्रे समासघटकपदानां परिगणितत्वात्। तथा च श्रीपतिः 'क्वातोपकुम्भं' ज्येष्ठानुपदमित्य-

व्ययीभावस्यानव्ययत्वादि'त्याह । अव्ययत्वस्वीकर्त्तृमते छात्रोपकुम्भादि-पदानि प्रमाणं न वा ? प्रमाणत्वेऽपि 'प्रभृति' पदेन सृश्यन्ते न वेत्यादि सुधीभिश्चिन्तनीयम् । केनचित्तार्किकेणाव्ययीभावस्याव्ययतया तेन सह समासान्तरासम्भवाच्चेत्युचानेन तथाविधस्थले समासः प्रतिषिद्ध इत्यवगम्यते ।

दण्डादण्डीत्यादौ अव्ययीभावस्तेन चाव्ययत्वमस्येति परः । कलापमतेऽत्र बहुव्रीहिः, क्रियाविशेषणतया नियतं प्रयुज्यमानश्च दण्डादण्डिशब्दो नानव्ययकृतामनुपपत्तिमुपादत्ते । टीकाकृता च 'केश्चिदव्ययोऽयमि'त्युक्तवता आत्मनोऽसम्मतिः प्रादुरकारि । परिशेषकृता च 'अनव्ययत्वाद् दण्डादण्डिकम्, दण्डादण्डितरां, दण्डादण्डितमामित्यक् तरांतमां न स्यु'रित्युक्तम् । यदीदमव्ययं स्यात्तदा "अव्ययसर्व्वनाम्नः स्वरादन्त्यात् पूर्व्वोऽक् कः" इत्यक्प्रत्ययः, "आख्यातकिमेकारान्ताव्ययेभ्यः क्रियागुणप्रकर्षवृत्तिभ्य एव तरां तमामि"ति तरांतमांप्रत्ययौ च न स्युरिति भावः । अत्रापि स एव विकल्पः प्रादुर्भवति, तथाविधपदानि प्रमाणानि न वा, नो चेत्तत्र कारणान्तरमापादयितुं शक्यते न वा ?

अत्र चास्मदुपाध्यायचरणैः श्रीमद्भिः सीतानाथसिद्धान्तवागीशमहोदयैः स्वकृतायां चतुष्टयवृत्तिटीकायाम् "अव्ययीभावादकारान्ताद् विभक्तीनाममपञ्चम्या" इत्यादौ वक्ष्यमाणा दोषाः समदर्श्यन्त । "अव्ययीभावस्याव्ययत्वे (१) उपाग्निकमित्यत्राक् प्रत्ययप्रसङ्गः (२) उपवधुम्मन्य इत्यत्र ह्रस्वमकारागमाप्राप्तिः (३) उपकुम्भीभवतीत्यत्रावर्णस्य चौ इत्वञ्च न प्राप्नोति तत्रानव्ययस्यैव ग्रहणात्, यथा दोषा भवति दिवा भवतीत्यादि । (४) उपायस्कार इत्यत्र विसर्जनीयस्य सकारश्च न प्राप्नोति तत्रानव्ययविसृष्टस्यैव सकारोपदेशात् । (५) 'अन्यस्माल्लुक्' इति सूत्रविधानञ्चानर्थकं स्यात् अव्ययाच्चेत्यनेन सिद्धत्वादि"ति । [ अत्र हि तत्रभवतः केचन दोषा दुरुद्धरा इति प्रतिवादिनां मुखमुद्र-

णायालम्भवन्ति, केचन च क्षोदक्षमा लक्ष्यन्ते। तथाहि (२)द्वितीय-दोषे उपवधुमन्य इत्यत्र ह्रस्वमकारागमाप्राप्तिरिति यदुक्तं तन्न सङ्गच्छते; नात्र ह्रस्वमकारागमयोरुभयोरप्राप्तिरपि तु केवलमकारागमस्य। "दीर्घस्योपपदस्यानव्ययस्य खानुबन्धे" इत्यनेनात्र ह्रस्वस्तत्रभवतामभिमत इत्यनुमीयते, परमिह हि "स्वरो ह्रस्वो नपुंसके" इत्यनेनैव ह्रस्वः स्यादित्युभयाप्राप्तिर्नास्माभिः कथमप्यवबोद्धुं शक्यते। मन्ये तत्रभवतां ह्रस्वे सति मकारागमाप्राप्तिरिति प्रतिपिपादयिषितमासीत्।

अपरञ्च (५) पञ्चमदोषे "अन्यस्माल्लुग् इति सूत्रविधानस्यानर्थक्यं स्या"दिति यदुक्तं तदपि नास्मभ्यमतिमात्रं रोचते। तथाहि—अन्यस्माल्लुग् इत्यनेनाकारान्तेतरप्रकृतेर्विभक्तिलोपसामर्थ्यादकारान्तप्रकृतेर्लोपाभावः कल्प्यते, असति चास्मिन् सूत्रे अव्ययाच्चेत्यनेन लोपो भवन्नविशेषादकारान्तादपि प्रसज्येत? न चामा समाम्नातत्वान्नायं दोषः सावकाश इति वाच्यं, तत्रापञ्चम्यामिति प्रतिषेधात् पञ्चमीविभक्तौ, "वा तृतीयासप्तम्यो"रिति च पक्षे लोपप्राप्तेर्निरर्गलत्वात्। अन्ये चैतदर्थमव्ययत्वं प्रतिपद्यापि लोपव्याघाताय वाचनिकीं विभक्तिव्यवस्थितिं सूत्रयन्ति। परमव्ययत्वाभिमतिव्याघातको दोषस्तत्र भवद्भिरुदलेखीत्येतावतैव सिद्धममीहितांस्तान् नास्मादृशा माक्षिकवृत्तयः स्पृच्छन्तीत्यलं मान्यानां वचांस्याक्षिप्यापराद्ध ]

ते चामी दोषाः पदगतत्वाद् व्याकरणसामान्याः कौमारैरुद्धरा वैयाकरणान्तरैश्च कथं सूद्धराः स्युरिति प्रस्तोतुमग्रेसरामः। कलापमते त्वव्ययीभावस्यानव्ययत्वं युक्तितः प्रमाणतः कण्ठोक्तितश्च व्यक्तीकृतम्। इदानीमन्यत् किञ्चन प्रमाणमुपस्थाप्यते स्थूणानिखननन्यायेन। तथाहि अव्ययीभावस्याव्ययत्वे 'स नपुंसकलिङ्गं स्या'दिति कलापसूत्रं प्रामादिकं भवेत्। न चाधिस्त्रीत्यादौ "स्वरो ह्रस्वो नपुंसके" इत्यनेन क्लीवलक्षणो ह्रस्व एव फलमिति वाच्यम्, अव्ययीभावसमासे हि पूर्व-

पदार्थप्राधान्यनियमादुत्तरपदस्य गौणत्वमुपनमेत्, ततश्चार्थवशाच्छब्दस्यापि गौणतया "गोरप्रधानस्यान्त्यस्य स्त्रियामादादीनाञ्चे"त्यनेनापि ह्रस्वत्वमवाधं स्यादिति। अथ यत्राप्रधानं गोशब्दस्त्रियामादादयश्च न वर्त्तन्ते तादृशस्थलेऽधिसोमपम् इत्यादौ स्त्रीविषयकमनुशासनमप्रविशत् सूत्रस्यास्य लक्ष्यहीनतादोषमपास्यतीति, सत्यमेवमप्यनतिप्रयोजनं प्रतिपश्यामः सूत्रम्। यथाहि मुख्याव्ययानां लिङ्गग्राहितायाः प्रातिस्विकफलाभावेऽपि विशेषणनियमार्थं लिङ्गवत्त्वमवश्यमङ्गीकार्य्यं, तच्च लिङ्गमुभयोरेव मतयोरन्तेऽपि सूत्रं सामान्यतः क्लीवमेव स्त्रीकर्त्तव्यमित्यापतति, तथैवात्राप्यव्ययत्वे स्त्रीकृते सामान्यतः समासज्यमानेन क्लीवत्वेनैवोपपत्तौ तदर्थं सूत्रकल्पना व्यर्था स्यात्। एवमेव केचिदाचार्य्याभिप्रायं वर्णयन्ति।

यदि चाव्ययानां लिङ्गवत्त्वमप्रमाणीकुर्व्वद्भिः कैश्चित् तद्विशेषणस्यैव तद्वत्त्वमनुमीयते ;—यथा परिशेषकृद्भिः "नित्यमसङ्ख्यस्ये"ति सूत्रयद्भिर्विशेषणस्यैव लिङ्गवत्त्वं प्रमाणीक्रियते—तथा सत्यधिसोमपमित्यादौ ह्रस्वार्थमेव क्लीवलिङ्गविधानं प्रतिबध्नाति वैफल्यमस्य सूत्रस्य। तच्च विधानमुभयमतसाधारणमित्यव्ययीभावस्याव्ययत्वमनव्ययत्वं वा नातः सिद्धतया पर्य्यवस्यति।

अस्य च सूत्रस्य प्रयोजनवत्तायां संशयानान् प्रत्याह वृत्तिकारः—"अव्ययपूर्व्वपदत्वादलिङ्गतैव प्राप्नोति वचनम्" इति। अत्रालिङ्गतेत्यस्य यावल्लिङ्गराहित्यं ग्रन्थकर्त्तुराशय इति प्रतिभाति। त्रिलोचनसुषेणयोरप्येतदर्थे सम्मतिर्दृश्यते। तथा चैतद्ग्रन्थोत्थितौ वीजमाह त्रिलोचनः—"पूर्व्वपदार्थप्रधानो ह्यव्ययीभावः। पूर्व्वपदार्थस्य चासत्त्वभूतत्वाद् लिङ्गसंख्याभ्यां योगो न स्यादत इदमुच्यत" इति।

सुषेणस्य तु—"ननु किमर्थमिदम्? यावता विशेषलिङ्गावगत्यभावात् सामन्यत्वान्नपुंसकं सिद्धमेवेत्यभिप्रायेण सिद्धान्तमाह—अव्ययपूर्व्वपदत्वादिति वृत्तिः।" इति। सोऽयमर्थः कथमलिङ्गतापदेन

प्रतिपाद्यत इति नाद्य यावन्निरनैष्यम्। निर्नीतार्थाश्च व्याकरणकर्णधारा वृत्तिग्रन्थमिमं समं विवृत्या व्याकुर्य्युरिति बलवद् विश्वसिमि। तदियं कलापप्रतिभा।

अन्ये च शाब्दिका 'अव्ययीभाव' इत्यतिगुर्व्या पूर्व्वाचार्य्यसंज्ञया संज्ञपितसंशयत्वेनोक्तानाशया अव्ययत्वमस्य व्यपदिशन्ति। अथ चानव्ययपूर्व्वपदे हिमुन्यादौ व्यभिचारात् प्रायिकीयमन्वर्थतेति नान्वीक्षते। क्वचिदंशे संशयितप्रामाण्येयं संज्ञा कथमंशान्तरेऽप्यसंशया स्यात्।

आस्तां तावदेतत्। अव्ययत्वमस्यीकुर्व्वताममीषां किन्तावत् परिकर्मोपायस्कारादेरुपकुर्व्वीतेति न प्रणिदध्मः। तुल्ययोगक्षेमत्वाद्धिमुन्यादावपि 'स नपुंसक'मिति सूत्रमनतिप्रयोजनमीक्षन्ते लौकिकाः प्रेक्षावन्तः।

परमतार्षं चक्षुर्यदि किञ्चनालौकिकं फलं पश्येत् तत् पश्यतु नाम; अस्माकन्त्वेतावदेव विज्ञानमिति विज्ञापयामोऽस्मत्कुलकमलिनीदिनेशानां श्रीमन्मधुसूदनसरस्वतीपादानामुदारवचनोपन्यासपुरःसरम्—

ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियं
ज्योतिः किञ्चन योगिनो यदि परं पश्यन्ति पश्यन्तु ते।
अस्माकन्तु तदेव लोचनचमत्काराय भूयाच्चिरं
कालिन्दीपुलिनेषु तत् किमपि यन्नीलं तमो धावति॥

इति शम्।

# जातिर्नित्या

## ( खण्डनखण्डनम् )

[ निबन्धकः—श्रीबटुकनाथभट्टाचार्य्यः ]

जातेस्तत्त्वोद्घाटने जातधर्म्मो मर्म्मग्राहे वादिवाचोऽसमर्थः ।
तर्कच्छिद्रं गर्हया गृह्यमानश्चातुर्वर्ण्योज्जीवकः सोऽपि जीयात् ॥

जातावैक्यं सूचितं पाणिनीये
सूत्रे चैवं पौरुषेऽपि प्रयुक्तम् ।
"विप्रः चात्रो व्यक्तिवाची न जाति"-
र्जल्पन्नेवं पण्डितः सोऽपि चित्रम् ॥

"अस्थाने संसाधयन्" अत्र भग्नां नो जानीते यो यतिं स प्रगल्भः ।
छन्दःशास्त्रे मात्त्रिकीं वृत्तिमाप्तो दोषज्ञत्वं घोषयत्यात्मनस्तु ॥

"सर्वैर्विद्वत्वेन मान्योऽपि निन्द्यो
वर्णान् नित्यान् यो न जानाति मूढः ।"
जातेर्नित्यत्वोपहासिन्यहो किं
नैतद्वाक्यं सङ्गतं व्यङ्गपद्ये ॥

इत्थं स्पष्टं "पण्डितम्मन्यमानं" शब्दं दुष्टं मन्यते शाब्दिको यः ।
इष्टापत्तिं न क्षमो वापि बोद्धुं नूनं तर्केऽगाधतीर्थायतेऽसौ ॥
छन्दोबद्धं लक्षणं चेन्न जातेश्चातुर्वर्ण्येऽव्याप्तमस्मि प्रतुष्टः ।
निर्दोषत्वं तस्य कैः कैरुपायैस्ते कुर्व्वन्तु न्यायमात्रोपजीव्याः ॥
चातुर्वर्ण्यस्थापने सत्सु नानाप्रस्थानेषु प्रोज्झ्य युक्त्यन्तराणि ।
नैयायिक्या नावलम्बेत शैल्या सामान्यं यः किं स शास्त्रोपहासी ॥
शास्त्रन्तावन्न्यायमेकं विवेके वर्णानां वा जातिवादं प्रमाणम् ।
ये मन्यन्ते सम्प्रबोधाय तेषां भूयस्तथ्यं न्यस्यते किञ्चिदत्र ।
आसीद्विश्वं ह्येकवर्णं पुराथ त्रेतायान्तद्वर्णशः संविभक्तम् ।
वृत्तान्तो यो भारतादौ प्रसिद्धः संशोध्योऽसौ जातिनित्यत्ववक्त्रा ॥

शालोऽश्वत्थो वृक्षवर्गे वटो वा
गौरश्वो वा गर्द्दभो जन्तुवर्गे ।
भिन्नाश्चैवं जातयो ब्राह्मणाद्या
मर्त्त्येष्वस्मिन् विद्यते किं प्रमाणम् ॥

जातिर्नैव स्वीकृता तार्किकोक्ता वेदान्त्याद्यैर्दर्शनाचार्य्यमुख्यैः ।
काणादे वा गौतमीये ममत्वाद् यद्यप्येतन्नो विवृण्वन्ति केचित् ॥
व्यक्तेर्नान्या जातिरित्याहुरेके भिन्ना चान्ये किन्तु गम्यानुमित्या ।
भिन्नाभिन्ना वा विलासो विकल्पस्यान्येऽजातौ जातिमेवाक्षिपन्ति ॥

सर्वेऽप्येते बौद्धवादाभिभूता:
श्रद्धाहीना जातितत्त्वे किमासन् ?
किं शास्त्राणां वावमन्तार एते
प्रश्नो वास्तामेष को वा स्मरेत्तान् ॥

विप्रादीनां वर्णतो यत् पृथक्त्वं
शास्त्रे मूलन्तस्य जन्मैव नोक्तम् ।
जातिस्पर्शी विच्युतो ब्रह्मवृत्ता-
ज्जल्पत्वन्यद् यादृशन्तादृशं वा ॥

जातिः सिध्येज्जन्मनैव ब्रुवद्भि-
र्न ज्ञायन्ते किं पुराण्यः कथास्ताः ।
यत् पुत्रेभ्यो जज्ञिरे श्रीमनोः प्राग्
विप्रः कश्चिद्वैश्यशूद्रौ तथान्यौ ॥

आसीद्विप्रश्चार्षभस्तस्य चैकः पुत्रो जज्ञे ब्राह्मणः क्षत्रियोऽन्यः ।
क्षात्रे वंशे शौनके जन्म लब्ध्वाप्यन्तर्भुक्ताः सर्व्ववर्णेषु चान्ये ॥

वार्त्ताप्येषा श्रूयते भार्गवाणां
वंशं सौरञ्चाश्रिता चैव चान्द्रम् ।
राजन्योऽभूद् गृत्सपूर्व्वो मदाख्यां
बिभ्रत् पुत्रास्तस्य वर्णत्रयस्थाः ॥

इक्ष्वाकोर्वा क्षत्रियाद् यच्च जातौ
विप्रक्षत्रौ द्वौ सुतौ तन्मृषा किम् ।
देवापिर्वा शान्तनोः क्षत्रियस्य
ज्येष्ठो विप्रोऽभून्न किं तच्च सत्यम् ॥
आस्तान्तावत् पिष्टपेषप्रयत्नो
दृष्टान्तैः किं युक्तिभिर्वा फलं स्यात् ।
तूलोत्क्षेपं सङ्कटे मौनभाजा-
पास्यन्ते ते जातिवादप्रवक्ता ॥
नित्यानित्यौ यत्फलौ क्षत्रवैश्यौ नित्याः स्युर्वावान्तरा वर्णभेदाः ।
जात्युत्कर्षे दर्शितश्चापकर्षे यद् वैचित्र्यं शोभनन्तत्र मौनम् ॥
दूये तावद् यद्रसैकोपजीव्यं
काव्यं तर्कैः कर्कशैराकुलार्थम् ।
जातिर्मूलं जन्म वा वृत्तमेतत्
पर्य्यालोच्यं नैकधा पक्षवर्जम् ॥

---

## वसन्तोत्सवः

( पूर्वतोऽनुवृत्तः )

[ निबन्धकः—श्रीकालीचरणमित्रः ]

कुरु प्रसादं देवेश रतिप्रीत्या वृषध्वज ।
सञ्जीवयेश्वर शम्भो मदनं कृपया प्रभो ॥
तच्छ्रुत्वा तु महादेवो हृष्यन् प्रोवाच पार्व्वतीम् ।
उपप्लुतं जगत् सर्वं मन्मथेन समीरिणा ॥
मया दग्धस्य कामस्य पुनरागमनं कुतः ।
अस्मिन् वसन्तसमये शुक्लपक्षे त्रयोदशी ॥

अस्यां मनोभवो देवि भविष्यति शरीरवान् ।
एवं वरमसौ दत्त्वा मन्मथाय युधिष्ठिर ॥
जगाम हिमवच्छृङ्गं कैलासं पार्व्वतीप्रियः ॥
पूजाविधानमपरं कथयामि शृणुष्व तत् ।
लीलाविलासगमनं गर्व्वितेवामराङ्गना ॥
गान्धर्व्वगीतवादित्रप्रेक्षणेव समाकुलम् ।
नन्द्यावर्त्तरतिक्रीडाप्रीतिविद्याधरीयुतम् ॥
मध्याह्ने पूजयेद्भक्त्या * * * * ।
मन्त्रेणानेन कौन्तेय नरो नारीसमन्वितः ॥
नमो देवाय मराय देवदेवाय मूर्त्तये ।
ब्रह्मविष्णुशिवेन्द्राणां मनःक्षोभकराय च ॥
उक्त्वैवमर्च्चयित्वा तु देवदेवं मनोभवम् ।
ततस्तस्याग्रतो देया मोदका सुखमोदकाः ॥
नानाप्रकारान् भक्ष्यांश्च कामोऽयं प्रीयतामिति ।
ततो विसर्जयेद्विप्रान् दत्त्वा युग्मं सदक्षिणम् ॥
स्नापितं पूजयेन्नारी वस्त्रमाल्यादिभूषणैः ।
कामोऽयमिति सञ्चिन्त्य प्रकृष्टेनात्मनात्मना ॥
मन्मथायतने तस्मिन् यजमानः प्रकृष्टवाक् ।
रात्रौ जागरणं कुर्य्यात् सुखरात्रिर्यथा भवेत् ॥
कर्पूरकुङ्कुमक्षोदगन्धताम्बूलसज्जनैः ।
स्रग्धारामद्यदानैश्च कुर्य्याद्राजन् महोत्सवम् ॥"

प्रतिहायनं यो होत्थं व्रतानुष्ठानं विदधाति स नूनं रोगशोकादिभ्यः परिमुच्यते। आयुरारोग्यं सौभाग्यं कीर्त्तिस्तथा श्रीरतिवर्द्धन्त उत्तरोत्तरम्। देशमध्ये सुभिक्षादिसर्व्वविधशुभलक्षणानि प्रादुःषन्ति च।

मदनमहोत्सवः खल्वस्मिन् देशे भारते वर्षे सार्व्वजनिकमहोत्सव

आसीत्। समयश्चासीदीदृग् यदा भारतस्य सर्व एवाधिवासिनो महोत्सवमत्ता आसन्। राजानस्तथा प्रजा धनिनस्तथा निर्धना विद्वांसस्तथा मूर्खाः—सर्वेऽस्मिन् महोत्सववासरे विस्मरन्त 'आधिव्याधिप्रभृतीनि दुःखदैन्यानि सर्वाण्येवाबाधामोदप्रमोदेषून्मत्ता आसन्। न केवलं शास्त्रानुशासनमभिनवरमणीया प्रकृतिशोभापि तेन संयुक्ता। धर्म्मप्राणानामपि मानवानां मनोरथो नूनं महामोदे विपुलपुलकाकुलित आसीत्।

नाधुना स्वरूपतो नामतश्च वसन्तोत्सवस्यानुष्ठानमस्मिन् भारतवर्षे कुत्रचन दृश्यते। होलाकामहोत्सवे ( होलीति भाषा ) वसन्तोत्सवस्य छायापातः परिलक्ष्यतेऽस्माभिः। होलाका हि भगवतः श्रीकृष्णस्य 'दोलोत्सवस्याङ्गभूता। हन्त! कदा प्रभृत्ययं मदनमहोत्सवो दोलोत्सवरूपेण परिणतोऽभेदयं तावत्तदैतिहासिकरहस्यम्।

यदयं वसन्तोत्सवोऽन्यतमप्रधानोत्सवत्वेन परिगणित आसीत्तत्र बहूनि प्रमाणानि प्राचीनपुराणेतिहासकाव्य-नाटकादिषूपलभ्यन्ते। पुराणेषु मदनव्रतस्य मदनोत्सवस्य वा विततं वर्णनं दृश्यते, काव्यनाटकादिषु च तस्य लौकिकचित्रं स्फुटमिव समालोक्यते। व्रतान्तरेष्विवास्मिन्नुत्सवे दानमुपवासो दक्षिणा चासंस्तथा ब्राह्मणभोजनादेरपि कश्चनाभासः श्रीहर्षकृतरत्नावलीनाटिकाया मदनमहोत्सवाख्ये प्रथमाङ्के राजविदूषकसंवादे सुव्यक्तः परिलक्ष्यते।

राजा—" * * * * नाम्ना धृतिम्।

काम: काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः

विदूषकः—"भो वयस्य! अहं पुनर्जानामि न भवतो न कामदेवस्य, ममैवैकस्य ब्राह्मणवटुकस्यायं मदनमहोत्सवो यस्य कृते प्रियवयस्येनैवं मन्त्रयते।"

व्रतान्ते च विदूषको राज्ञीदत्तविलेपनकुसुमाभरणदानग्रहणपूर्वकं सहर्षं स्वस्तिवाचनिकमुवाच देव्यै वासवदत्तायै।

सुरापानप्रथा किल सर्वेषां मध्ये तस्मिन्नुत्सववासरे विद्यमानासीदिति प्रतीयते। स्त्रियोऽपि मद्यं पेपीयमाना मत्ततायाः परां कोटिमधिगता आसन्। तथाहीरावतीवदनेन मालविकाग्निमित्रनाटके कविकुलचूडामणिना श्रीमता कालिदासेनाशंसितम्—"हञ्जे, मदेण गिलाअमाणम् अत्ताणम् अज्जउत्तस्स दंसणे हिअअं तुवरावेदि, चलणा उण ण पसलन्ति।"

अस्मिन्नुत्सवे दोलनमप्यासीदित्यत्र नास्ति कश्चन सन्देहः। हिन्दोलायां दोदुल्यमानाः सन्तो नैसर्गिकसुन्दरवसन्तमहोत्सवस्याभिनवललितमाधुर्यमाविश्चक्रुर्जनाः। महाकविकुलशिरोमणि-कालिदासकृतानेकग्रन्थेषूल्लिख्यतेऽस्य प्रसङ्गः। तथाहि—रघुवंशे नवमसर्गे राज्ञो दशरथस्य कामिनीजनभुजलताश्लेषकण्टकितकण्ठस्य हिन्दोलायां दोलनव्यापारो यथा—

"अनुभवन्नवदोलमृतूत्सवं
पटुरपि प्रियकण्ठजिघृक्षया।
अनयदासनरज्जुपरिग्रहे
भुजलतां जडतामबलाजनः॥"

किञ्च मालविकाग्निमित्रनाटके तृतीयाङ्के सूचितो दोलनार्थं दोलागृहगमनवृत्तान्तो देवीरावतीमुखेन।

अपि च सखिभिः सह रक्ताशोकपादपमूलनिषण्णवासवदत्ताविहितकामार्चनानन्तरं तदनुष्ठितभर्तृपूजासत्कारव्याजप्रकटिततदानीन्तनव्यापारो रत्नावलीनाटिकायां स्फुटमेव परिलक्ष्यते। मधूत्सवे मदनपूजायां प्रशस्तश्चैवं ह्यशोकवृक्षः सिद्धिदायकत्वात्। प्रथमन्तावदयमशोकः पञ्चवृक्ष्यामेकतमः। अपरञ्च भगवतः पञ्चबाणस्य प्रधानसायकत्वेन परिगणितमशोकपुष्पञ्चेत्यपरो नेदिष्ठः सम्बन्धः सह पुष्पधन्वना। वसन्तसमागमे विलम्बश्चेद् घटते ह्याशोककुसुमोद्गमस्य तर्हि प्रमदाकुलं प्रमादाकुलं सन्मन्त्रादीनामाश्रयणेन तथा चाशोक-

वृक्षेषु चरणाघातेन प्रसूनोद्गमकरोत्। ललनाचरणाघातेन पुष्पोद्गमस्य कविप्रसिद्धिर्यथा साहित्यदर्पणे सप्तमपरिच्छेदे—"पादाघातादशोकं विकसति वकुलं योषितामास्यमद्यै"रित्यादि। तथा च "पादाघातादशोकस्ते सञ्जाताङ्कुरकण्टकः" इति।

अस्मिन्नृतूत्सवे शास्त्रकारा अशोकतरुमूले प्रद्युम्नपूजाव्यवस्थाव्यपदेशेन जनानां स्वास्थ्यरक्षाविधानं विशेषेणाकुर्वन्, यतो वैद्यकशास्त्रे गुणराजिविराजितत्वमुच्यतेऽशोकस्य। कामार्चनायामशोकस्यैव प्राशस्त्ये सत्यपि चूतमञ्जरीभिरञ्जलिर्दीयते। एवञ्च वसन्तमहोत्सवोल्लेखावसरेऽभिज्ञानशकुन्तलनाटकस्य षष्ठाङ्केऽभिज्ञायते यच्छकुन्तलाप्रत्याख्यानजनितपश्चात्तापतप्तहृदयो राजा दुष्यन्तो मदनोत्सवनिवारणाय चूतमञ्जरीचयनं निषिध्यति परन्तु परभृतिकामधुकरिके एतद्विषयमनधिगम्य रुचिरसहकारकोरकोद्गमं दृष्ट्वैवानन्दोत्फुल्ललोचने अञ्जलिबन्धनपूर्वकं "णमो भअवदे मअरध्वजाअ।

अरहसि मे चूअङ्कुर दिण्णो कामस्स गहिदचायस्स।
पहिअजणजुअइलक्खो पञ्चब्भहिओ सरो होहि॥"

( क्रमशः )

---

## सप्तपातालोपवर्णनम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—श्रीवसन्तकुमार-रायविद्यारत्नः ]

एतत्तु नागलोकस्य नाभिस्थानस्थितं पुरम्।
पातालमिति विख्यातं दैत्यदानवसेवितम्॥
इदमद्भिः समं प्राप्ता ये केचिद् भुवजङ्गमाः।
दन्तो महानागं नदन्ति भयपीडिताः॥

अत्रासुरोऽग्निः सततं दीप्यते वारिभाजनः ।
व्यापारेण धृतात्मानं निबद्धं समबुध्यत ॥
अत्रामृतं सुरैः पीत्वा निहितं निहतारिभिः ।
अतः सोमस्य हानिश्च वृद्धिश्चैव प्रदृश्यते ॥
अत्रादित्यो हयशिराः काले पर्व्वणि पर्व्वणि ।
उत्तिष्ठति सुवर्णाख्यं वार्भिरापूरयन् जगत् ॥
यस्मादलं समग्रास्ताः पतन्ति जलमूर्त्तयः ।
तस्मात् पातालमित्येवं ख्यायते पुरमुत्तमम् ॥
ऐरावणोऽस्मात् सलिलं गृहीत्वा जगतो हितः ।
मेघेष्वामुञ्चते शीतं यन्महेन्द्रः प्रवर्षति ॥
अत्र नानाविधाकारास्तिमयो नैकरूपिणः ।
अप्सु सोमप्रभां पीत्वा वसन्ति जलचारिणः ॥
अत्र सूर्य्यांशुभिर्भिन्नाः पातालतलमाश्रिताः ।
मृता हि दिवसे सूत पुनर्जीवन्ति वै निशि ॥
उदयन्नित्यशश्चात्र चन्द्रमा रश्मिबाहुभिः ।
अमृतं स्पृश्य संस्पर्शात् सञ्जीवयति देहिनः ॥
अत्र ते धर्म्मनिरता बद्धाः कालेन पीडिताः ।
दैतेया निवसन्ति स्म वासवेन हृतश्रियः ॥
हिरण्यपुरमित्येवं ख्यातं पुरवरं महत् ।
दैत्यानां दानवानाञ्च मायाशतविचारिणाम् ॥
अनल्पेन प्रयत्नेन निर्म्मितं विश्वकर्म्मणा ।
मयेन मनसा सृष्टं पातालतलमाश्रितम् ॥
अत्र मायासहस्राणि विकुर्व्वाणा महौजसः ।
दानवा निवसन्ति स्म शूरा दत्तवराः पुरा ॥
पश्य वेश्मानि रौक्माणि मातले राजतानि च ।
कर्म्मणा विधियुक्तेन युक्तान्युपगतानि च ॥

वैदूर्य्यमणिचित्राणि प्रवालरुचिराणि च ।
अर्कस्फटिकशुभ्राणि वज्रसारोज्ज्वलानि च ॥
पार्थिवानीव चाभान्ति पद्मरागमयाणि च ।
शैलानीव च दृश्यन्ते दारवाणीव चाच्युत ॥
सूर्य्यरूपाणि चाभान्ति दीप्ताग्निसदृशानि च ।
मणिजालविचित्राणि प्रांशूनि निविडानि च ॥
नैतानि शक्यं निर्देष्टुं रूपतो द्रव्यतस्तथा ।
गुणतश्चैव सिद्धानि:प्रमाणगुणवन्ति च ॥
आक्रीडान् पश्य दैत्यानां तदैव शयनान्युत ।
रत्नवन्ति महार्हाणि भाजनान्यासनानि च ॥
जलदाभांस्तथा शैलांस्तोयप्रस्रवणानि च ।
कामपुष्पफलांश्चापि पादपान् कामचारिणः ॥
इदं रसातलं नाम सप्तमं पृथिवीतलम् ।
यत्रास्ते सुरभिर्माता गवाममृतसम्भवा ॥
अत्र गाथा पुरा गीता रसातलनिवासिभिः ।
पौराणी श्रूयते लोके गीयते च मनीषिभिः ॥
न नागलोके न स्वर्गे न विमाने त्रिपिष्टपे ।
परिवासः सुखस्तादृग्रसातलतले यथा ॥

[ इति महाभारते उद्योगपर्वणि अः ९९-१०२ ]

अधस्तादवनेः सप्त देवर्षे विवराः स्मृताः ।
एकैकशो योजनानामायामोच्छ्रायतः पुनः ॥
अयुतान्तरविख्याताः सर्वर्त्तुसुखदायकाः ।
अतलं प्रथमं प्रोक्तं द्वितीयं वितलन्तथा ॥
तृतीयं सुतलं प्रोक्तं चतुर्थं वै तलातलम् ।
महातलं पञ्चमञ्च षष्ठं प्रोक्तं रसातलम् ॥

सप्तमं विप्र पातालं सप्तैते विवराः स्मृताः ।
एतेषु विलस्वर्गेषु दिव्योऽप्यधिकमेव च ॥
कामभोगैश्वर्य्यसुखसमृद्धभुवनेषु च ।
नित्योद्यानविहारेषु सुखास्वादः प्रवर्त्तते ॥
दैत्याश्च काद्रवेयाश्च दानवा बलशालिनः ।
नित्यं प्रमुदिता रक्ताः कलत्रापत्यबन्धुभिः ॥
सुहृद्भिरनुजीवाद्यैः संयुताश्च गृहेश्वराः ।
ईश्वरादप्रतिहतकामा मायाविनश्च ते ॥
निवसन्ति सदा हृष्टाः सर्व्वर्त्तुसुखसंयुताः ।
मयेन मायाविभुना येषु येषु च निर्मिताः ॥
पुरः प्रकामशो भक्ता मणिप्रवरशालिनः ।
विचित्रभवनाट्टालगोपुराद्याः सहस्रशः ॥
सभाचत्वरचैत्यादिशोभाढ्याः सुरदुर्लभाः ।
नागासुराणां मिथुनैः सपारावतसारिकैः ॥
कीर्णाः कृत्रिमभूमिश्च विवरेशगृहोत्तमैः ।
अलङ्कृताश्चकासन्ति उद्यानानि महान्ति च ॥
मनःप्रसन्नकारीणि फलपुष्पविशालिभिः ।
ललनानां विलासार्हस्थानैः शोभितभाञ्जि च ॥
नानाविहङ्गमव्रातसंयुक्तजलराशिभिः ।
स्वच्छार्णपूरितह्रदैः पाठीनसमलङ्कृतैः ॥
जलजन्तुक्षुब्धनीरनीरजातैरनेकशः ।
कुमुदोत्पलकह्लारनीलरक्तोत्पलैस्तथा ॥
तेषु कृतनिकेतानां विहारैः सङ्कुलानि च ।
इन्द्रियोत्सवकारैश्च तथैव विविधैः स्वरैः ॥

( क्रमशः )

---

**सङ्केतस्तु प्रतिव्यक्ति दुर्ज्ञेय इति हेतुभिः ।**
**जात्या गुणेन क्रियया सुबोधः संज्ञया तु सः ॥२८॥**

इदानीं सङ्केतोपाधिं निरूपयति—सङ्केत इति । प्रतिव्यक्ति प्रतिपिण्डम् । हेतुभिर्ज्ञापकैः सुबोधो भवति सुकरो भवति, भेदकोपाध्यवलम्बनादिति भावः ॥ २८ ॥

**सामान्यं जातिरित्युक्तं गुणः शुक्लादिको मतः ।**
**क्रियोक्ता चलनादिश्च संज्ञा चाकृतिरेकिका ॥२९॥**

उपाधीनां स्वरूपमाह—सामान्यमिति । नित्यमेकमनेकानुगतं सामान्यम् । सामान्यादिभिन्नो द्रव्यभेदको धर्मो गुणः । कर्तृजन्या तदिष्टजनिका फलावसाना च क्रिया । सम्यग् ज्ञायतेऽनया इति संज्ञा इति व्युत्पत्त्या एकव्यक्तिमात्रनिष्ठत्वादाकृतेरेकत्वम्, विस्तरभयात् प्रपञ्चो न क्रियत इति बोध्यम् ॥ २९ ॥

**अनुविद्धः शाब्दबोधे शब्दो याद्दच्छिकोऽथवा ।**
**डित्थादिव्यक्तिरथवा बाधाभावादुपेयताम् ॥३०॥**

अनुविद्ध इति । अथवा पूर्वोक्तव्युत्पत्त्यैव याद्दच्छिकः शब्दः संज्ञेत्यन्वयः । यदृच्छया स्वैरवृत्त्या कल्पितो याद्दच्छिकः । "यदृच्छा स्वैरवृत्तिः स्यात्" इत्यमरः । पूर्वोक्तप्रवृत्तिनिमित्तशून्य इत्यर्थः । स एव प्रवृत्तिनिमित्तत्वेन कल्पितः । ननु स वाचकाभिन्नरूपो भिन्नरूपो वेत्याशङ्क्य समाधत्ते—अनुविद्ध इति । शाब्दबोधे शब्दजन्यार्थज्ञानेऽनुविद्धः वाचकादभिन्नतया उपाधित्वेन भासमान इत्यर्थः । यदाहुः—"न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते" [वाक्यपदीये] इति ।

यद्यपि जात्यादिवाचकेष्वपि स भासते तथापि न तत्त्वोपाधितया, संज्ञाशब्दे तूपाधितयेति विशेषः। पुनः पक्षान्तरमाह—डित्थादीनां व्यक्तिरेव। बाधाभावात्, उपाध्यभावेऽपि व्यक्त्यानन्त्यव्यभिचाररूपदोषाप्रसक्तेरिति भावः। कर्मव्युत्पत्तिसम्भवादुपेयतां संज्ञात्वेन स्वीक्रियताम्। यथाहुः—

शब्दैरेभिः प्रतीयन्ते जातिद्रव्यगुणक्रियाः।
चातुर्विध्यादमीषां तु शब्द उक्तश्चतुर्विधः॥ [वाक्यपदीये]

इति। अयं पक्षो माघेऽपि दृश्यते। तथाहि—

असम्पादयतः कश्चिदर्थं जातिक्रियागुणैः।
यदृच्छाशब्दवत् पुंसः संज्ञायै जन्म केवलम्॥ [ २।४७]

इति जात्यादिशून्यव्यक्तिमात्रमिह संज्ञाशब्देन विवक्षितम्, यदृच्छया कल्पितत्वाद् यदृच्छाशब्देनापि संज्ञोपाधिरभिधीयत इति दिक्॥२०॥

**व्यक्तिष्वेव तु सङ्केतो जात्याद्यास्तदुपाधयः।**
**न तु तेष्वेव सङ्केतः क्रियार्थानुपयोगतः॥२१॥**

व्यक्तिष्विति। तदुपाधयः तस्य शब्दस्य प्रवृत्तिनिमित्तानि। उप समीपे आधीयते प्रकृतोपयोगितया स्थाप्यतेऽसावुपाधिरिति व्युत्पत्तेः। "उपसर्गे घोः किः" [ पा० ३।३।९२ ] इति किः प्रत्ययः। क्रियार्थेति। गमनादिक्रियोपयोगित्वं गवादिव्यक्तेरेव, जलाहरणाद्यर्थोपयोगित्वं घटादिव्यक्तेरेव चेतनाचेतनत्वात्। जात्यादेस्तु न तथेति। ननु व्यक्तिपक्षे तासामानन्त्याद्, असङ्केतितबोधे व्यभिचाराच्च, आद्यव्यक्तेः सङ्केतितत्वे इतरव्यक्तीनां लाक्षणिकतया क्लिष्टत्वाच्च नायं पक्षः साधुरिति चेत्, प्रवृत्तिनिमित्तद्वारा न कश्चिद् दोषः "सरूपाणाम् एकशेषः—" [पा० १।२।६४] इति सूत्रे यावन्तोऽर्थास्तावन्तः शब्दा इति निर्णयात्। व्यक्तिपक्षस्तत्त्व एवेति दिक्॥ २१॥

**गौः शुक्लश्चञ्चलः शम्भोर्नन्दी वाहनकेतनम् ।**
**इत्यादौ क्रमतो ज्ञेयाः शब्दसङ्केतहेतवः ॥३२॥**

उदाहरणान्याह—गौरिति। वाहनञ्च तत् केतनं चेति कर्मधारयः। जात्या गौः, गुणेन शुक्लः, क्रियया चञ्चलः, संज्ञया नन्दी बोध्य इति शेषः। समासादिवृत्तिपञ्चके सङ्केतचातुर्विध्यं नापैति। तत्र पक्षद्वयं जहत्स्वार्थाजहत्स्वार्थाभेदात्। जहत्स्वार्थापक्षे पूर्वसङ्केतत्यागेन वृत्तौ सत्यां नूतनसङ्केतक्लृप्तिः, अजहत्स्वार्था वृत्तिरिति पक्षे प्राचीन एव सङ्केत इति। विस्तरस्तु महाभाष्यादेवावगन्तव्यः। एतदुदाहरणम्—वाहनकेतनमिति। गुणोपाधिरयम्, व्याकरणमते वाहनकेतनत्वयोर्गुणत्वात्। यथोक्तं भर्त्तृहरिणा (?)—

सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥ [ महाभाष्ये ४।१।४४ ]

इति ॥ ३२ ॥

**जात्यादिष्वथवा ज्ञेयः सङ्केतस्तत्र लाघवात् ।**
**प्रमाणादितरस्माच्च व्यक्तेर्बोधो हि जायते ॥३३॥**

पक्षान्तरमाह—जात्यादिष्विति। उपाधिष्वेव सङ्केतः व्यक्तेस्त्वविनाभावादाक्षेपः। लाघवादिति। एकशेषसूत्रस्यानारम्भणीयत्वेन एकेनानेकबोधाच्चेति भावः। आक्षिप्ताया व्यक्तेरर्थक्रियाकारित्वं न विरुध्यत इति दिक्। इतरस्मादिति प्रत्यक्षादनुमानादर्थापत्तेर्वा ॥ ३३ ॥

**उपाधिभिश्चतुर्भिश्च बोध्यन्ते व्यक्तयोऽखिलाः ।**
**अविनाभावतस्तस्माच्छब्दवाच्या न ताः स्मृताः ॥३४॥**

उपाधिरिति। व्यक्तयोऽविनाभावतो बोध्यन्ते, व्यक्तिभिर्विना

उपाधीनामनवस्थानान्नान्तरीयकतया जलमानयेत्यत्राशब्दावाच्यत्वेऽपि घटवत् प्रतीयन्त इति भावः ॥ ३४ ॥

**प्रमाणान्तरगम्येऽर्थे न शब्दस्य प्रमाणता ।**
**लाघवात् स्वीकृता तस्मात् सङ्केतो नास्ति वस्तुषु ॥३५॥**

प्रमाणान्तरेति। "अनन्यलभ्यो हि शब्दार्थः" इति न्यायात् प्रमाणान्तरलभ्यासु व्यक्तिषु न सङ्केत इति भावः ॥ ३५ ॥

**सर्वत्र सम्भवाज्जातेः सा वा सङ्केतगोचरः ।**
**तद्विशिष्टाथवा व्यक्तिरपोहो वा मतान्तरे ॥३६॥**

मतान्तरमाह—सर्वत्रेति । उपाधिचतुष्टयेऽपि जातिसम्भवो वैयाकरणमते द्रष्टव्यः । हिमपयःशङ्खादिषु शुक्लगुणरूपव्यक्तिभेदात्, गुडतण्डुलपाकादिषु पचनक्रियाभेदात्, डित्थादिशरीरस्य उपचयापचयाभ्यां प्रतिक्षणं भिन्नतया अनेकत्वाच्च सर्वत्र सामान्यमस्तीति । यद्यपि शरीरादिशब्दानां सङ्करदूषितत्वाज्जातिवाचित्वं न सम्भवति तथापि—

"आकृतिग्रहणा जातिर्लिङ्गानाञ्च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणैः सह ॥" [महाभाष्ये ४।१।६३]

इति लक्षणानुसारेण न कश्चिद्विरोधः । तद्विशिष्टेति । अस्मिन् पक्षे लाघवं व्यवहारसिद्धिः स्यादिति भावः । अपोहोऽतद्व्यावृत्तिः । प्रतिलक्षणा आकृतिरिति यावत् ॥ ३६ ॥

**जातिव्यक्त्याकृतिरर्थमाहुरन्येऽत्र गौरवम् ।**
**शब्दार्थः प्रथमा व्यक्तिरन्या लाक्षणिकी मता ॥३७॥**

पुनर्मतभेदमाह—जातिरिति । तथा च सूत्रम्—जातिव्यक्त्याकृतयः पदार्थः * [ न्या० सू० २।२।६८ ] इति । अत्र गौरवमिति शक्यता-

वच्छेदकनानात्वादिति भावः । पुनर्मतभेदमाह—शब्दार्थ इति । इदमपि गौरवग्रस्तं क्लिष्टञ्चेति भावः ॥ ३७ ॥

व्यक्तेरेवोपयोगित्वमित्याहुः केचिन्न चारु तत् ।
लिङ्गसंख्याकारकेषु सङ्केतः कैश्चिदिष्यते ॥३८॥

अत्रार्धं पूर्वश्लोकेन सम्बध्यते । लिङ्गसंख्येति ॥ ३८ ॥

विभक्तिवाच्यता तेषां वस्तुतश्चारुतायुता ।
प्रथमं दर्शितः पक्षः साधीयानेषु सम्मतः ॥३९॥

विभक्तीति । वस्तुतस्तु पदसङ्केतपक्षः स्फोटवादिसम्मतः । एषु पक्षेषु प्रथमपक्षः साधीयान् दोषरहित इत्यर्थः । अन्यत्र दोषसम्भवः स्वयमूह्यः । विस्तरभयाद् विरम्यते ॥ ३९ ॥

शास्त्रादेर्ज्ञातसङ्केतः प्रयोगोऽन्यपदान्वितः ।
अर्थस्यान्वययोग्यस्य शब्दो वृत्त्यैव बोधकः ॥४०॥

शास्त्रादेरिति । सङ्केतस्य सर्वदा विद्यमानत्वात् शास्त्रादिना तज्ज्ञानं सम्पाद्य वृत्त्यैव व्यापारेणैव बोधको भवति । प्रयोगदशायामेव वृत्तिमत्त्वाद् वृत्तिसङ्केतयोर्भेदः ॥ ४० ॥

शब्दानामर्थविषये बोधाभावतमश्छिदा ।
बोधानुकूला या वृत्तिः सा फलादनुमीयते ॥४१॥

वृत्तिसत्त्वे प्रमाणमाह—शब्दानामिति । अज्ञानध्वान्तनाशिनी बोधानुकूला ज्ञाततायाः कारणमित्यर्थः । फलाद् ज्ञाततारूपात् । अन्यथा अज्ञाततानिवृत्तिपूर्वकज्ञाततोत्पत्तिर्न स्यादिति भावः । न च

---

* मुद्रितग्रन्थेषु "जात्याकृतिव्यक्तयः पदार्थः" इति पाठ उपलभ्यते ।

शब्दस्वरूपं केवलसङ्केतो वा फलहेतुरिति वाच्यम्, सर्वदा तदुत्पत्ति-प्रसङ्गात् * प्रयोगकाले एव तदुत्पत्तेरिति † दिक् ॥ ४१ ॥

**शाब्दिकैः सा स्मृतैकैव त्रिविधापि स्वरादिवत् ।**
**अभिधा लक्षणा व्यक्तिरित्याख्याभिरियं मतम् ॥४२॥**

शाब्दिकैरिति । अभिधा ह्रस्वतुल्या । लक्षणा दीर्घतुल्या । व्यञ्जना तु प्लुततुल्या । स्वरत्वमिव वृत्तित्वं त्वेकमिति भावः । प्रयोजनं तु शाब्दबोधस्थले लाघवमिति दिक् ॥ ४२ ॥

**एतास्तिस्रः पृथक् शक्तिलक्षणाव्यञ्जनाभिधाः ।**
**अलङ्कारविदां वाच्यलक्ष्यव्यङ्ग्यार्थगोचराः ॥४३॥**

मतान्तरमाह—एता इति । पृथगिति परस्परविलक्षणा विजातीयाश्च । गौरवे बाधाभावादिति भावः ॥ ४३ ॥

**नेच्छन्ति व्यञ्जनामन्ये युक्तिभिर्दूष्यते तु तत् ।**
**त्रिविधैषा ततः शब्दत्रैविध्यस्योपपादिका ॥४४॥**

नेच्छन्तीति । दूष्यत इति । आलङ्कारिकैरिति शेषः ॥ ४४ ॥

**स वाचको लक्षकश्च व्यञ्जकश्चेति वृत्तितः ।**
**शक्यलक्ष्यप्रतीत्यानामर्थानां त्रिविधत्वतः ॥४५॥**

स इति । प्रतीत्यो व्यङ्ग्यः ॥ ४५ ॥

**तात्पर्य्याख्यापि केषाञ्चिद् वृत्तिर्वाक्यगता मता ।**
**न तामन्ये तु मन्यन्ते पूर्वान्तर्भावयुक्तितः ॥४६॥**

---

* ज्ञाततोत्पत्ति । † ज्ञाततोत्पत्तेः,

प्रथमा त्रिविधा तत्र रूढिर्योगस्तथोभयी ।
अखण्डशब्दे सा रूढिर्योगः खण्डनकल्पिते ॥४७॥

प्रथमा अभिधा । उभयी योगरूढिः । खण्डनकल्पिते प्रकृत्यादिविभागजनिते ॥ ४७ ॥

मिश्रोभयत्वसाकाङ्क्षे क्रमेणासौ प्रदर्श्यते ।
शिवं स्मरे * गणपतिं देवं वन्दे पुरद्विषम् ॥४८॥

मिश्रेति । मिश्रा योगरूढिः । शिवमिति शिवशब्दो ह्यखण्डः प्रकृत्यादिविभागाप्रतीतेः । यद्यपि शिवतत्त्वविवेके—

हिंसिधातोः सिंहशब्दो वश कान्तौ शिवः स्मृतः ।
वर्णव्यत्ययतः सिद्धौ पश्यकः कश्यपो यथा ॥

इति सखण्डत्वमपि दृश्यते, तथापि सर्वविदितत्वाभावाद् अनस्तिकल्पम् । गणपतिरिति खण्डनकल्पितत्वाद् योगः, पुरद्विषमिति क्विबन्तत्वाद् योगः । शिव एव प्रयोगादितरपुरदाहकनृपादावप्रयोगाच्च रूढिः ॥ ४८ ॥

शब्दावयवयोगेन योगशक्तिरनेकधा ।
गुणाश्रया नीलकण्ठे मारमारे क्रियाश्रया ॥४९॥

शब्देति । अनेकधेति । योगोऽन्वयः स तु गुणक्रियासम्बन्धसम्भव इति ॥ ४९ ॥

सम्बन्धजापि वाक्यादौ विचित्रा त्रिपुरद्विषि ।
क्वचिद्रूढौ क्वचिद् योगे मिश्रामिश्रान्तरिष्यते ॥५०॥

सम्बन्धजेति । विचित्रेति । द्वेषगुणाश्रया द्वेषणक्रियाश्रया च ।

---

* अत्रात्मनेपदं चिन्त्यम् ।

द्वेष्यद्वेषकभावसम्बन्धाश्रया चेत्यर्थः। द्वेषस्य गुणत्वं तर्कशास्त्रादवगन्तव्यम्। योगरूढौ भागत्यागलक्षणायामिव प्रयोगानुसारादमिश्रणमपि सम्भवतीत्याह—क्वचिदिति। प्रसिद्धप्रयोगेष्वित्यर्थः॥ ५०॥

**उभयत्र तु सर्वत्र शम्भुं वन्दे मृडं नृणाम्।**
**शङ्करः स्तूयतामेवं पदैः शक्तैः सुखार्थिभिः॥५१॥**

इति श्रीपदवाक्यप्रमाणपारावारपारीणधुरीणरामजिभट्टात्मजाशाधरभट्टविरचितकोविदानन्दे वृत्तिनिर्णयेऽभिधापरिच्छेदः समाप्तः॥

उभयत्रेति। सर्वत्र सर्वेषु योगरूढप्रयोगेष्वित्यर्थः। उदाहरणान्याह—शम्भुमिति। शं भवत्यस्मादिति शम्भुरिति योगेन शिववाचकतया प्रसिद्ध्या च शम्भुशब्दो योगरूढः। तस्यात्र योगो विवक्षितः। नृणां मृडमिति विशेषणानुरोधात्। एवं मृडशब्दोऽपि मृडयतीति मृड इति योगेन शिववाचकतया प्रसिद्ध्या च योगरूढः। तस्यात्र रूढिर्न विवक्षिता, किन्तु योगमात्रम्, शम्भुमिति विशेष्यप्रयोगानुरोधात्। शङ्कर इति—शं करोतीति योगेन शिवकथकत्वेन प्रसिद्ध्या च शङ्करशब्दो योगरूढः। तस्योभयमपि विवक्षितमेव बाधकाभावात्। न चात्र भागत्यागलक्षणा शङ्क्या मुख्यार्थबाधाभावात्। एवमन्यत्रापि—

स्वयम्भूः शम्भुरम्भोजलोचने त्वत्पयोधरः।
नखेन कस्य धन्यस्य चन्द्रचूडो भविष्यति॥

इत्यादावपि द्रष्टव्यम्, विस्तरभयाद् विरम्यते॥ ५१॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणधुरीणरामजिभट्टात्मजाशाधरभट्टविरचितायां कादम्बिनीसमाख्यायां स्वकृतकोविदानन्दव्याख्यायामभिधापरिच्छेदः प्रथमः॥

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

August, 1931. } १८५३ शकीये श्रावणे १४वर्षस्य ४र्थ-संख्या { Vol. XIV, No. 4.


## पदमञ्जरीकारो हरदत्तः *

वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम् ।
पाणिनिं सूत्रकारञ्च प्रणतोऽस्मि मुनित्रयम् ॥

विदितमेवैतत् प्रायेण पारिषद्यानामशेषाणां यद् दीप्यमानेऽपि प्रमाणमूर्धन्यभूते महाभाष्यभास्करे "उच्छेत्तुं प्रभवति यन्न सप्तसप्तिस्तन्नैशं तिमिरमपाकरोति चन्द्रः" इति न्यायमवलम्ब्य मन्दात्मानुजिघृक्षया पण्डितप्रकाण्डाभ्यां जयादित्यवामनाभ्यां निरमायि काशिकाख्या सुमनोहरा व्याख्या पाणिनिसूत्राणाम् । कालक्रमेण च काशिकापि व्याख्यासापेक्षा संवृत्ता । तत्र प्रथमं जिनेन्द्रबुद्धिना भिक्षुप्रवरेण न्यासापरनामा काशिकाविवरणपञ्जिका प्राणायि, ततश्च केषुचिच्छतकेषु व्यतीतेषु, हरदत्ताभिधानेन प्रामाणिकप्रवरेण पदमञ्जरी-

* परिषदो मासिकाधिवेशने वाचितोऽयं निबन्धः ।

समाख्या व्याख्या व्यरचि। प्रबन्धेऽस्मिन् हरदत्तमिश्राणामवस्थिति-समयादीनि विचार्य्यन्ते।

मन्त्रामासौ स्वजनुषा द्रविडदेशं मण्डयामासेति पदमञ्जरीत एव स्फुटीभवति। तत्र "भीस्मीभृहुमदजनेति"सूत्रस्थवामनवचनव्याख्या-प्रसङ्गेनोक्तम्—"लेट्शब्दस्तु वृत्तिकारदेशे जुगुप्सितः, यथात्र द्राविडदेशे निविशब्दः।" पदमञ्जर्य्याः प्रारम्भेऽपि संज्ञाविचारप्रसङ्गे विलिखितम्—"याः पुनर्देशभाषाभिः संज्ञाः कुचिमञ्चीप्रभृतयो न तेषां साधुत्वम्।" कुचिमञ्चीप्रभृतयश्च संज्ञा द्राविडदेश एवोपलभ्यन्ते। तत्रत्यस्य च तैलङ्गाभिजनस्य कविवर्य्यस्य कुचिमञ्चीति नामासीत्।

पिता चास्य पद्मकुमारः, माता च श्रीदेवी, आचार्य्यश्चापराजितः; यथोक्तं पदमञ्जरीमङ्गलाचरणश्लोके—

तातं पद्म*कुमाराख्यं† प्रणम्याम्बां श्रियं तथा।
ज्येष्ठं चाग्निकुमाराख्य†माचार्य्यमपराजितम्॥
यश्चिराय हरदत्तसंज्ञया विश्रुतो दशसु दिक्षु दक्षिणः।
उज्जहार पदमञ्जरीमसौ शब्दशास्त्रसहकारपादपात्॥

एतस्य वैदिकलौकिकाखिलशास्त्रपारदृश्वत्वं पदमञ्जर्य्येव पदे पदे प्रत्याययति। तथाहि वैदिकप्रक्रियाव्याख्याने स्वरसूत्रव्याख्याने च संहितातो ब्राह्मणतश्च समुद्धृता बहवो मन्त्राः, बह्वृचानां तैत्तिरीयाणां सम्प्रदायभेदोऽपि बहुश उपप्रदर्शितः। तत्र तत्र च भाट्टानां मतं समुपनिबद्धं, शबरस्वामिनश्च वचनं समुद्धृतम्। कालिदास-भट्टि-भारवि-माघविरचितानि पद्यानि क्वचिदुदाहरणरूपेण क्वचित् पुनर्दोषो-द्धारणप्रसङ्गेनोपन्यस्तानि। तथाहि, "उपसर्गस्यायतौ" [ ८।२।१९ ]

---

* अत्र रुद्रेति पाठान्तरम्।

† चाख्यमित्येतस्य स्थाने रुचेव आर्य्यमिति पाठान्तरमुपलभ्यते, तेन Iyer उपनामानो द्रविडब्राह्मणा एते इति प्रतिभाति इति केचित्।

इत्यत्रोक्तं "कथं तर्हि 'उदयति विततोर्ध्वरश्मिरज्जावि'ति परस्मैपदम्। किमनेन वन्यगजशौचेन‡। यदि वा पचाद्यजन्तादुदयशब्दादाचारे क्विपि लट्, केचित्तु, इट किटी गतावित्यत्र इकारमपि धातुं पठन्ति" इति। "पुनरपि पाय्यसान्नाय्य—" [ ३।१।१२० ] इत्यत्र "ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामिति विहितयोर्दधिपयसोः संज्ञेयम्। माघस्तु यथाश्रुतार्थग्राही हविर्मात्रे प्रयुङ्क्ते—'हुतमयमवलीढे साधु सान्नाय्यमग्नि'रिति।"

एतदेव प्रपञ्चितं दीक्षितचरणैः शब्दकौस्तुभे—"सान्नाय्यं हविर्विशेषः। सम्यङ् नीयते होमार्थमग्निं प्रतीति सम्पूर्वान्नयतेर्ण्यदायादेशौ उपसर्गदीर्घत्वञ्च निपात्यते। ऐन्द्रं दध्यमावास्यायाम् ऐन्द्रं पयोऽमावास्यायाम् इति विहितयोर्दधिपयसोः संज्ञेयम्। माघस्तु यथाश्रुतग्राही हविर्मात्रे प्रायुङ्क्त।—

प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
विधिविहितविरिब्धैः सामिधेनीरधीत्य।
कृतगुरुदुरितौघध्वंसमध्वर्युमुख्यै-
र्हुतमयमवलीढे साधु सान्नाय्यमग्निः॥ [११।४१] इति।

नन्विदमपि दधिपयोविषयकं किं न स्यादिति न वाच्यम्। चन्द्रोदयास्तमयवर्णनपूर्वकं सूर्योदयं प्रक्रम्य पठितस्यास्य कृष्णप्रतिपद्विषयत्वेन तत्र दधिपयोयोगस्यासम्भवात्। हविर्विशेषवाचकस्य सामान्ये विशेषान्तरे वा लक्षणेत्यपि बोध्यम्।"

न्यासकारो भागवृत्तिकारश्च कुत्रचिन्नामतो निर्दिष्टौ बहुत्र पुन'रपर आह' इत्यादिवचनपुरःसरं तन्मतमेव प्रदर्शितम्। अन्तरान्तरा चानयोरुपर्य्याक्षेपोऽप्युपलभ्यते। तथाहि "अपरिमाणविस्ताचिते"-त्यादिसूत्रे [४।१।२२] न्यासकारस्य मतं नामनिर्देशपुरःसरं समुद्धृतम्।

‡ एतेन "अपशब्दशतं माघे" इति कस्यचिदुक्तिः स्मार्य्यते। "अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम्" इति माघवचनमपि स्मृतिपथमारोहति।

"इणो यणि"त्यत्र न्यासकृतोक्तम्—अथ नेण इत्येव कस्मान्नोक्तम्? इयङादेशेऽचि प्रतिषिद्धे सति इको यणचीति यण् भविष्यति। सत्यमेतत्। उत्तरार्थन्तु यण्ग्रहणम्।

एतदुपरि हरदत्तेनोक्तम् "इणो यण्" इत्यत्र अथ इणो नेत्येव कस्मान्नोक्तम्, इयङादेशे हि प्रतिषिद्धे इको यणचीत्येव भविष्यति। अहो सूक्ष्मदर्शी देवानांप्रियः, यदिदमपि न दृष्टम् ईयिव, ईयिम, कर्मणि ईयिषे। अत्र यङि प्रतिषिद्धे सवर्णदीर्घः स्यात्, तस्माद् यणेव विधेयः।

भागवृत्तिकृतां मतं नामोल्लेखपूर्वकं स्थानचतुष्टये समुपनिबद्धम्। तद्यथा—(१) णेरणाविति सूत्रे [१।३।६७] इह तर्हि आरोहन्ति हस्तिनं हस्तिपकाः तानारोहयति हस्तीति किं पुनरत्र नेष्यते। वृत्तिकृता नेष्यते, भागवृत्तिकारेण लिष्यते। तथा माघः प्रयुङ्क्ते—करेणुरारोहयते निषादिनमिति।

(२) "यस्य चायामः" [२।१।१६] इति सूत्रे अनुगङ्गं वाराणसीति। षष्ठ्यन्तेन गङ्गाशब्देन समासः। गङ्गाया अन्विति। आयामो लक्षणत्वं चानुना द्योत्यते। लक्षणस्य लक्ष्यापेक्ष्यत्वाल्लक्ष्यं समासार्थ इत्यर्थादुपमानोपमेयभावे समास इति वाराणस्या सामानाधिकरण्यम्। गङ्गाया इवायामो यस्याः, गङ्गेवायता वाराणसीत्यर्थः। तद्वदत्यन्तायतेत्यर्थ इति केचित्। तथा चानुगङ्गमेतत् सूत्रमित्यकशेषसूत्रे भागवृत्तिकारः प्रयुङ्क्ते। नेति वयम्। किं प्रागायता वाराणसी, उतोदगायतेति सन्देहे इदमुच्यते—अनुगङ्गं वाराणसीति। यथोदगायता गङ्गा तथोदगायता वाराणसीत्यर्थः। गङ्गायामानुसारेण वाराणस्यायाम इत्यर्थः।

(३) "किमोऽत्" [५।३।१२] इति सूत्रे [त्रलमपि केचिदिच्छन्ति। कुत्र। तत् कथम्? उत्तरसूत्राद्वावचनं पुरस्तादपकृष्यते।—काशिका]। किमोद्वेति सूत्रं पठितव्यं ह च छन्दसीत्यत्र चकारेण त्रतलोः समुच्च-

यादिष्टसिद्धिरिति तेषां भावः। भागवृत्तिकारस्तु भाषायामितन्ने-च्छति *।

(४) [ अनभ्यासस्य इत्येव। जुगुप्सिषते। लोलूयिषते।—सन्यङोः ६।१।८ इत्यत्र काशिका। ] भागवृत्तिकारस्त्वाह पूर्वसूत्रे [ "लिटि धातोरनभ्यासस्य" इत्यत्र] "धातोः" "अनभ्यासस्य" इति द्वयमपि प्रत्याख्याय भाष्यकारेणोक्तम्—तिष्ठतु तावत् साभ्यासिकं धातुग्रहणमिति, उत्तरार्थमिति भावः। अनभ्यासग्रहणस्य तु न किमपि प्रयोजनमुक्तम्, ततश्चोभयार्थमपि तन्न भवतीति भाष्यकारस्याभिप्रायो लक्ष्यते, तेनात्र भवितव्यमेव द्विर्वचनेन। †

काशिकाप्रणेत्रोर्जयादित्यवामनयोर्मतविशेषाश्च तत्र तत्र निपुणं प्रदर्शिताः। तथाहि—

(१) "णेरणौ यत् कर्म णौ चेत् स कर्त्तानाध्याने" [ पा० १।३।६७ ] इत्यत्रोक्तम्—

प्रयोगाणान्तु निर्वाहो णिचश्चेत्यात्मनेपदात्।
जयादित्यस्य हृदयं गूढमेतत् प्रकाशितम्॥

(२) "नित्यं क्रीडाजीविकयोः" [ पा० २।२।१७ ] इत्यत्र 'तृच् क्रीडाजीविकयोर्नास्ती'ति काशिकापङ्क्तिमुद्धृत्योक्तम्—

वामनस्तु "अके जीविकार्थे" [ पा० ६।२।७३ ] इत्यत्र 'अके इति किम्? रमणीयकर्त्ता' इति जीविकायां तृचं प्रत्युदाहरिष्यति। स मन्यते मा भूत् क्रीडायां तृच्, लक्षणाभावात्; जीविकायां तु "ण्वुल्-

---

* तथा च संक्षिप्तसारटीकायां गोयीचन्द्रः त्वमपि केचिदिच्छन्तीति जयादित्यः। कुत्र क्व इति रूपद्वयं चन्द्रस्याभीष्टम्; कुत्रेत्यस्मार्तमिति भागवृत्तिः ( सुबन्तपादः ३२१ )।

† यद्यपि भागवृत्तिकृन्मतानि बहुत्र व्याकरणग्रन्थेषु समुद्धृतान्युपलभ्यन्ते तथापि चिराय प्रनष्टेयं वृत्तिरिति विषोदामहत्साम्। एतद्विषये विस्तरेण विचार आश्विनसंख्यायां प्रकाशयिष्यते।

तृचौ" [ पा० ३।१।१३३ ] इति ण्वुलिव तृच् कस्मान्न स्यादिति ; अन्ये तु तदनुसारेणेदमप्येवं व्याचक्षते क्रीडाजीविकयोर्नास्तीति द्वयोर्नास्ति किन्त्वन्यतरत्रैवेत्यर्थः । *

(३) "स्यतासी ऌलुटोः" [ पा० ३।१।३३ ] इत्यत्रोक्तम्—

"मन्ता सङ्क्तेति ।" कोऽर्थः ? मन्तेत्येतत् पदं सङ्क्तभविष्यतीत्यर्थः, न तु सङ्क्तेत्येतदुदाहरणमनोपधत्वात् । अनुस्वारपरसवर्णयोः कृतयोरपि तयोरसिद्धत्वादनोपध एव । अन्ये त्वाहुः—यद्यसिद्धत्वात् सङ्क्तेत्येतदनुदाहरणम्, मन्तेत्यप्युदाहरणं न भवति, तत्रापि टिलोपस्याभीयस्यासिद्धत्वाद् मन्तास् आ इति स्थिते नकार उपधा न भवतीति । यति मतमाभाच्छास्त्रीयमसिद्धत्वमनित्यम्, स्नमोरल्लोप इति तपरकरणात्, तद्यास्तामासन्नित्यादौ मा भूदित्येवमर्थं तत्राटोऽसिद्धत्वादेव नलोपो न भविष्यति, किं तन्निवृत्त्यर्थेन तपरत्वेन तज्ज्ञापयत्यसिद्धत्वमनित्यमिति, तेन दैभतुर्दैभ्युरित्यत्र श्रन्थिग्रन्थिदम्भि-

* तथा च "नित्यं क्रीडाजीविकयोः" इत्यत्र शब्दकौस्तुभे भट्टोजिः—तत्र क्रीडायां विकल्पे प्राप्ते जीविकायां "कर्तरि च" [ २।२।१६ ] इति निषेधे प्राप्ते वचनम् । जयादित्यस्तु "तृजकाभ्याम्—" [ २।२।१५ ] इति सूत्रे 'कर्तरीत्येतद् अनुवृत्तायाः षष्ठ्या विशेषणम् ; तृजुत्तरार्थः' इत्युक्त्वा "कर्तरि च" इति सूत्रे कर्तृग्रहणं तृजकयोर्विशेषणतया व्याख्याय नित्यं क्रीडे"ति सूत्रे अकप्रत्ययमेवोदाजहार । तत्रेदं वक्तव्यम् । प्रथमसूत्रे कर्तृग्रहणं तृजकयोरेव विशेषणं युक्तम्, तयोः श्रुतत्वात् ; न तु षष्ठ्याः । एवं च तृजुत्तरार्थ इत्यपि न कल्प्यम् । अकस्यैव चोत्तरत्रानुवृत्तिर्न तु तृचः, असम्भवात्, तथा च सूत्रद्वयस्य व्यत्ययेनार्थं उचित इति । वामनस्तु "अके जीविकार्थे" [ ६।२।७३ ] इति सूत्रे 'अक इति किम् ? रमणीयकर्त्ता' इति जीविकायां तृचं प्रत्युदाजहार । तस्यायमाशयः । मा भूत् क्रीडायां तृच्, लक्षणाभावात् ; जीविकायान्तु "ण्वुल्तृचौ" [ ३।१।१३३ ] इति ण्वुलिव तृजपि सुलभ एवेति । एतन्मते नित्यं क्रीडेत्यत्र तृज्ग्रहणासम्बन्धे शङ्कावारणार्थं तृजर्थं इत्यादि कुसृष्ट्यादरणमित्याहुः ।

खञ्जीनामिति लिटः कित्वान्नलोपे तस्यासिद्धत्वाभावादेत्वाभ्यासलोपौ भवतः, तदत्र टिलोपस्यासिद्धत्वाभावाद् मंन्त् आ इति स्थिते उपधैव नकार इत्युदाहरणमिति। यद्येवं पूर्वत्रासिद्धीयमसिद्धमप्यनित्यम्, "नमु ने" इत्यत्र नेति योगविभागात्, तथा चैकादेशस्वरोऽन्तरङ्गः सिद्धो भवति, सिज्लोप एकादेशे सिद्धो भवति, निष्ठादेशः षत्वादिषु सिद्धो भवति, द्विर्वचनविषये च पूर्वत्रासिद्धीयं न भवति ततश्चानुस्वार-परसवर्णयोः सिद्धत्वात् सङ्घन्तेत्येतदप्युदाहरणमेवेति। अन्ये तु संह-न्तेति पठन्ति। हन्तेर्भावकर्मणोरित्यात्मनेपदम्। तत्र संपूर्वस्य पाठे प्रयोजनं मृग्यम्। *

---

* "तासेरिकार इत्संज्ञक" इति जयादित्यः। तथाहि मन्ता हन्ता इत्यत्र मन् तस आ हन् तास् आ इति स्थिते टिलोपे कृते डाप्रत्ययं प्रति तान्तमङ्गं तस्य उपधा नकारः, तस्य 'अनिदितामि'ति लोपः प्राप्तः तं वारयितुं तासेरिदित्त्वमेषितव्यम्। न चाभीयत्वेन टिलोपस्यासिद्धत्वाद् नकार उपधा नेति वाच्यम्, आभात्सूत्रस्य भाष्ये प्रत्याख्यानात्, सूत्रमतेऽपि आभीयस्यासिद्ध-त्वस्यानित्यत्वाच्च। तत्र च श्नसोरल्लोप इति तपरकरणं लिङ्गम्। तद्धि आस्ताम् आसन् इत्यादौ मा भूदित्येवमर्थम्। तत्राटोऽसिद्धत्वादेव लोपाप्रसक्तौ तपरत्वं व्यर्थं सद् असिद्धत्वस्यानित्यतां ज्ञापयति। तेन देभतुर्देभुरित्यत्र श्रन्थिग्रन्थि-दन्भिस्वञ्जीनां लिटः कित्त्वान्नलोपे तस्यासिद्धत्वाभावाद् एत्वाभ्यासलोपौ स्तः। एवञ्चेहापि टिलोपस्यासिद्धताविरहे प्राप्तो नलोप इदित्त्वेन वार्यते। न चैवं नुम्विधौ धातुग्रहणस्य तासिव्यावृत्त्या कृतार्थत्वेन धातूपदेशावस्थायामेव नुम् भवतीत्ययमर्थो न साधितः स्यादिति वाच्यम्। नुम्विधावुपदेशिवद् वचनं प्रत्ययसिद्ध्यर्थमिति वचनस्यैव शरणीकरणात्, धिन्विकृण्व्योरिति सनुम्कनिर्दे-शाज्ज्ञापकाद्वा॥ वामनस्तु तासेरिकार उच्चारणार्थं इत्याशयेन "इदितो नुम् धातु"रिति धातुग्रहणं धातूपदेशावस्थायामेव नुम् यथा स्यादित्येवमर्थं मन्यते। तन्मते मन्ता हन्तेत्यत्र टिलोपस्यासिद्धत्वान्नलोपो नेति बोध्यम्।" इति "स्यता-सी लृलुटो"रित्यत्र शब्दकौस्तुभे भट्टोजिः।

"एवं तावज्जयादित्येनासिद्धत्वमनित्यमाश्रित्य तासेरिदित्करण-मनुनासिकलोपप्रतिषेधार्थमित्युक्तम्। वामनस्तु टिलोपस्य सिद्धत्वा-देव नलोपो न भविष्यतीति मन्यमानः "इदितो वा" [ पा० ७।१।५८ ] इत्यत्र वक्ष्यति—तासिसिचोरिदित्कार्य्यं नास्तीत्युच्चारणार्थो निरनुनासिक इकारः पठ्यते इति, यदि तु तासेरिकारोऽनुबन्धः स्यात् ततो नुम्विधौ धातोस्तासेर्माभूदित्येवमर्थं स्यात्, ततश्च धातू-पदेशावस्थायामेव नुम् भवतीत्ययमर्थो न साधितः स्यादिति तस्याभि-प्रायः। जयादित्यस्तु नुम्विधावुपदेशिवद्वचनं प्रत्ययसिद्ध्यर्थमिति वचनमेव शरणमाशिश्रियत्।" *

(४) "ऋत्विग्दधृग्—" [ पा० ३।२।५९ ] इति सूत्रे "नलोपः कस्मान्न भवति? निपातनसाहचर्य्यात्" इति जयादित्यवचनं व्याच-क्षाणेन पक्षान्तरमप्युपन्यस्योक्तम्—"तदेतत् "चोः कुः" [ ८।२।३० ] इत्यत्र वामनो वक्ष्यतीति। †

(५) "आभीक्ष्ण्ये णमुल् च" [ पा० ३।४।२२ ] इत्यत्र आभीक्ष्ण्ये द्वे भवत इत्युपसङ्ख्यानाद् द्विर्वचनम् इति वृत्तिकारवचन-विषये उक्तम्—

( क्रमशः )

* तथाच "हनः सिच्" [ १।२।१४ ] इति सूत्रस्थशब्दकौस्तुभे भट्टोजिः—"जयादित्यस्तु सिच्तास्योरिदित्करणमनुनासिकलोपप्रतिषेधार्थमित्याह। तन्मते धातुग्रहणस्य तद्व्यावृत्त्या कृतार्थत्वाद् "नुम्विधावुपदेशिवद्वचनं प्रत्यय-सिद्ध्यर्थम्" इति वचनमेव शरणीकरणीयम्" इति।

† "अत्र केचित्—कुञ्चिरेक एव धातुः। तस्य ककारात् परो रेफोऽपि क्विन्प्रत्ययोगेन निपात्यते इत्याहुः। "चोः कुः" इति सूत्रे वामन-काशिकायां स्पष्टमेतत्" इति शब्दकौस्तुभे [ ३।२।५९ ] भट्टोजिः।

---

# विद्याप्रस्थानम्

[ निबन्धकः—कालीवट्टवास्तव्यः श्रीगुरुपदहालदारः ]

सांख्यप्रवचनमपि भगवता सांख्यवृद्धेन कपिलेन किल प्रणीतम्। तत्र त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थ इत्यादिनिर्णयार्थं षडध्यायाः सन्ति। ननु, तत्त्वसमासाख्यैः सूत्रैः सांख्यप्रवचनस्य पौनरुक्त्यमिति चेत्? न, संक्षेपविस्तररूपेणोभयोरप्यपौनरुक्त्यात्। अत एव योगदर्शनस्येव षडध्याय्या अपि प्रवचनसंज्ञा युक्ता। तत्त्वसमासे हि यत् संक्षिप्तं तस्यैव प्रपञ्चः सांख्यप्रवचनमित्यवधारणात्।

भोगेष्वलंप्रत्ययवत उदासीनस्य विषयव्यापारेभ्यो व्यावृत्तं मनो यदा साक्षात्कर्त्तव्ये परमे वस्तुनि तन्निष्ठं भवति, तदा स एव योगः। हठलयादिभेदेन स च बहुविधोऽस्ति। तत्र हिरण्यगर्भेण राजयोग उक्तः। तथा हि याज्ञवल्क्यस्मृतिः—

हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातन इति।

ननु, यदि भगवता हिरण्यगर्भेण योगशास्त्रमुक्तं तर्हि कथं पतञ्जलिस्तदेव प्राणैषीत्? श्रुतिस्मृतिपुराणादिषु योगस्य विप्रकीर्णतया दुर्ग्राह्यत्वं मन्यमानेन भगवता पतञ्जलिना सारं संजिघृक्षुणा तदनुशासनमारब्धं, न तु साक्षादेव शासनमारभ्यते। तदेव शास्त्रारम्भे प्रतिज्ञासूत्रम् 'अथ योगानुशासनम्' इति। अत्रेदं बोध्यं शिष्टस्य शासनमनुशासनं तेन शास्त्रस्य गुरुमूलकतया सूत्रकारेण प्रामाण्यं दर्शितमिति। तथा हि भगवान् भाष्यकारः—योगानुशासनं शास्त्रमधिकृतं वेदितव्यमिति।

प्रेक्षावन्तोऽप्रेक्षावन्तो वा सर्व्वे लोका दुःखं जिहासन्ति। तत्रैके धनजनराज्यवाणिज्यभैषज्यादिव्यापारैस्तत्प्रहाणोपायं गवेषयन्ति।

एते खलु लौकिका उपाया अत्यन्तत एकान्ततश्च दुःखमुन्मूलयितुं नावकल्पन्ते। तदेव कस्य हेतोः? ससंस्कारमनुच्छेदात्तस्य। अन्ये तु ये प्रेक्षावन्तस्ते शास्त्राधिगम्यविवेकज्ञानेन समूलं तत् प्रहातुं चेष्टन्ते। एतानेव त्रिविधदुःखज्वालाजटिलजगज्ज्वलनकवलीकृतान् भक्तिश्रद्धासमन्वितान् संसारिण उद्दिधीर्षुः परमकारुणिक ईश्वरो निश्वासप्रश्वासन्यायेन वेदादीनि सर्व्वाणि शास्त्राणि प्रवर्त्तयाम्बभूव। तेषु च सर्वेषु योगशास्त्रं दुःखाभिघातनिवर्त्तकं भगवता हिरण्यगर्भेण प्रकाशितं यत्र विवेकाभावो हेयस्य निदानं विवेकस्तु तज्ज्ञानोपायस्तत्त्व-साक्षात्काररूप इत्युपदिश्यते। स च तत्त्वसाक्षात्कारो निदिध्यासनैक-साध्य 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिश्रुतेः। तच्च निदिध्यासनं किं वा कीदृशं वा कतिविधं वा के वा पुनस्तदुपायप्रत्युपाया इति तदीयमशेषविशेषं प्रतिपादयन् भगवान् हिरण्यगर्भो योगशास्त्रेण कल्पारम्भे परमर्षीन् शशास, अथा-नुशशास च तन्निष्ठो भगवान् पतञ्जलिः। तदेव शास्त्रं पातञ्जलं योगज्ञानादिसम्पन्नः परावरतत्त्वज्ञो महर्षिर्व्यासो व्याचख्यौ, वैयासिकं च विपश्चित्प्रवरैर्मिश्रधारेश्वरभिक्षुपादादिभिराचार्य्यैः प्रपञ्चितम्।

पतञ्जलिप्रोक्ते योगदर्शने निरोद्धव्या वृत्तयः पञ्चविधा उक्ताः— 'प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयः' इति। तत्र प्रमाणं प्रागेव व्याख्या-तम्। विपर्य्ययस्तावदुपरिष्टाद् वक्ष्यते। विकल्पः शब्दज्ञानजन्यो वस्तुशून्यः प्रत्ययः। स च त्रिविधः क्रियाविकल्पोऽभावविकल्पो वस्तु-विकल्पश्चेति। तत्र क्रियाविकल्पो यथा व्याघ्रो धावति यत एव क्रिया-प्रवृत्तिस्तद्भावरूपत्वाद् व्याघ्रवृत्तित्वेन कल्पिता। अभावविकल्पो ह्यनुत्पत्तिधर्म्मा पुरुष इति। तत उत्पत्तिधर्म्मस्याभावमात्ररूपः पुरुषो बुध्यते न तु पुरुषान्वयी कश्चिदुत्पत्तिरूपो धर्म्मस्तस्य सर्व्वधर्म्म-शून्यत्वात्। वस्तुविकल्पस्योदाहरणानि चैतन्यं पुरुषस्य, शरीरं शिला-पुत्रस्य, शिरो राहोश्चेति। यदा चैतन्यं पुरुषस्य स्वरूपं शरीरं शिला-

पुत्रस्य शिरो राहोस्त्र, तदा किं तत्र केन व्यपदिश्यते। तदुदाहरणं पुनः—

याबज्जीवमहं मौनी ब्रह्मचारी पिता मम।
माता च मम बन्ध्यासीदपुत्त्रश्च पितामहः ॥ इति।

यद्वा—

एष बन्ध्यासुतो याति खपुष्पकृतशेखरः।
मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः ॥ इति।

यद्वा दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्ड इति।

निद्रा च जाग्रत्स्वप्नवृत्तीनामभावकारणं सत्त्वरजसोराच्छादकं तमस्त्वालम्बनमिति। तत्र यदा सत्त्वसचिवतमस आविर्भावस्तदा सुखमहमस्वाप्समिति प्रबुद्धस्य प्रत्यवमर्शौ नितरामभिनयति प्रसन्नं मे मनः प्रज्ञां मे सूक्ष्मानुतादुरूत्तार्थप्रतिबिम्बग्राहिणीं करोतीति। यदा रजःसचिवतमस आविर्भावस्तदा दुःखमहमस्वाप्समिति प्रबुद्धस्य प्रत्यवमर्शः स्त्यानं मे मनो भ्रमत्यनवस्थितमिति। अभिभूतद्वये तु स्वापे तमःसमुल्लासाद् गाढं मूढोऽहमस्वाप्समिति सुप्तोत्थितस्य प्रत्यवमर्शश्चाभिनयति गुरूणि मे गात्राणि क्लान्तञ्च मे मनः केनापि मुषितमिव तिष्ठतीति। स्मृतिश्च सूचिता—'अनुभूतविषयासम्प्रमोषः' इति। एतदुक्तं भवति—प्रमाणादिवृत्तयः सामान्यतः प्रकारतो वा विषयमननुभूतं ग्राहयन्ति, स्मृतिस्तु पूर्व्वानुभूतविषयमर्य्यादामनतिक्रम्य तद्विषया तदूनविषया वा भवति न तु तदधिकविषयेति। सा च द्विविधा कल्पितानुस्मरणविषया यथा स्वप्नादिषु, पारमार्थिकस्मरणविषया च यथा जाग्रत्समय इति। अत एव विषयाकाराः खलु स्मृतयः सर्व्वा एव द्रव्यरूपाः परिणामविशेषाः सुखदुःखमोहात्मिका भार्य्या इव पुरुषस्य भोग्याः।

विपर्य्ययश्च सूत्रितो 'विपर्य्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठमि'ति। तत्र विपर्य्यय इति लक्ष्यं मिथ्याज्ञानमिति लक्षणम्। मिथ्येत्यस्य विवरणमत-

द्रूपप्रतिष्ठं तद्रूपाप्रतिष्ठमिति यावत्। अतद्रूपप्रतिष्ठमस्याङ्गभोजीतिवत्। क्लेशमूलकः खलु विपर्य्ययस्तस्य विपरीतस्वभावत्वात्। क्लेशाश्च सूत्रकारेण दर्शिता 'अविद्याऽस्मितारागद्वेषाभिनिवेशाः' इति। अतो ह्यविद्यादयः सर्व्वे विपर्य्यया भवन्ति, मिथ्यात्वेन तेषां प्रतिष्ठितत्वात्।

असति सद्बुद्धिरविद्या यतो जीवानां धर्म्माधर्म्मोत्पत्तिद्वारा संसारः प्रवर्त्तितः। सा च वस्तुस्वरूपतिरोधानकारिणी सदसदनिर्व्वचनीया स्वयंप्रकाशस्य चिन्मात्रवपुषः स्वरूपे तयैव तिरोहिते, प्रत्यगात्मविषये ज्ञानज्ञेयादिविभागरूपा प्रतीयते। तत्र सामान्याविद्याकृते जगति जननमरणादिमिथ्याज्ञानरूपा विशिष्टाऽविद्या जायते। मिथ्याभूतार्थस्य मिथ्याभूतं कारणं भवतीति हेतुबलादवगम्यते विशिष्टाविद्याया अस्मिताख्यायाः सामान्याविद्योपादानत्वमपि मिथ्येति।

अस्मिता च निरूपिता 'दृग्दर्शनशक्त्योरेकात्मते'ति। पुरुषो हि दृक्शक्तिर्बुद्धिश्च दर्शनशक्तिस्तयोरेकस्वरूपापत्तिरस्मिताकार्य्यम्। योऽहं भोगी सोऽहमनुभवितेत्येवंजातीयकप्रत्ययतः संसारिणां बुद्धिपुरुषयोरभेदकल्पनावश्यम्भावात्। अविद्यातोऽस्मिताया अयं भेदः—दृक्-शक्तिः पुरुषो दर्शनशक्तिर्बुद्धिस्तयोर्विभागप्राप्तौ भेदाभेदविषया समष्ट्यहंकारबुद्धिरविद्या, अस्मिता तु तदुत्तरकालिकी दूरस्थवानस्पत्ययोरिव तयोरैकान्तिकभ्रम इति। अहङ्कारादस्मितायाश्चायं भेदो दर्शितः—'यत्रान्तःकरणमहमित्युल्लेखेन विषयान् वेदयते सोऽहङ्कारो यत्र त्वन्तर्मुखतया प्रतिलोमपरिणामे प्रकृतिलीने चेतसि सत्तामात्रमवभाति साऽस्मिते'ति।

अविद्यापादिताऽस्मिता रागादीनां निदानमित्यस्मितानन्तरं रागादीनामुपन्यासः। सुखाभिज्ञस्य सुखे स्मर्य्यमाणे दृश्यमाने वा योऽनुशेते स रागः। तदुक्तं 'सुखानुशयी रागः' इति। शब्दस्पर्शरूपरसगन्धेषु दिव्यादिव्यतया दशविधत्वात् स दशविधः। दुःखाभिज्ञस्य दुःखे स्मर्य्यमाणे दृश्यमाने वा या जिहासा स द्वेषः। तदेव सूत्रं

"दुःखानुशयी द्वेषः" इति। दिव्यादिव्यशब्दादिविषयैः सह दशभिरैश्वर्य्याष्टकमष्टादशधेति स ह्यष्टादशविधः। अभिनिवेशः खलु त्रासः परतः स्वानिष्टसम्भावनामूलत्वात्। ऐश्वर्य्यमासाद्य विषयसुखं भुञ्जाना देवा अपि दशान्तरं नेच्छन्तीत्यतस्तस्य नितान्तदुरन्तत्वप्रतिपादनाय सर्व्वापरिहार्य्यत्वमुखेन स च सूचितः—'स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः' इति। स हि स्वस्य रसेन वासनासंस्कारमात्रेण वहतीति स्वरसवाही न पुनरागन्तुकः। स च शब्दाद्यष्टादशविषयकत्वादष्टादशधा भवति।

पातञ्जलदर्शने तत्त्वं त्रिविधमभ्युपगतं प्रकृतिः पुरुष उत्तमपुरुष ईश्वरापरपर्य्यायः क्लेशकर्म्मविपाकाशयैरपरामृष्टश्चेति। तत्र प्रकृतिपुरुषौ प्रागेव व्याख्यातौ। उत्तमपुरुषस्तु कूटस्थनित्योऽपि तदुभयविलक्षण एव। अतो हि सजातीयविजातीयभेदावुपन्यस्तौ भवतः। तदुपन्यासाच्च परिच्छेदलक्षणमङ्गीकृतम्। परिच्छेदलक्षणस्य च त्रिविधत्वमवगम्यते प्रागभावध्वंसप्रतियोगित्वं कालपरिच्छेदः, अत्यन्ताभावप्रतियोगित्वं देशपरिच्छेदः, अन्योन्याभावप्रतियोगित्वं वस्तुपरिच्छेदश्चेति। संयमेन तु तेषां सर्वेषामपाय आत्यन्तिकः प्रतिपादितः कैवल्यफलत्वात्। तदेव त्रिविधपरिच्छेदशून्यत्वमधिकृत्य भगवानहिर्बुध्न्यः [ २।४।७ ] स्मरति—

> वर्त्तमानं न तद्ब्रह्म नातीतं नैव भाति तत्।
> अग्रतः पृष्ठतो नैव नोर्द्ध्वाधः पार्श्वयोर्द्वयोः॥ इति।

अस्ति तावत् सांख्याद् योगशास्त्रस्य विशेषो यदेष शास्त्रजन्यप्रकृतिपुरुषविवेको मोक्षोपायः कापिलानाम्, तत्त्वसाक्षात्कारो मोक्षोपायो हैरण्यगर्भाणामिति। एतच्च तयोर्वैषम्यं प्रकृतिपुरुषातिरिक्तपरमेश्वरानङ्गीकाराङ्गीकाराभ्यां व्यपदिश्यते। परमात्मन उपादानत्वानभ्युपगमरूपं तु वैषम्यं वेदान्तादुभयोरपि सुस्पष्टं प्रतीयते। अत एव

भगवता बादरायणेन 'एतेन योगः प्रत्युक्तः' इति सांख्यस्मृतिनिरसनेन योगस्मृतिरपि निरस्तेत्युक्तम् ।

परमार्थतस्तु योगो न निरस्तः । द्वैतनिर्णये तस्य तात्पर्य्याभावात् । षड्दर्शनानां वैशेषिकन्यायदर्शनयोरिव पूर्व्वोत्तरमीमांसयोरिव वा सांख्ययोगयोरपि दृश्यते पूर्व्वमाश्रित्य परस्य प्रवृत्तत्वम् । यथा न्याय-दर्शने वैशेषिकव्यवस्थापितान् पदार्थानाश्रित्यानुमानं व्युत्पादितम्, यथा चोत्तरमीमांसायां पूर्व्वमीमांसाव्यवस्थापितं शब्दब्रह्म समाश्रित्य परं ब्रह्म मीमांसितम्, तथा पातञ्जलदर्शनेऽपि सांख्योक्तां प्रक्रिया-माश्रित्य योगो योगविद्वरिष्ठैराचार्य्यपादैरनुशिष्टः । अत एव द्वैतसत्य-त्वादिषु योगशास्त्रस्य तात्पर्य्याभावान्न कोऽपि वेदान्तविरोधः कल्पितः । तथा हि शारीरकभाष्ये भगवान् शङ्कराचार्य्यः—"अथ तत्त्वदर्शनोपायो योग इति सम्यग्दर्शनाभ्युपायत्वेनैव योगोऽङ्गीक्रियते । अतः सम्प्रति-पन्नार्थैकदेशत्वादष्टकादिस्मृतिवद् योगस्मृतिरप्यनपवदनीया भवि-ष्यती"ति । भामती च तत्र—"यदि प्रधानादिसत्तापरं योगशास्त्रं भवेत्, भवेत् प्रत्यक्षवेदान्तश्रुतिविरोधेनाप्रमाणम् । तथा च तद्वि-हितेषु यमादिष्वप्यनाश्वासः स्यात् । तस्मान्न प्रधानादिपरं तत्, किन्तु तन्निमित्तीकृत्य योगव्युत्पादनपरमित्युक्तम् । न चाविषयेऽप्रामाण्यं विषयेऽपि प्रमाणमुपहन्ति । न हि चक्षूरसादावप्रमाणं रूपेऽप्य-प्रमाणं भवितुमर्हति । तस्माद् वेदान्तश्रुतिविरोधात् प्रधानादि-रस्याविषयो न त्वप्रामाण्यमिति परमार्थः" इति । अत एव वेदान्तेन पातञ्जलाभ्युपगतं जगतोऽचेतनोपादानकत्वपुरुषबहुत्वादिकमेव श्रुति-विरोधान्निरस्यते, न तु साङ्गोपाङ्गस्य समाधेस्तदवान्तरफलविभूति-कैवल्यादीनां साधनत्वमपि । अयं च दर्शनान्तरेभ्यो योगदर्शनस्य विशेषो यदत्राभिहितानामलौकिकसिद्धीनामनुभवो देहेऽस्मिन्नेव भव-तीति । अनुभवश्च तासां सिद्धीनामलौकिकोऽपि लौकिकोपायसाध्य-त्वादिति चित्रम् ।

दुःखहानाय सर्वेषूपायेषु गरिष्ठो वरिष्ठश्च योगोपायः। सर्व्ववृत्तिनिरोधतो ब्रह्मात्मैक्यज्ञानेन मोक्षप्रदत्वात्। सर्व्ववृत्तिनिरोधेन तु ब्रह्मात्मैक्यज्ञाननिरोधोऽपि न शङ्कनीयः। प्रत्यगात्मविषयत्वात्। निरुद्धे हि चेतसि षड्भावापन्नं सर्वं वस्तुजातं नश्यति, प्रत्यगात्मा तु षड्भावातिरिक्तत्वान्न विनश्यति। स च प्रत्यगात्मा स्वव्यवहारे दीप इव समाधौ ज्ञानान्तरं नापेक्षते। स्वरूपप्रतिष्ठितत्वात्। तथा हि श्रूयते—

न तत्र सूर्य्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति॥ इति।

तात्पर्य्येत एतदुक्तं भवति—स्वरूपावस्थाने हि प्रत्यगात्मा स्वयंप्रकाशः सर्व्वप्रकाशकश्च तस्य स्वभानार्थं नान्यापेक्षा वर्त्तत इति।

ननु सर्व्ववृत्तिनिरोधेन यदि पुरुषस्य स्वरूपप्रतिष्ठितत्वं भवति, तर्हि मूर्च्छितस्यापि तदेव भवितुमर्हतीति चेत्? नैवम्। सरागवृत्तिनिरोधः स्वरूपप्रतिष्ठायै न कल्पते। ततो ब्रह्मात्मैक्यज्ञानाभावात्। अतो ब्रह्मात्मैक्यज्ञानाय सरागवृत्त्युच्छेदरूपो योगोपाय आश्रयणीयः। श्रुत्या च तन्मार्ग उपदर्शितः—

यच्छेद् वाङ्मनसी प्राज्ञस्तद् यच्छेज्ज्ञान आत्मनि।
ज्ञानं नियच्छेन् महति तद् यच्छेच्छान्त आत्मनि॥ इति।

तदेव विद्वद्योगी 'नानुध्यायाद् बहूञ्छब्दान् वाचो विग्लापनं हि तदि'ति प्रमाणेन वागिन्द्रियलक्षणमिन्द्रियवर्गं प्रातिलोम्येन मनसि व्यापारवति प्रविलापयन् प्रागेव मौनी भवति, ततः पिण्डीकृतमनोमयविषयं विशिष्टे ज्ञातरि समाहरन् सर्वमहमेवेदमस्मीत्येवंकारवृत्तिमात्रशेषो भवति, ततश्चाभिमानरूपाहङ्कारं सर्व्वानुस्यूते महत्तत्त्वे सामान्याहङ्काराख्ये समुपहरन् विषयवेदनमन्तरेणास्मीत्येतावन्मात्र-

शेषस्तिष्ठति। परिशेषतस्तदपि महत्तत्त्वं कुतश्चिदभिमन्तव्याभावात् प्रधाने निहितं शुद्धे ज्ञातरि विलीयते, स चापि योगं महाफलं लभते। तदेव कृष्णार्ज्जुनसंवादे दीर्घरवप्रयुक्तो दुन्दुभिताडनापुरःसरो महाडिण्डिम'स्तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिक' इति।

पतञ्जलिप्रोक्ते योगदर्शने चत्वारः पादाः सन्ति—समाधिपादः साधनपादो विभूतिपादः कैवल्यपादश्चेति। तत्र प्रथमे पादे योगलक्षणमुद्देशनिर्देशादींश्चाभिधाय समाहितचित्तानामुत्तमाधिकारिणामभ्यासवैराग्याभ्यां क्रियायोगनिरपेक्षाभ्यां समाधिनिष्पत्तिः प्रतिपादिता, प्रभेदा उपायाश्च दर्शिताः। तथाहि पदार्थसंग्रहश्लोकः—

योगस्योद्देशनिर्देशौ तदर्थं वृत्तिलक्षणम्।
योगोपायाः प्रभेदाश्च पादेऽस्मिन्नुपवर्णिताः॥ इति।

स च समाधिलक्षणो योगो द्विविधः सम्प्रज्ञातोऽसम्प्रज्ञातश्चेति। तत्र सम्यग् ज्ञायते साक्षात्क्रियते भाव्यमत्रेति सम्प्रज्ञातो ध्येयमात्रव्यापारेऽन्यतः प्रत्याहृतस्य चित्तस्य स्थैर्यविशेषः। अस्य च समाधेर्दृष्टफलं वृत्तिनिरोधेन क्लेशनिवृत्तिः, अदृष्टफलं तु ध्येयसाक्षात्कारो येन हि चित्तं स्वत एव सकलविषयावगाहि सत्यग्रहणक्षमं च भवति। समाधिरयं सम्प्रज्ञातश्चतुर्विधो वितर्कानुगतो विचारानुगत आनन्दानुगतोऽस्मितानुगतश्चेति। स च वितर्कादिक्रम औत्सर्गिक एव परमसूक्ष्मविषये चित्तस्यैकपदे प्रवेशासम्भवात्। तथा हि स्मृतिः—

योगारम्भे मूर्त्तहरिममूर्त्तमथ चिन्तयेत्।
स्थूले विनिर्जितं चित्तं ततः सूक्ष्मे शनैर्नयेत्॥ इति।

( क्रमशः )

---

## प्रयागस्नानम्

[ निबन्धकः—श्रीविष्णुधरतर्कतीर्थः ]

व्यतीते कार्त्तिके मासि तीर्थभ्रमणप्रसङ्गे नानाविलसुखदेन समागतोऽहमविमुक्तवाराणसीपुरीं पञ्चषाणि दिवसानि न्युष्य ततो भारतीयनदीकुलेषु वरिष्ठतामधिगच्छन्त्या भागीरथ्या यमुनया च स्थानसौकुमार्य्यदिदृक्षया विवशहृदयेवागत्यान्योऽन्यसम्मेलनेनाहित-पावित्र्यमाहात्म्यसौन्दर्य्यविरहितमपि नैसर्गिकाशेषशोभानिकेतनं पुरा वीतसकलरागेणर्षिकुञ्जरेण भरद्वाजेन महामतिना योगानुष्ठान-योग्यतां सर्वथा परीक्ष्येवाश्रमपदं निर्म्माय विहितगौरवसन्तानं शास्त्र-कृद्भिरपि—

"गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे।
स्नात्वैव ब्रह्मणो विष्णोः शिवस्य च पुरं व्रजेद् ॥"

इत्यादिना वचनजातेन मुक्तकण्ठमुद्घोषितयशःप्रकर्षं प्रयागं नाम सर्व-जनविदितं नातिसुगमं तीर्थक्षेत्रमगच्छम्।

प्रत्यक्षमनुभवतां बहूनां प्रयागतीर्थप्रत्यागतानां मुखाच्छ्रुता मयै-तत्तीर्थाधिकारिणां 'पाण्डे' इत्याख्यानां प्रकृत्या दुर्बलेषु भीधातोरपादा-नतापदवीं चिराय वैदेशिकेभ्यः समुत्सृज्य स्वयं कर्त्तृभूयं भजमानेषु वङ्गीययात्रिष्वर्थशोषणार्थममानुषी अत्याचारवार्त्ता। ततश्च वङ्गदेश-वास्तव्येन वर्षिष्ठजननीमात्रद्वितीयेन भीतभीतेन मया विज्ञापिता-शयः सदाशयो वाराणसीनिवासः कश्चित् सुहृत्तमः प्रादान्मे परिचय-पत्रमेकं स्वनामाङ्कितं, तत्प्रेष्ठं प्रयागतीर्थाधिकारिणं कञ्चिदभिप्रेत्य। यत्नतो बद्ध्वा तत्साहायकं पत्रं चेलाञ्चले, आवां कस्मिंश्चिदपराह्ने आव-श्यकं लघुभारं शय्योपकरणादिकं द्रव्यजातं संगृह्य काशीस्थवासभवना-

निष्क्रान्तौ प्रणम्य चोद्देशेन देवदेवं विश्वनाथं सकलकल्याणहेतुं, तुरगयानेन "वेनारसक्यान्टनमेण्ट" इत्यभिध-ष्टेशनस्थानाभिमुखं यात्रामकुर्व ।

अस्मात् स्थानादाप्रयागं वङ्गोत्तरपश्चिमप्रदेशीयबाष्पयानपरिचालकसमिते-(B.N.W.R.)रेकः शाखापथो विततो वर्त्तते, योऽत्र स्थानीयव्यवहारेण 'छोटलाइन' इत्यभिधामाश्रयते। इतरस्तु स्थवीयान् मार्गो यः खलु 'हाओडा'मारभ्य 'दिल्ली'नगरीं यावत् प्रसृतः 'वडलाइन' इत्यभिधीयते, तेनाप्यस्मात् स्थानात् 'एलाहाबाद' इत्यपराभिधानकं प्रयागगमनं सुशकमपि गङ्गा-यमुना-सङ्गमवगाहनाय प्रेप्सूनां तीर्थयात्रिणां प्रागुक्तसरण्या "ईजट्ब्रीज्" इति नामधेये बाष्पयानीयविश्रामस्थानेऽवतरणमेव श्रेयो भवति, यतोऽस्मात् स्थानात्तीर्थस्थानस्य यथा नेदीयस्त्वं न तथा द्वितीयमार्गेण प्राप्तव्यदेशात् ।

आप्तमुखादधिपथमेवं विदितवेदितव्येन मया यथाकालं प्रतिजनं सपादैकराजतमुद्रारूपशुल्कं रन्ध्रपथेनाधिकारिणे प्रदायानायासं तृतीयश्रेणिकानुमतिपत्रद्वयी लब्धा। अनायासमित्युक्तेः कारणशुश्रूषा पाठकानां सूक्ष्मेक्षमाणानां केषाञ्चिदुत्पद्येत, अतः प्रसङ्गसङ्गतिमनुसृत्योच्यते यत्, पाश्चात्यतीर्थेषु स्नास्यद्भिर्वङ्गीयैस्तेषु तेषु प्रसिद्ध-'ष्टेशन'गृहेषु बाष्पयानीयानुमतिपत्रसंग्रहो महति जनसम्मर्दे प्रायेण शारीरशक्तिव्ययमन्तरेण, अन्तरेणैव तत्तद्विविधव्ययं न शक्यते कर्त्तुम् इति स्वदेशस्थितैरस्माभिराकर्णितम् । अत्र तु प्रत्यक्षमनुभूय कुत्रापि वाक्यस्यास्य याथार्थ्यं नोपलब्धं सुकृतिमानिना मया। अतएवानायासमित्युक्तिर्न वैयर्थ्यदोषस्य कुक्षावात्मानं निःक्षिपतीति प्रकृतमनुसरामः ।

घटिकायन्त्र आपराह्णिकैकवादनतः परस्मात् स्थानादभिप्रयागं वाष्पीयशकटं प्रधावति । आवां यथाकालं साटोपगर्जनैर्धूमराशिमुद्गिरत्यागते शकटे सुखमुपविश्य गवाक्षरन्ध्रेणाभितः सौन्दर्यराजिं दर्शं दर्शं

दर्शयन्तौ चान्योऽन्यं दर्शनीयवस्तुजातं वङ्गीयमध्ये नवमिव प्रतिभातमुपदर्शानि विश्रामस्थानान्यतिक्रम्यासम्भृतानि सायं सप्तमघटिकायां पारेगङ्गमुपस्थिता। दृश्येष्वन्तरान्तरा वंशवनम्, वदरीवनम्, बहुविस्तृतमाम्रवणञ्च प्राधान्येन वर्त्तन्ते। धान्यक्षेत्रं तु कुत्रापि नावातरन्नयनसरणिं, कालान्तरे भूर्धान्यं बिभर्त्ति नो वेति न जानीमः। यवादिकशस्यमुरसा बिभ्रद् भूखण्ड एव क्वचिद् दृष्टः। क्षेत्रेषु जलसेकार्थं कूपोऽपि खनितोऽवलोकितः। देशोऽयं वङ्गदेशवन्न समृद्धजनबहुलः, प्रायेण जीर्णास्तालपत्राच्छादिताः कृषीवलानां कुटीरा एव दृष्टिपथे पतिताः। सहयात्रिणश्च मदीया यानारूढा मलिनवसनं निवसानाः प्रायेण वर्णज्ञानविरहितास्तद्देशीयाः स्वदेशस्य शोचनीयां दीनावस्थामिव प्रकटयन्ति स्म। धन्यास्माकं जननी वङ्गावनिः, प्रतिग्रामं कूपवापीपुष्करिणीदीर्घिकाकुल्यालङ्कृता "सुजलां सुफलां शस्यश्यामला"मिति गीतिवाक्यस्य सर्व्वथा सार्थक्यं साधयतीति वैदेशिकविरागभिया तेभ्यः क्षमामभ्यर्थ्य विरम्यते।

गङ्गायाः प्राचि तीरे 'युसी' इत्याख्यं 'ष्टेशन'गृहं वर्त्तते, तदतिक्रम्यैवास्माकं शकटं विचित्रमुत्तरतो दक्षिणवाहिन्या गङ्गाया उपरिस्थं द्राघिष्ठं लौहमयसेतुं झनझनारवमुखरितं शनैर्निपीड्य पश्चिमतीरावस्थितमस्मदभीष्टम् "ईजट्ब्रीज्" इत्यभिधं शुल्कस्थानं प्राप्य व्यश्रमत्। यस्य हि श्रीमतः केदारनाथशुकुलनामधेयस्य तीर्थाधिकारिणः पत्रं संगृहीतं काशीस्थसुहृद्वरतो मया, तस्य कुत्र वासस्थानम्, केन च पथा कां वा दिशमस्यां रात्रौ गन्तव्यमित्यादिकं चिन्तयत्येव मयि मात्रा सह यानादवतरति, पञ्चषा यष्टिहस्ताः पुरुषा "आगम्यतां भद्र! केदारनाथस्य भवनम्, सुखेन स्थायिष्यत" इत्याद्यभिदधत आपतिताः। अथ मया सविशेषं पृष्ट्वा 'शुकुल' इत्युपाधिना स्थानसङ्केतेन च मदन्वेष्य एवायमिति निश्चिन्वता मातृपुरःसरेण तैरुपदिष्टपथमुपसृत्यानतिदूरमेव प्राप्तं तस्य तीर्थगुरो रमणीयं भवनम्।

द्वितलस्य रुचिरस्यास्य परिष्कृतहर्म्यस्य एकस्मिन् प्रकोष्ठे पुरुषा आवां प्रवेशितवन्तो यत्रापरेऽपि त्रिचतुरा गृहस्वामिनः कर्मकरा उपविष्टा आसन्। तेषामेको वङ्गदेशीयः प्रौढिमुपागतः 'सरकार' इत्युपाधिभूषितः प्राधान्यपदवीमारूढो मम परिचयादिकं सविशेषमवगम्य सविनयमुवाच "भद्र! भवतः पत्रं श्वः प्रभाते प्रभुसकाशमुपस्थापयिष्यामि, असावद्योपरितनप्रकोष्ठे स्वीये सुप्तिसुखमनुभवन्नास्ते, भवदभीष्टे यत्र कुत्रचित् प्रकोष्ठे सुखेनाद्य रजनी याप्यताम्; गेहाङ्गने जलनालिका नक्तन्दिवं यात्रिणां कृते जलमुद्वमति, अदूरे च हट्टो वर्त्तते, तत्रास्मदीयैर्भृतकैः सह गत्वा नैशाहारस्योद्योगः क्रियताम्" इति।

अस्मिन् प्रदोषसमये सुप्तिवृत्तान्तमाकर्ण्य विस्मयमानेन मया सुपरिष्कृते कुत्रचिज्जलनालिकासन्ने प्रकोष्ठे दीपं प्रज्वाल्य कम्बलास्तरणे मातरमुपवेश्य भक्ष्यसंग्रहाय केनचित्तत्रत्येन कर्मकारेण साकं प्रतिहट्टमयायि। शुकुलमहोदयस्य वासभवनस्यानतिदूर एव 'दारागञ्ज'नाम्ना विख्यातो हट्टः। यद्यप्यस्मिन् स्थाने सम्बृद्धिर्न नयनलोभनीया, वणिजां विपणयो न बंहिष्ठाः, जनसमावेशोऽपि विरलस्तथाप्यत्र राजपथस्य प्रशस्तता निर्मलता सौन्दर्य्यञ्चानवद्यानीति, द्रोणव्यूहवत् सर्व्वतः सङ्कीर्णमार्गकात् पथिकसङ्घर्षव्याहतस्वच्छन्दगतागतात् काशीधाम्नः सद्य आगन्तुकस्य मे मनो नितरामतुष्यत्। अथवा मनो नातुष्यदिति को वेद? तथाहि विधवा मे जनन्येकाहारा रात्रावोदनं नोपभुङ्क्ते, तीर्थयात्रित्वान्ममापि सैव गतिः। वाराणस्यां निशि भक्ष्यं फलमूलादिकं पर्य्याप्तं क्रय्यमासीत्। अत्र तु दारागञ्जे प्रदोषकाले कदलीफलान्यपि नोपलब्धितानि मया, का कथा फलान्तरस्य? 'एलाहाबाद'नगरे तु येऽवतरन्ति तेषामेवं पर्य्यनुयोगस्यावसरो न भवेदिति निःसंशयं वक्तव्यमेव।

अथागत्या सुलभमनुद्धृतसारं कवोष्णं गव्यदुग्धं यथेप्सितं शर्करायां

संगृह्य भवनं प्रत्यावृत्य सन्ध्यावन्दनं समाप्तं, ·समाहितञ्चावाभ्यामुदर-हुतकस्य कृते पयःपानं, सन्ध्याय वाराणसीकृतनैशभोजनप्रकार-विशेषम्। एतत्तु नोच्यते चेद्रसनाया अकृतवेदिता स्याद् यदत्र दुग्धरूपे पयसि तरलतया सजातीयपयोऽन्तरनिलीनीकरणपटुतां नाधिगतवन्तो मूढा जना इति।

अचिरेणाशेषदुःखहारिणी निद्रादेवी कृपावती बभूवावयोः। अथ पश्चिमरात्रे झरझराकृत्याकस्मात् प्रबलवारिपातो निद्राभङ्गकरोऽन्यूनं घटिकाद्वयं समजनि। छत्रविरहितयोरावयोः कृपयेव प्रातर्वर्षण-विरतोऽपि पर्जन्यदेवः प्रच्छाद्य सवितुस्तेजः सर्वतो नभोऽधितष्ठौ। ·आवाञ्च कृतशौचाचमनौ सन्ध्यामुपास्य तस्य 'सरकार' महोदयस्य सविधे उपस्थिताविव तेनाभिहितौ यद्—"अस्माकं प्रभुं विलम्बितशय्यापरी-हारमनपेक्ष्य, अयमस्माकं पुरोहितठक्कुरः, अयञ्च भृतकः, एताभ्यां सह भवन्तौ साम्प्रतमेव नदीसङ्गमं गच्छतामन्यथा सर्वकृत्यं निःशेषेण समाप्य गृहप्रत्यावर्त्तने वेलातिक्रमो जायेत, प्रतिजनञ्च सपादराजत-मुद्रैका दक्षिणा प्रदेया कार्य्यावसान" इति।

गयादितीर्थेषु सर्व्वत्रैव तीर्थगुरूणामेवं भोगविलासमात्रपरायणतां प्रधानकर्म्माध्यक्षनिर्भरताञ्चावलोकितवता मया तस्योक्तेरवितथतां यौक्तिकताञ्चावगम्य मातरमग्रतः कृत्वावश्यकं वस्त्रद्वयं कमण्डलु-द्वयञ्चादाय गृहान्निरयायि। तौ चावामन्वसरताम्। पुरोहितठक्कु-रेणावयोः किमपि न प्रयोजनमासीत्, भृत्यस्तु पथिप्रदर्शकतया साम-यिकोपदेशकतया च कर्त्तव्यार्थस्य भूयांसमुपयोगमयासीदिति स्वस्ति-मान् भवतात्।

पथि बहिर्गतावावां मृदुना वस्त्रेण संवीतगात्रौ रात्रिकृतवारि-वर्षणजनितशैत्यप्रकर्षस्यातिदूरदिग्देशादबाधं प्रवातः प्रभातसमीरण-स्याहतिकम्पितौ नितरामक्लिश्याव। तीर्थयात्रिणामेवमचिन्तितपूर्व्व-क्लेशभोगो न विचित्रतामावहति, विशेषतोऽधनानां मादृशाम्। भवतु

तावद् अस्मात् स्थानाद्दक्षिणपूर्वस्यां क्रोशार्द्धमितां पुलिनभूमिं श्यामल-शष्पपरिवृतां सुखपादप्रचारामतिक्रम्य प्राप्तस्त्रिवेणीसङ्गमः।

सङ्गमस्थले गङ्गा रजतधवला तीव्रतरस्रोतोवेगभीषणा पश्चिमतीर-विभङ्गविधायिनी उत्तरतो दक्षिणस्यां प्रवहति। भङ्गुरतटप्रान्ते स्थित्वा त्रिचतुरधनुःप्रमितेऽधस्तात् प्रवहन्त्यास्तस्या रौद्रीं मूर्त्ति-मनिमेषाभ्यां नयनाभ्यां पश्यतो मे मनसि पौराणिकः स ऐरावताभि-भवव्यापारो मूर्त्तिमानिव प्रत्यभात्। कालिन्दी तु मृदुमन्दवेगा नीलिम्ना गाम्भीर्य्येण च नभस्यमाना पश्चिमतः पूर्वस्यामभिगङ्गमचापलं नृत्यन्तीव प्रवाहिता वर्त्तते। सरस्वत्याः सन्धानं सरस्वतीप्रियैरेव ज्ञातं ज्ञातव्यञ्च।

मध्येयमुनं परःशता बृहत्तमाः कूर्म्मा निमज्ज्य निमज्ज्य उत्प्लव-माना दृष्टाः। मकरवाहनायां गङ्गायामेव मकरसत्ता तत्रत्येभ्यः श्रुता दर्शनविषयतान्तु न मे याता। जलचराणां मकराणामदर्शने-ऽपि तत्र समुपस्थितैरेवास्माभिरालोकिता यात्रिदर्शनपूर्विकया आक्रमणकारिणः स्थलचराः क्षुरपाणयोऽनेके व्यथकतया मकरकल्पा नापिता येषां वशंवदता प्रयागक्षेत्रे यात्रिणामपरिहार्य्यैव। तथाच स्मृतिः—

"गङ्गायां भास्करक्षेत्रे मुण्डनं यो न कारयेत्।
स कोटिकुलसंयुक्तमाकल्पं रौरवं वसेत्॥"

ये तु यात्रिणस्तीर्थगुरुभिः सह सर्वविधव्ययस्य व्यवस्थां प्राक् साधयन्ति तेभ्यो नापिताः किमपि न प्राप्तुमर्हन्ति, केवलं प्रतिजन-माणकमेकं तीर्थगुरुभिः प्रदत्तं प्राप्नुवन्तीति तत्रत्या स्थितिः। तथापि पारितोषिकाय परिहितवस्त्राय च पुनः पुनः प्रत्याख्याता अपि ते भृशमुद्वेजयन्ति जनान्। अथ नापितावावां मद्राक्षतवन्तौ। अत्र नापितानां मुखात्—'वापयेत् सर्वगात्राणि कक्षवक्षःशिखां विने'ति श्लोकांशः प्रायेणैव श्रूयते। अतःपरं स्नानप्रकार उपवर्ण्यते।

मध्ये नदिसङ्गमस्थले जलं जानुदघ्नम्। सङ्गमानुरोधात्तटसमीपे गभीरजलेऽवतरणासौकर्य्याच्च नावमारुह्य तत्रैव गत्वा स्नानमाचरन्ति जनाः। पञ्चषजनवहनयोग्याः प्रायेण पञ्चाशत्संख्यापरिमितास्तरण्यो निराच्छादना यमुनातटोपान्ते मया दृष्टाः। आणकचतुष्टयेन मया नौरेका संगृहीता। नाविके यत्नत आवामारोह्य तरणीं मुक्तबन्धनां कृतवत्येवानुकूलेन स्रोतसोत्प्लुत्य सविलासं नृत्यन्तीव साचलत्। अत्रेदं वक्तव्यतयावतिष्ठते यद् जलधिजलोच्छ्वासः प्रबलोऽपि प्रयागं किमुत आवाराणस्यपि उपस्थातुं न सौभाग्यमर्जितवान्। अहो! उच्चैःप्रभवतया प्रतिग्रहादपावृत्तिधर्म्मा अपि तरङ्गिणी रत्नाकर-सान्निध्याल्लावण्यमपि निपीय सलिलं च्युतव्रता दत्तापहारित्वकलङ्क-कालिमलिप्तमुखी न जिह्रेति। धन्यो जगति रत्नाकरमहिम्नः प्रभावः।

अथ नाविको यथास्थानं नीत्वा नावं भुपकृत्य जलमध्येऽवततार, दृढमुष्ट्या दधार च ताम्। गभीरतमेऽत्र नदीवक्षसि शालवृक्षोऽपि निपतितः स्रोतोवेगेन तृणवद्विचाल्यते ; कथं नाम चोदिष्टा वालुका-कणा निरालम्बना एवमेकत्र सम्भूय वारिमग्नद्वीपं सृजन्तीति अचिन्त्यः खलु प्रकृतिदेव्या लीलाविलासः। अत्र जलं जानुदघ्नमिति प्रागेवोक्तम्। आवां सावधानं नौकातो जलमवतीर्य्य धृत्वा चैकेन हस्तेन दृढं नौप्रान्तदेशमभिलापवाक्यमुच्चार्य्याष्टाङ्गप्रणामवत् कथमपि प्रह्वीभूय स्नातवन्तौ। स्रोतसो रयेण पदतलस्था मृत्स्ना दूरमप-सरति, ततश्च पादसंयोगशैथिल्यवशात् प्रतिपदमेव स्थानच्युतिभय-मभवदावयोः। शिक्षानैपुण्यास्तु तद्देशीयाः कतिचित्ताम्रखण्डलिप्सवो भिक्षुका निर्भयमत्र पादचारेण यात्रिण इतस्तत उपतिष्ठमाना "आकुलीकुरुते न कमि"ति कविवचनांशस्य प्रामाण्यमुट्टङ्कयन्तस्तत्रा-वलोक्यन्ते स्म।

स्नानावसाने तरणीमारुह्य परिहितशुष्कवसनावावां तर्पणादिकं यथाविधि समपादयाव। नाविकस्य निःस्वार्थं पुनः पुनर्गतागतक्लेश-

मुत्सृज्य निःश्रेयससाधनतया तत्रैवोन्मुक्तो नदीवक्षसि चिराय निनर्त्ति पु-मिव तरणीं स्रोतःप्रातिकूल्याद् बलेन वहित्रमुत्क्षिपंस्तटभूमिं निनाय।

अथास्मिन् समये दिष्ट्या दिशां मुखानि प्रसन्नीकृत्य देवो दिवाकरः कथमप्यभ्रजालान्निर्मुक्तप्राय इवाभवत्। आवामपि नदीसङ्गमस्नान-स्यातीव स्वास्थ्यकरत्वाद्वा, केशानां परिवापनाद्वा, दिवाकरकरस्याभ्यु-दयवशाद्वा समीरणशैत्यजनितशारीरजाड्यान्निर्मुक्तौ प्रकृतौ समस्थि-ष्वहि। अतः परमक्षयवटदर्शनस्य समयः। पश्चिमेनैतं प्रदेशं यमुनाया उदीचि तीरे वर्षासु तया चुम्बितयाप्यप्राचीरं विशालं तद् 'एलाहा-वाद'दुर्गम्। तदभ्यन्तरवर्त्ती खलु अयमक्षयवटः। सरितोरत्र कूल-ङ्कषतया स्वीयाक्षयसंज्ञासार्थक्यसंविधानायैव किं वटोऽयं वज्रकठोर-स्यास्य दुर्भेद्यदुर्गस्य शरणमापन्नश्चिराय निःसपत्नो निद्राति? क इमं प्रश्नं समाधास्यति? को वाऽनुभवति तस्य असूर्य्यम्पश्यस्य निदारुणां मर्म्मव्यथाम्?

तरणीमुत्सृज्य, उत्सृज्य च सङ्गिनं पुरोहितठक्कुरं तं पथिप्रश्न कर्म्मकरमग्रतः कृत्वा तेन वङ्गभाषाकुशलेन सह चित्रालापसुखेन पन्थानं कृसिष्ठं नदीसैकतगतमतिक्रम्यावां दुर्गमूले समुपस्थितौ। अस्मिन् दुर्गाभ्यन्तरे तीर्थयात्रिणामेव प्रवेशाधिकारो नान्येषामिति स कर्म्मकरो दुर्गतोरणोपकण्ठे क्वचित्प्रच्छायशीतले मनोरमे वटमूले उपलखण्डमेकमध्यासीनो गन्तव्यमार्गसंस्थानादिकमुपदिश्य व्यसर्जय-दावाम्। प्रविश्य च द्वारदेशं कश्चिद् युरोपीयः शस्त्रधरो दौवारिको-ऽवलोकितः। तत्समीप आर्द्राणां वाससां स्थापनाय कृतेङ्गितावावां तथैव कृत्वा कञ्चित् पन्थानं क्रमोन्नतं मनोरममतीत्य सुरङ्गमेकमपश्याव। तेन च सुरङ्गपथेन सोपानावलीसहितेन पुरुषप्रमितेऽधस्तादवतीर्य्य सुप्रशस्त एकः प्रकोष्ठः प्राप्यते यत्र प्रायेण विंशतिर्देवमूर्त्तयो द्वित्र-हस्तोन्नता अभग्नावयवाः समोच्छ्राया एकामिव च रुचिमवलम्ब्य क्षण-

प्रस्तरनिर्म्मिता विराजन्ते। तेषु प्रथमा नयनपथेन लोहितमिवोद्गिरन्ती दुर्व्वासमो मूर्त्तिः कर्म्मफलस्याखण्डनीयतांबुद्धिं दर्शकमनसि झटित्येव जनयति। यो हि द्वापरे द्वितीयस्य रिपोरासनम्प्रतिहतप्रभावमध्यास्य पुण्यात्मनां भीमद्वितीयानां पाण्डुपुत्राणामपि भीमतामभजत्, तस्यैवं घोरे कलौ काले पातालतलनिर्व्वासनं सृष्टिरक्षाया हेतुरिति तस्मै नमस्कृत्य अपरा अपि तत्रत्याः सूर्य्य-कार्त्तिकेय-गणेश-दुर्गादीनां प्रतिमा आवाभ्यामवलोकिताः पूजिताश्च। आसां मूर्त्तीनां प्रत्येकमुपरिष्टाद् हस्तमितं गवाक्षजालमस्ति तेनैव च सौरालोकप्रवेशादस्मिन् भूगर्भस्थे प्रकोष्ठे कथञ्चित्तमसा तिरोभूयते।

अत्रैव च देवगणमध्यवर्त्ती अक्षयवटश्छिन्नशाखो जीर्णकायः पञ्चषहस्तोत्सेधः। अत्र केचिद् ब्राह्मणा मूलदेशसमासीना इमं हस्तप्रमितादूर्द्ध्वदेशतः शाखाद्वयविभक्तं वाससा सिन्दूरपुष्पमाल्याभरणैश्चाच्छाद्य संस्कृतभाषामयान् कांश्चिन्नमस्कारश्लोकानध्यापयन्तो यात्रिभ्यो दक्षिणामाददते संस्कृतवाण्याश्चान्त्येष्टिं विदधति। तरुरयं चरमं श्वासवायुममुचन्न वेति संशयो मम चेतसि नितरामेव पदं न्यधात्। सत्स्वप्यस्य प्राणेषु ते सततमेव बहिर्निर्जिगमिषव एवेत्यसंशयं वक्तुं शक्यते।

अथ दुर्गाद् बहिर्निर्गत्योत्तरस्यां दिशि कञ्चित्पन्थानमतीत्य दृष्टो देवो वेणीमाधवो नाम नारायणः। असौ धातुमयो हस्तमात्रश्च सुरम्यं मन्दिरमधिवसति। अत्र प्रवेशशुल्कव्यवस्था नास्ति। दृष्ट्वा स्पृष्ट्वा प्रदक्षिणीकृत्य च तं ततः प्रतीच्यां कियद्दूरं गत्वा ललितां नाम तत्रत्यामनादिदेवतामपश्याव। ततश्च मध्याह्ने शुकुलमहोदयस्य वासभवनं प्रत्यावृत्यैव भोजनव्यापारं समासतः सम्पाद्यापराह्ने तेन तीर्थगुरुणा सह लब्धसाक्षात्कारो प्रतिजनं सपादैकराजतमुद्रामिव दत्त्वा परिचयपत्रबलेन विना वाग्व्ययं तस्य प्रभूतं सन्तोषमुदपादयाव।

अतश्च पुनरीजट्ब्रीज् ष्टेशनमट्टं प्राप्य सायं बाष्पशकटमारुह्य

रात्रे र्दशमहोरायां पुण्यभूमिं वाराणसीमागतावावां सुप्तिसुखमन्वभूव। परेद्युः प्रातश्च तत्परिचयपत्रदात्रे बन्धुवराय स्वयमेव कुशलवार्त्तां ज्ञातुमागतायान्तरिकी कृतज्ञता मया निवेदितेति शम्।

---

## चैत्रमासीयसमस्यापूरणम्

निजालये द्वादशास्यचालिते
भयार्त्तगौरीभुजमध्यमीयुषः।
हरस्य रोषो न विकाशमित्यहो
उदेति दोषादपि दोषलाघवम् ॥ १ ॥

अन्यस्याः सदनमुपागते मुकुन्दे
श्रीराधा तदुपहृतां विनिन्द्य मालाम्।
चिक्षेप क्षितितल इत्युवाच वृन्दा
विक्रीते करिणि किमङ्कुशे विवादः ॥ २

अथवा

साम्राज्यं सकलमुपेयुषो महर्षेः
सक्रोधां पुनरपि दक्षिणार्थभिक्षाम्।
श्रुत्वा तं पुरजन एवमाह नम्रो
विक्रीते करिणि किमङ्कुशे विवादः ॥ २

भट्टपल्लीसंस्कृतविद्यालयस्य
कश्चिच्छात्रः।

---

## द्वितीयोऽध्यायः

**शक्यार्थबाधे सङ्कोचः प्रसारः * प्लुतिरेव वा ।**
**सङ्केतस्य स्मृता वृत्तिर्लक्षणा योगसम्भवे ॥१॥**

अभिधां निरूप्य लक्षणां निरूपयति—शक्येति । शक्यार्थस्य सङ्केतितार्थस्य बाधे प्रकृतानुपयोगे सति सङ्कोचो न्यूनत्वं प्रसारश्चाधिकत्वं प्लुतिरुल्लङ्घनं तत्त्यागेन अन्यार्थाश्रयणमित्यर्थः । योगसम्भवे सम्बन्धसत्त्वे, न तु सम्बन्ध एव लक्षणेति भावः ॥१॥

**त्रैविध्यमेतच्छक्तेर्वा लक्षणा वृत्तिरिष्यते ।**
**वृत्तिः सङ्केतयोः केचिन्मन्यन्त उभयोरपि ॥२॥**

पक्षान्तरमाह—शक्तेरिति । शक्तेरभिधाया एव एतत् सङ्कोचादित्रैविध्यं वृत्तित्वेनैतस्या एव औचित्यादिति भावः । उभयोरपीति । वस्तुतस्तु विनिगमनाविरहादिति भावः ॥२॥

**प्लुतिस्तु जहती नाम *प्रसारोऽजहती च सा ।**
**सङ्कोच उभयो ज्ञेया सम्बन्धादप्यनेकधा ॥३॥**

उक्तक्रमप्रातिलोम्येन प्रसिद्धनामाह—प्लुतिरिति । अनेकधेति शक्यलक्ष्ययोः सम्बन्धस्य नानाविधत्वाल्लक्षणापि तथेत्यर्थः ॥३॥

**शङ्करलिङ्गं रेवायां शोणैरर्च्यं दिनोदये ।**
**यतः प्रफुल्लाः पद्मिन्यस्तत्रेत्यादौ यथाक्रमम् ॥४॥**

उदाहरणान्याह—रेवायामिति । अत्र रेवाशब्देन तत्तीरे लक्षणा ।

---

* प्रस्तार इति पाठान्तरम् ।

स्थापितस्य ज्योतिर्लिङ्गस्य प्रवाहेऽवस्थानासम्भवादत्र मुख्यार्थ-बाधः। प्रवाहतीरयोः संयोगसम्बन्धः। रेवाशब्दे जहती नाम लक्षणा। जहत्त्वं शब्दधर्मो लक्षणायामारोप्यते, अन्तर्भावितण्यर्थो वात्र जहातिः, धातूनामनेकार्थत्वात्। अत्र गङ्गायां घोष इति प्रसिद्धोदाहरणं तूनेयप्रश्नत्वाद् घोषशब्दस्यानेकार्थत्वाच्च सन्दिग्धम्। इदं तु स्पष्टमिति बोध्यम्। शोणैरिति। शोणगुणस्य पूजोपयोगासम्भवात् तद्वति द्रव्ये लक्षणा, सा चाजहती गुणरूपस्य त्यागाभावात्। समवायश्चात्र सम्बन्धः। शोणो धावतीति प्रसिद्धोदाहरणं तूनेयप्रकरणत्वेनास्पष्टम्, इह तु पूजाप्रकरणात् पद्मिनीसद्भावोक्तेश्च कमलपरत्वेन स्पष्टतरमिति बोध्यम्। पद्मिन्य इति। पद्मिनीशब्देन तदेकदेशेषु जहदजहल्लक्षणा सर्वावयवाप्रफुल्लत्वासम्भवाद् अप्रफुल्लानां त्यागः, प्रफुल्लानां चावयवानां पद्मिनीशब्देन लक्षणया उपस्थितिः, अप्रफुल्लावयवानां प्रत्यक्षेणोपलम्भाद् मुख्यार्थबाधः, समवायश्चात्र सम्बन्धः। प्रफुल्ला इति फुल्ल विकसने इति धातोः पचाद्यचि ज्ञेयम्, "अनुपसर्गात् फुल्ल—" [पा० ८।२।५०] इत्यादिसूत्रं तु धात्वन्तरविषयम्। लक्षणा वेदान्तेषु "तत्त्वमसी"ति महावाक्ये ब्रह्माद्वैतप्रतिपादनाय स्वीकृता। तत्प्रपञ्चस्तु विस्तरभयान्न क्रियते ॥४॥

**शक्यलक्ष्यार्थसम्बन्धं लक्षणां तार्किका विदुः।**
**अन्यैः शक्यान्यसम्बन्धे प्रोक्तो भक्तेः सहायता ॥५॥**

शक्येति। लक्षणायाः क्रियारूपत्वात् सम्बन्धस्य तद्भिन्नत्वाच्च तन्मतं विरुद्धमिव भाति इति तदपमर्दकमालङ्कारिकमतमाह। अन्यैरालङ्कारिकैः। शक्यान्यस्य सम्बन्धे। भज्यतेऽनयेति भक्तिः। बाहुलकात् करणे क्तिन् बुद्ध्यादिशब्दवत्। तस्या लक्षणायाः, अभिधायाः सङ्केतस्य एवं सहकारित्वमुक्तं न तु तस्मिन्नेव लक्षणात्वमङ्गीकृतमिति भावः ॥५॥

**सम्बन्ध एव भक्तिश्चेच्छब्दवृत्तिर्न सा भवेत् ।**
**अर्थाश्रयत्वाद्भक्तिस्तु शब्दद्वारार्थगामिता ॥६॥**

अत्र युक्तिमाह—सम्बन्ध इति । सम्बन्धस्य क्रियाभिन्नत्वादर्थमात्रनिष्ठत्वाच्च स भक्तेर्भिन्न एवेति भावः । यद्यपि भक्तेरर्थगतत्वमपि स्वीकृतं तथापि प्रदीपप्रभाया घटादिष्विव विषयतामात्रम्, तदवस्थानन्तु शब्द एवेत्याह—शब्दद्वारेति ॥६॥

**त्रिविधापि पुनर्द्वेधा निरूढा च फलान्विता ।**
**स्तुवन्ति वाग्भिरर्च्चन्ति पाणिभिर्नीललोहितम् ॥७॥**

भक्तेर्भेदान्तरमाह—त्रिविधेति । निरूढा अनादिसिद्धा । ननु तस्याः शक्तितः किं वैलक्षण्यं मतं कोशादिष्वपि निरूढशक्तिनिवेशो दृश्यते इति चेदुच्यते "स्वान्तं हृन्मानसं मनः" [अमरकोषे] इत्यादौ शरीरावयवरूपमुख्यार्थबाधात् "हृत्प्रतिष्ठम्" इति श्रुत्युक्ताधाराधेयभावादिसम्बन्धाच्च वैलक्षण्यं द्रष्टव्यम् । यस्य तु स्वान्तादिशब्दस्य मुख्योऽर्थो न प्रसिद्धस्तत्र तु शक्तिरेवेति दिक् । फलान्विता—आधुनिकी प्रयोजनप्रतिपत्तये स्वीकृतेत्यर्थः । उदाहरणमाह—वाग्भिरिति । वाक्शब्दोऽत्र शब्दोच्चारणहेतुभूतेन्द्रियस्य वाचकः तज्जन्यत्वाच्छब्दे लाक्षणिकः । पाणिभिरिति । पाणिशब्दः पूजादिसाधनभूतेन्द्रियस्य मुख्यतया वाचकः तदधिष्ठिते हस्तरूपे शरीरावयवे लाक्षणिकः । पूर्व्वत्र जहल्लक्षणा शब्दानामिव स्तुत्यन्वयात्, उत्तरत्र च निरूढाऽजहल्लक्षणा इन्द्रियतदधिष्ठात्रोरन्वयात् मुख्यार्थपरित्यागेनाधिकारार्थस्वीकारात् । नीललोहितमिति शिवविशेषणं * वामनोक्तन्यायात् । तत्र नीललोहितशब्दे निरूढा जह-

* "विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ" इति काव्यालङ्कारसूत्रवृत्तौ वामनः ।

चेत्, कश्चिन्यायेन गौण्या वा यथार्थभेदस्यारोपत्वसम्भवादिति दिक्। अत्र सम्बन्धत्रयविचारविशेषस्तु वेदान्तशास्त्रादवगन्तव्यः ॥११॥

**कार्य्यकारणभावादौ भेदौ शुद्धाविमौ स्मृतौ ।**
**सादृश्ये सति गौणौ च शक्यलक्ष्यगुणाश्रयात् ॥१२॥**

कार्य्येति। शुद्धाविति। साक्षात्सम्बन्धहेतुकावित्यर्थः। गौणौ गुणकृतौ अमुख्यौ परम्परासम्बन्धाश्रयत्वात् ॥१२॥

**निरूढा शुद्धसारोपा शिवं शम्भुं भजेदिति ।**
**शिवं भजेदिति परा कार्य्यकारणभावतः ॥१३॥**

निरूढेति। शिवं कल्याणकरं शम्भु विशेषणमेतत्, न तु तन्नामधेयं पुनरुक्त्यापत्तेः, कल्याणकरत्वात् रुद्रः शिव इति प्रसिद्धमेव। शिवमिति अतिप्रसिद्धतया शम्भोरप्रयोगाद्विषयिमात्रनिर्देशः। यदि तु व्युत्पत्तिराश्रीयते तदा शिवशब्दः शुक्लादिशब्दवत् शक्तेरेवोदाहरणम्, अव्युत्पत्तिपक्षे तु लक्षणाया एवेति सिद्धान्तः ॥१३॥

**स्त्रीरत्नं गिरिजा सैषा रत्नं संसारवारिधेः ।**
**निरूढा गौणसारोपान्या च सादृश्ययोगतः ॥१४॥**

स्त्रीरत्नमिति। स्त्री रत्नमिव मणिरिवेत्युपमितसमासः। "रत्नं श्रेष्ठे मणावपि" इति वैजयन्ती। इत्युपमितसमासे रत्नसदृशी स्त्रीति शाब्दबोधाच्छक्तिरेव न लक्षणा। स्त्री एव रत्नं स्त्रीरत्नमिति मयूरव्यंसकादिसमासे तु लक्षणैव। यद्यपि "रत्नं श्रेष्ठे मणावपी"ति कोषात् सप्तमीतत्पुरुषोऽपि प्रतिभाति तथापि समासात् पूर्वं श्रेष्ठवाचकत्वाभावेन स न भवति। तथोक्तमभिधानचिन्तामणौ—

स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ।
सिंहशार्दूलनागाद्यास्तल्लजश्च मतल्लिका ॥

मचर्चिका प्रकाण्डोद्घौ प्रशस्यार्थप्रकाशकाः ॥

इति प्रशंसावचनैश्च [पा० २।१।६६] इति सूत्रस्य मतल्लिकादिपञ्चकपरत्वाच्च उक्त एव समासो न्याय्य इति दिक्। वस्तुतस्तु स्त्रीरत्नमिति व्यस्तमिवोदाहरणं वैयाकरणमते वृत्तौ समुदायशक्तिमाश्रित्य लक्षणानङ्गीकारात्। सैषेति सामान्यनिर्देशः सादृश्यसम्बन्धाद् गौणी ॥१४॥

**मुक्तिः शिवस्य पूजैव हे मुक्ते मा जहीहि माम्।**
**फलिनी शुद्धसारोपान्या च बीजफलत्वतः ॥१५॥**

मुक्तिरिति। मुक्तिकारणमित्यर्थः। लक्षणाफलं तु मुख्यसाधनताप्रतीतिरादरातिशयप्रतीतिश्च। बीजं कारणं फलञ्च कार्य्यं तत्सम्बन्धत्वात् ॥१५॥

**शिवपूजा मम प्राणा हे प्राणा विरताः स्थ मा।**
**फलिनी गौणसारोपा परा च सदृशत्वतः ॥१६॥**

शिवपूजेति। अत्र लक्षणाफलन्तु महिमातिशयप्रतीतिरादरातिशयप्रतीतिश्च। विरता विरामं प्राप्ताः। मा स्थ मा भवत। चेतनं मे जीवितं स्यात्। अन्यथा तु श्वसनं न जीवितमिति भावः॥१६॥

**सम्बन्धान्तरतो भेदाः स्वयमूह्याः परेऽपि च।**
**अक्षो रुद्राय रुद्रो हि गृहाः शम्भोश्च पार्वती ॥१७॥**
**तादर्थ्यादिह ताच्छब्द्यात् तात्स्थ्यात्ताच्छब्द्यमित्यपि।**
**रुद्रस्य सेवका रुद्राः सेव्यसेवकभावतः ॥१८॥**

सम्बन्धान्तरत इति। कार्य्यकारणभावादावित्यत्रादिशब्दात् सामान्यविशेषभावादिसम्बन्धविशेषनिमित्तका भेदाः स्वबुद्ध्या विविच्य विज्ञेया इत्यर्थः। दिङ्मात्रं चोदाह्रियते। अक्ष इति। रुद्राय

रुद्रसेवनाय। हेतुहेतुमद्भावोऽत्र सम्बन्धः। रुद्रसेवनस्य तद्द्वारक-पुरुषजन्यत्वात्। कार्य्यकारणभावादस्य भेदः। इन्द्रार्था स्थूणा इन्द्र इति प्रसिद्धोदाहरणेऽप्येवमेव। गङ्गा इति। अत्राधाराधेय-भावः सम्बन्धः। पूर्वत्र तादर्थ्यात्ताच्छब्द्यम् इह तु तात्स्थ्यात् तत्र स्थितत्वात्। रुद्रस्येति सेवका याजका इत्यर्थः। नारुद्रो रुद्रमर्चयेदिति स्मृतिः॥१७॥१८॥

**आधेयाधारभावेन प्रासादो रुद्र इष्यते।**
**तद्वाच्यवाचकत्वे च भवेल्लक्षितलक्षणा॥१९॥**

आधारेति। तस्य पूज्यत्वोपदेशादिति भावः। पूर्वत्र आधार-वाचित्वक इह तु आधेयवाचित्वक इति भेदः। तद्वाच्यवाचकत्व इति। तस्य द्व्यक्षरादेर्वाच्यो मांसादिशब्दः स वाचको यस्य स तद्वा-चकः आमिषादिस्तस्य भावस्तत्त्वं तेन तथोक्तेन। लक्षितेति। लक्षिते दूरान्नक्षीकृते लक्षणा लक्षितलक्षणेत्यन्वर्थाभिधानेयम्॥१९॥

**गुञ्जद्विरेफैः पुष्पौघैः पूज्यो भक्तैः शिवो यथा।**
**द्व्यक्षरं मांसमित्यादौ निरूढेष्वेव नान्यतः॥२०॥**

एषा निरूढेष्वेव सम्भवतीति स्फुटयितुं पुनरुदाहरति—गुञ्ज-द्विरेफैरिति। द्विरेफशब्दो हि योगरूढ्या भ्रमरशब्दवाची। तस्य द्विरेफशब्दस्य षट्पदे लक्षितलक्षणा॥२०॥

**विरुद्धाव्यतिरेके च लक्षणोक्ता मनीषिभिः।**
**इह साधु कृतं तेन शम्भुर्येन न पूजितः॥२१॥**

विरुद्धेति। व्यतिरेके वैपरीत्ये। साधुकृतं साधुशब्देन तद्विप-रीतं लक्षणा। व्यतिरेकलक्षणामपीमां वदन्ति। फलवती चेयं न निरूढा॥२१॥

**सम्बन्धबुद्धिजनकः सम्बन्धो विविधो मतः ।**
**शब्दप्रमाणगा वृत्तिर्लक्षणा तन्निबन्धना ॥२२॥**

सम्बन्धं लक्षयति—सम्बन्धेति । इमौ सम्बन्धाविति बुद्धेर्हेतुः सम्बन्ध इति लक्षणं शब्दरूपं यत्प्रमाणं प्रमाकरणम् । करणे च व्यापारावश्यम्भावात् तद्गता वृत्तिर्लक्षणा सम्बन्धमूलैव न तु सम्बन्ध एव लक्षणेति भावः ॥२२॥

**स नित्यः समवायाख्यः सहजोऽवयवादिषु ।**
**गुणः क्रिया च सामान्यं विशेषोऽवयवादयः ॥२३॥**

स इति । अवयवादिष्वयुतसिद्धेषु । तल्लक्षणं चोक्तं तर्कशास्त्रे—तावेवायुतसिद्धौ द्वौ विज्ञातव्यौ ययोर्द्वयोरनश्यदेकमपराश्रितमेवावतिष्ठते इति । अन्यच्च अवयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्यः सम्बन्धः स समवाय इति । गुण इति । अवयवादयः पञ्च तद्वत्सु समवायसम्बन्धेन लाक्षणिका इत्यर्थः ॥२३॥

**संयोगो युक्तधीहेतुर्द्रव्ययोः क्रियया कृतः ।**
**विशिष्टबुद्धिजनकः स्वस्वामित्वादिकोऽपरः ॥२४॥**

संयोग इति । इमौ संयुक्ताविति बुद्धेर्हेतुर्गुणः स द्रव्ययोरेव नान्येषाम् । क्रियया कृतो न तु स्वाभाविकः । विशिष्ट इति । अयमनेन विशिष्ट इति बुद्धिजनकः । अपरोऽन्यः ॥२४॥

**व्यतिरेकोऽपि सम्बन्धो विपरीतमतिप्रदः ।**
**सादृश्यमपि सम्बन्धस्तथा तद्वाच्यवाच्यता ॥२५॥**

व्यतिरेकेति । असौ विरुद्धयोरेव सादृश्यमिति अयं तुल्ययोरेव । तद्वाच्येति तस्य प्रकृतस्य वाच्यः शब्दविशेषस्तस्य वाच्यताभिधेयता । अयं पूर्वोक्तप्रकारान्नातिरिच्यते । समासमासभेदेऽप्यर्थभेदाभावात् ॥२५॥

**एतेषां लक्षणीयोऽर्थः सम्भवस्तर्क्यतां स्वयम् ।**
**मुख्यस्यार्थस्य यद्धेतोर्लक्षणां शब्द आश्रयेत् ॥२६॥**

एतेषामिति । उक्तसम्बन्धानां सम्भवः स्वयं तर्क्यताम् औचित्येन विभाव्यतामित्यर्थः । यद्धेतोर्यस्मात् सम्बन्धाद्धेतोः ॥२६॥

**सारोपायां गुणो लक्ष्यो विषयिणो न तच्छ्रुतेः ।**
**एवं साध्यवसानायां गुणो लक्ष्यो गुणान्वितः ॥२७॥**
**सारोपायामभेदेन गुणा लक्ष्या द्वयोरपि ।**
**अन्यस्यां गुणो भेदेन गुणा एवाभिदाजुषः ॥२८॥**

सारोपायां साध्यवसानायाञ्च विशेषमाह—सारोपायामिति । मुखं चन्द्र इत्यादौ गुणा आह्लादकत्वादयो न तु विषयिणः ( शीतलकिरण-मृगाङ्कत्वादयः ) तद्वाचकपदश्रवणात् । साध्यवसानायाञ्च चन्द्रोऽय-मित्यादौ तु गुणैः सहितो विषयो लक्ष्यः तद्वाचकपदस्याश्रवणात् । मुखं चन्द्र इत्यादौ आह्लादकत्वादयो अभेदेन लक्ष्याः अभेदस्य विवक्षा-धीनत्वात् चन्द्रोऽयमित्यादौ तु विषयस्यापि गुणैः सहितस्याभेदेन लक्षणीयत्वं बोध्यम्, अन्यथा विरम्य लक्षणाया अप्रवृत्तेरिति भावः ॥२७॥२८॥

**रूपकादिषु सारोपा यत्र शब्दावुभावपि ।**
**रूपकातिशयोक्त्यादौ परारोप्यपदश्रुतेः ॥२९॥**

अनयोर्विषयविभागमाह—रूपकेति । आदिशब्दान्निदर्शनादयो गृह्यन्ते । रूपकेति । आदिशब्दादप्रस्तुतप्रशंसादयो गृह्यन्ते । आरोप्य-पदस्य विषयिवाचकमात्रस्य श्रवणमित्यपरा साध्यवसाना ॥२९॥

**सादृश्यश्लथताभावः सारोपायाः फलं मतम् ।**
**सादृश्यातिशयोऽन्यस्या विषयस्तुतिहेतवे ॥३०॥**

साहश्येति। फलवत्याः सारोपायाः साहश्यसम्बन्धतया अभावः फलं व्यङ्ग्यार्थरूपं प्रयोजनम्। अन्यस्याः स्तुतिविषयस्तुतिहेतुत्वे विषयगुणप्रशंसार्थमित्यर्थः। विषयगुणानामपकृष्टत्वं विषयिगुणानां चोत्कृष्टत्वमित्यालङ्कारिकसिद्धान्तः; अभेदारोपे चापकृष्टानामप्युत्कृष्टत्वमर्थसिद्धमिति। तत्र बीजं तु लक्षणाव्यङ्ग्यः साहश्यातिशय इति भावः। साहश्यं हि अदृढमुपमादिषु दृढञ्च रूपकादिषु दृढतरमतिशयोक्त्यादिषु। यत्र च विषयस्य अल्पा प्रशंसा तत्र दृढम्। यत्राधिका सा तत्र दृढतरमिति विवेकः ॥३०॥

**ताद्रूप्याभेदयोराहुः फलत्वमुभयोः क्रमात्।**
**तत्तु शब्दान्तराल्लाभाद्विरोधाच्च न मन्यताम् ॥३१॥**

ताद्रूप्येति। अत्र केचित् ताद्रूप्यप्रतीतिः सारोपाया अभेदप्रतीतिश्च साध्यवसानायाः फलमिति विभिन्नमाहुस्तत्तु न मन्तव्यम्। "साध्वीयमपरा लक्ष्मीः" [कुवलयानन्द २०] इत्यादावपरादिशब्दस्य ताद्रूप्यप्रत्यायकत्वात्। "अयं हि धूर्जटिः साक्षात्" [कुव ८] इत्यादौ साक्षाच्छब्दादेरभेदप्रत्यायकत्वाच्चेति भावः। किञ्चाभेदरूपके ताद्रूप्यरूपके च सारोपायां फलद्वयस्यापि सम्भवात् द्विविधातिशयोक्तौ च साध्यवसानायां तथैव सम्भवाच्च प्रत्येकं फलत्वकल्पनायोगादिति भावः ॥३१॥

**सर्वनामविशिष्टस्य निर्देशे प्रथमा मता।**
**अविशिष्टस्य निर्देशे परेति कवयो विदुः ॥३२॥**

इति श्रीपदवाक्यप्रमाणपारावारपारीणधुरीणरामजिभट्टात्मजाशाधरभट्टविरचितकोविदानन्दे भक्तिनिर्णये द्वितीयपरिच्छेदः समाप्तः ॥

सर्वनामेति। इदं चन्द्र इत्यादौ मुखत्वादिविशेषविशिष्टवस्तु-

परेण इदंशब्दादिना निर्देशे सारोपा, अयं चन्द्र इत्यादौ मुखत्वादि-विशेषपरिहारेण सामान्यरूपेणारोप्यमाणचन्द्राद्यभेदेन निर्देशे साध्य-वसाना इति भेदः। अत्र जहत्यादिविचारस्तु विस्तरभयान्न कृतः ॥३२॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणधुरीणरामजिभट्टात्मजाशा-
धरभट्टविरचितायां कादम्बिनीसमाख्यायां स्वकृतकोविदा-
नन्दव्याख्यायां लक्षणापरिच्छेदो द्वितीयः ॥

---

## सप्तपातालोपवर्णनम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—श्रीवसन्तकुमार-रायविद्यारत्नः ]

अमराणाञ्च परमां श्रियश्चातिशयन्ति च।
यत्र नैव भयं क्वापि कालाङ्गैर्दिनरात्रिभिः॥
यत्राहिप्रवराणाञ्च शिरस्थैर्मणिरश्मिभिः।
नित्यं तमः प्रबाध्येत सदा प्रस्फुटकान्तिभिः॥
न वा एतेषु वसतां दिव्यौषधिरसायनैः।
रसान्नपानस्नानाद्यैर्नाधयो व्याधयो न च॥
वलीपलितजीर्णत्वं वैवर्ण्यं खेदगन्धता।
अनुत्साहवयोऽवस्था न बाधन्ते कदाचन॥
कल्याणानां सदा तेषां न च मृत्युभयं कुतः।
भगवत्तेजसोऽन्यत्र चक्राच्चैव सुदर्शनात्॥
यस्मिन् प्रविष्टे दैतेयवधूनां गर्भराशयः।
प्रायो भयात् पतन्त्येव स्रवन्ति ब्रह्मपुत्रक॥

इति श्रीदेवीभागवते अष्टमस्कन्धे अष्टादशोऽध्यायः।

प्रथमे विवरे विप्र अतलाख्ये मनोरमे।
मयपुत्रो बलो नाम वर्त्ततेऽखर्व्वगर्व्वकृत्॥

षण्णवत्यो येन सृष्टा मायाः सर्व्वार्थसाधिकाः ।
मायाविनो याश्च सद्यो धारयन्ति च काश्चन ॥
जृम्भमाणस्य यस्यैव बलस्य बलशालिनः
स्त्रीगणा उपपद्यन्ते त्रयो लोकविमोहना: ॥
पुंश्चल्यश्चैव स्वैरिण्यः कामिन्यश्चेति विश्रुताः ।
सा वै विलायनं प्रेष्ठं प्रविष्टं पुरुषं रहः ॥
रसेन हाटकाख्येन साधयित्वा प्रयत्नतः ।
स्वविलासावलोकानुरागस्मितविगूहनैः ॥
संलापविभ्रमाद्यैश्च रमयन्त्यपि ताः स्त्रियः ।
यस्मिन्नुपयुक्ते जनो मनुते बहुधा स्वयम् ॥
ईश्वरोऽहमहं सिद्धो नागायुतबलो महान् ।
आत्मानं मन्यमानः सन् मदान्ध इव कत्थते ॥
द्वितीयविवरस्यात्र वितलस्य निबोधत ।
भूतलाधस्तले चैव वितले भगवान् भवः ॥
हाटकेश्वरनामायं स्वपार्षदगणैर्वृतः ॥
भवयोर्वीर्य्यसम्भूता हाटकी सरिदुत्तमा ।
समिद्धो मरुता वह्निरोजसा पिबतीव हि ॥
तन्निर्धूतं हाटकाख्यं सुवर्णं दैत्यवल्लभम् ।
दैत्याङ्गना भूषणार्हं सदा सन्धारयन्ति हि ॥
तद्विलाधस्तलात् प्रोक्तं सुतलाख्यं विलेश्वरम् ।
पुण्यश्लोको बलिर्नाम आस्ते वैरोचनिर्मुने ॥
एवं दैत्यपतिः सोऽयं बलिः परमपूजितः ।
सुतले वर्त्तते यस्य द्वारपालो हरिः स्वयम् ॥
इति श्रीदेवीभागवते अष्टमस्कन्धे एकोनविंशोऽध्यायः ।
ततोऽधस्ताद्विवरकं तलातलमुदीरितम् ।
दानवेन्द्रो मयो नाम त्रिपुराधिपतिर्महान् ॥

आचार्य्यो मायिनां सोऽयं नानामायाविशारदः ।
पूज्यते राक्षसैर्घोरैः सर्व्वकार्य्यसमृद्धये ॥
ततोऽधस्तात् सुविख्यातं महातलमिति स्फुटम् ।
सर्पाणां काद्रवेयाणां गणः क्रोधवशो महान् ॥
अनेकशिरसां विप्र प्रधानान् कीर्त्तयामि ते ।
कुहकस्तक्षकश्चैव सुषेणः कालियस्तथा ॥
महाभोगा महासत्त्वाः क्रूराः क्रूरस्वजातयः ।
पतत्रिराजाधिपतेरुद्विग्नाः सर्व्व एव ते ॥
सकलत्रापत्यसुहृत् कुटुम्बस्य च सङ्गताः ।
प्रमत्ता विहरन्त्येव नानाक्रीडाविशारदाः ॥
ततोऽधस्ताच्च विवरे रसातलसमाह्वये ।
दैतेया निवसन्त्येव पणयो दानवाश्च ये ॥

*　*　*　*

ततोऽप्यधस्तात् पाताले नागलोकाधिपालकाः ॥

*　*　*　*

महामर्षा महाभोगा निवसन्ति विषोल्वणाः ॥
पञ्चमस्तकवन्तश्च फणासप्तकभूषिताः ।
केचिद्दशफणाः केचित् सप्तशीर्षास्तथापरे ॥
सहस्रशिरसः केऽपि केचित्तु मणिधारकाः ।
पातालरन्ध्रतिमिरनिकरं स्वमरीचिभिः ॥
विधमन्ति च देवर्षे सदा सञ्जातमन्यवः ।
अस्य मूलप्रदेशे हि त्रिंशत्साहस्रकेऽन्तरे ॥
योजनैः परिसंख्याते तामसी भगवत्कला ।
अनन्ताख्या समास्ते हि सर्व्वदेवप्रपूजिता ॥

( क्रमशः )

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| September, 1931. | १८५३ शकीये भाद्रे १४वर्षस्य ५म-संख्या | Vol. XIV, No. 5. |


## कविप्रवरः पाणिनिः

प्रियपाठकमहाभागाः, अद्य समुपह्रियन्ते भवद्भ्यः कतिचन श्लोकरत्नानि येषां निर्माता शाब्दिकप्रवरः पाणिनिरिति जोघुष्यते शाब्दिकैरालङ्कारिकैश्च। श्लोका इमे प्रायेण सुभाषितग्रन्थेषु समुपलभ्यन्ते, केचन व्याकरणाभिधानानां टीकास्वपि सन्दृश्यन्ते। तत्र पाणिनिना महर्षिणा जाम्बवतीविजयः पातालविजयश्च महाकाव्यद्वितयं व्यरचीति सुप्रचारैवेयं किंवदन्ती भारते वर्षे। तथाहि राजशेखरसूक्तिः—

स्वस्ति पाणिनये तस्मै यस्य रुद्रप्रसादतः।
आदौ व्याकरणं काव्यमनु जाम्बवतीजयम् ॥

क्षेमेन्द्रेणापि सुवृत्ततिलके पाणिनेरुपजातिच्छन्दोग्रथने सविशेषं नैपुण्यं प्रतिपादितम्। तथा च सुवृत्ततिलकस्य तृतीये विन्यासे त्रिंशत्तमः श्लोकः—

स्पृहणीयत्वचरितं (?) पाणिनेरुपजातिभिः ।
चमत्कारैकसाराभिरुद्यानस्येव जातिभिः ॥

तथा च सदुक्तिकर्णामृते—

सुबन्धौ भक्तिर्नः क इह रघुकारे न रमते
धृतिर्दाक्षीपुत्रे हरति हरिचन्द्रोऽपि हृदयम् ।
विशुद्धोक्तिः शूरः प्रकृतिमधुरा भारविगिर-
स्तथाप्यन्तर्मोदं कमपि भवभूतिर्वितनुते ॥

रुद्रटविरचितकाव्यालङ्कारटीकायां नमिसाधुरपि "अपशब्दनिरासश्च यद्यपि व्युत्पत्तिद्वारेणैव कृतस्तथापि महाकवीनामप्यपशब्दपातदर्शनात् तन्निरासादरख्यापनाय पुनरभियोगः । तथाहि पाणिनेः पातालविजये महाकाव्ये —'सन्ध्यावधूं गृह्य करेण' इत्यत्र गृह्येति क्त्वो ल्यबादेशः । तथा तस्यैव कवेः—

गतेऽर्धरात्रे परिमन्दमन्दं गर्जन्ति यत् प्रावृषि कालमेघाः ।
अपश्यती वत्समिवेन्दुबिम्बं तच्छर्वरी गौरिव हुङ्करोति ॥

इत्यत्र पश्यतीति नुमन्तोऽनकार्यं पदम्" इति ।

आनन्दवर्धनाचार्येणापि ध्वन्यालोकस्य प्रथमोद्योते नामानिर्देशपूर्वकं पाणिनीयः कश्चन श्लोकः समुद्धृतः । तद् यथा—"समासोक्तौ तावत्—

उपोढरागेण विलोलतारकं
तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया
पुरोऽपि रागाद् गलितं न लक्षितम् ॥

इत्यादौ व्यङ्ग्येनानुगतं वाच्यमेव प्राधान्येन प्रतीयते समारोपितनायिकानायकव्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वात् इति ।" सुभाषितावल्यां शार्ङ्गधरपद्धतौ सदुक्तिकर्णामृते च श्लोकोऽयं पाणिनीयत्वेन निर्दिष्टः ।

श्रीपतिदत्तविरचिते कातन्त्रपरिशिष्टेऽपि दृश्यते—जावटीतीति जाम्बवतीविजयकाव्ये, जाज्वलीतीति नीतिसंग्रहे, शंशमाश्चक्रुरिति भट्टिकाव्ये च पठ्यते। भागवृत्तिकारस्तु बोभवीत्येव न छान्दसमिति मन्यते इति।

इदानीं पाणिनीयत्वेन प्रसिद्धाः श्लोकाः सुभाषितादिग्रन्थेभ्यो निष्कृष्य विलिख्यन्ते।

(१) असौ गिरेः शीतलकन्दरस्थः
पारावतो मन्मथचाटुदक्षः।
घर्मालसाङ्गीं मधुराणि कूजन्
संवीजते पक्षपुटेन कान्ताम्॥

(२) उद्बुद्धेभ्यः सुदूरं घनजनिततमःपूरितेषु द्रुमेषु
प्रोद्ग्रीवं पश्य पादद्वयनमितभुवः श्रेणयः फेरवाणाम्।
उल्कालोकैः स्फुरद्भिर्निजवदनदरीसर्पिभिर्वीक्षितेभ्य-
स्त्रोतत्सान्द्रं वसाम्भः क्वथितशववपुर्मण्डलेभ्यः पिबन्ति॥

(३) चञ्चत्पक्षाभिघातं ज्वलितहुतवहप्रौढधाम्नश्चितायाः
क्रोडादाक्रष्टमूर्त्तेरहमहमिकया चण्डचञ्चुग्रहेण।
सद्यस्तप्तं शवस्य ज्वलदिव पिशितं भूरि जग्ध्वार्धदग्धं
पश्यान्तः प्लुष्यमाणः प्रविशति सलिलं सत्वरं गृध्रसङ्घः॥

(४) कह्लारस्पर्शगर्भैः शिशिरपरिचयात् कान्तिमद्भिः कराग्रै-
श्चन्द्रेणालिङ्गितायास्तिमिरनिवसने स्रंसमाने रजन्याः।
अन्योन्यालोकिनीभिः परिचयजनितप्रेमनिस्यन्दिनीभि-
र्दूरारूढे प्रमोदे हसितमिव परिस्पष्टमाशासखीभिः॥

(५) पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयो-
र्नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे।
लीयन्ते कबरीभरे निजकुलव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि॥

(६) पाणौ शोणतले तनूदरि दरक्षामा कपोलस्थली
विन्यस्ताञ्जनदिग्धलोचनजलैः किं म्लानिमानीयते ।
मुग्धे चुम्बतु नाम चञ्चलतया भृङ्गः क्वचित् कन्दली-
मुन्मीलन्नवमालतीपरिमलः किं तेन विस्मर्य्यते ॥

(७) मुखानि चारूणि घनाः पयोधरा
नितम्बपृथ्व्यो जघनोत्तमश्रियः ।
तनूनि मध्यानि च यस्य सोऽभ्यगात्
कथं नृपाणां द्रविडीजनो ह्रदः ॥

(८) गतेऽर्धरात्रे परिमन्दमन्दं
गर्जन्ति यत् प्रावृषि कालमेघाः ।
अपश्यती वत्समिवेन्दुबिम्बं
तच्छर्वरी गौरिव हुङ्करोति ॥

(९) प्रकाश्य लोकान् भगवान् स्वतेजसा
प्रभादरिद्रः सवितापि जायते ।
अहो चला श्रीर्वलमानदामहो
स्पृशन्ति सर्वं हि दशाविपर्य्यये ॥

(१०) शुद्धस्वभावान्यपि संहतानि
निनाय भेदं कुमुदानि चन्द्रः ।
अवाप्य वृद्धिं मलिनान्तरात्मा
जडो भवेत् कस्य गुणाय वक्रः ॥

(११) क्षपाः क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां
प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम् ।
क्व संप्रत्युष्णांशुर्गत इति समालोकनपरा-
स्तडिद्दीपालोका दिशि दिशि चरन्तीह जलदाः ॥

(१२) ऐन्द्रं धनुः पाण्डुपयोधरेण
शरद्दधानार्द्रनखक्षताभम् ।

प्रसादयन्ती सकलङ्कमिन्दुं
तापं रवेरभ्यधिकं चकार ॥

(१३) विलोक्य सङ्गमे रागं पश्चिमाया विवस्वतः ।
कृतं कृष्णं मुखं प्राच्या न हि नार्यो विनेर्ष्यया ॥

(१४) अथासमसादास्तमनिन्द्यतेजा
जनस्य दूरोज्झितमृत्युभीतिः ।
उत्पत्तिमद्वस्तु विनाश्यवश्यं
यथाहमित्येवमिवोपदेष्टुम् ॥

(१५) सरोरुहाक्षीणि निमीलयन्त्या
रवौ गते साधु कृतं नलिन्या ।
अक्ष्णां हि दृष्टापि जगत् समग्रं
फलं प्रियालोकनमात्रमेव ॥

(१६) निरीक्ष्य विद्युन्नयनैः पयोदो
मुखं निशायामभिसारिकायाः ।
धारानिपातैः सह किं नु वान्त-
श्चन्द्रोऽयमित्यार्त्ततरं ररास ॥

(१७) उपोढरागेण विलोलतारकं
तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया
पुरोऽपि रागाद् गलितं न लक्षितम् ॥

(१८) तन्वङ्गीनां स्तनौ दृष्ट्वा शिरः कम्पयते युवा ।
तयोरन्तरसंलग्नां दृष्टिमुत्पाटयन्निव ॥

---

"तथाच जाम्बवतीविजयकाव्ये पाणिनिनोक्तम्-

(१९) 'अस्ति प्रतीच्यां दिशि सागरस्य
वेलोर्मिगूढे हिमशैलकुक्षौ ।

पुरातनी विश्रुतपुण्यगन्धा
सत्तापुरी द्वारवती च नाम्ना ॥

इति द्वितीयसर्गे ।

(२०) अनेन यत्नानुचितं धरायाः
पुरातनं साजलतं अतीचितम् ।
ददर्श सेतुं सहसो जनन्या
विशीर्णसौधस्य इवोदयश्रियः ॥

इति चतुर्थे सर्गे ।

(२१) त्वया सहार्जितं यच्च यच्च सख्यं पुरातनम् ।
चिराय चेतसि पुरस्तरणीकृतमद्य मे ॥

इत्यष्टादशे । ( दुर्घटवृत्तिः ४।३।२३ )

(२२) अहो अयं नरो भद्रं यद्दृष्ट्वा सुमध्यमा ।
उल्लास्य नयने दीर्घे साकाङ्क्षमवलोकितः ॥

इति जाम्बवतीविजयकाव्ये जाम्बवतीदर्शनोत्तरं कृष्णस्योक्तिः ।"
( भाषावृत्तिः १।१।१५ ) *

(२३) "हरिणा सह सख्यं ते बोभूयिति यदब्रवीः ।
न जावटीति शुक्रो तत् सिंहद्विरदयोरिव ॥

इति पाणिनेर्जाम्बवतीविजयकाव्यम् ।" ( भाषावृत्तिः २।४।७४ )

(२४) "करीन्द्रदर्पच्छिदुरं मृगेन्द्रम्" इति जाम्बवतीविजयकाव्ये पाणिनिः । ( भाषावृत्तिः ३।२।१६२ )

(२५) स पार्षदैरम्बरमापुपूरे ।

(२६) पयः पृषन्तिभिः स्पृष्टा वान्ति वाताः शनैः शनैः ।

---

* सूक्तिमुक्तावल्यां ६५ तमे पत्रे पद्यमिदं राजशेखरस्येत्युक्तम्, तस्मिन्नेव ग्रन्थे पत्रान्तरे चोयाकस्येति निर्दिष्टम् । सुभाषितावल्यां पुनः "कस्यापि" इति विलिखितम् ।

(२७) स सृक्कणीप्रान्तमसृक्प्रदिग्धं
प्रलेलिहानो हरिणारिरुच्चैः ॥

(२८) सन्ध्यावधूं गृह्य करेण गाढम् ॥

अत्र केचिदाचक्षीरन्, विदितमेवैतत् प्रायेण सर्वेषां यत् तेजस्तिमिरयोरिव कवित्वशाब्दिकत्वयोः सामानाधिकरण्यं सर्वथा शशविषाणायमानमेव वर्त्तते। एकतस्तावच्छब्दशास्त्रानुशीलनकर्कशशेमुषीकाः काष्ठकुड्याश्मसन्निभा रसास्वादनशक्तिविरहिता वैयाकरणा दुःश्रवतमानि रसानुभवप्रतिबन्धकानि पदजातानि बाहुल्येन प्रयुञ्जते, अपरतश्च भावगहने स्वच्छन्दं विचरन्तोऽभिनवमदलेखाश्यामगण्डस्थला: कविमत्तमतङ्गजा व्याकरणबिसतन्तुं लीलयैव चरणतलेनावमर्दयन्ति। शाब्दिकशिरोमणेर्भट्टोजिदीक्षितमहोदयस्य मङ्गलाचरणश्लोक:—

विश्वेशं सच्चिदानन्दं वन्देऽहं योऽखिलं जगत्।
चरीकर्त्ति बरीभर्त्ति सञ्जरीहर्त्ति लीलया॥

कविकुलचूडामणेः कालिदासस्य च अभ्रंशत-निविशती-गुरुलाघवादयः प्रयोगा अत्र साक्षिभूयमावहन्ति। अत एव सहृदयशिरोमणिना मम्मटेन वैयाकरणे वक्तरि दुःश्रवत्वस्य न केवलं दोषाभावत्वं प्रत्युत रसानुगुणतया गुणत्वमेव प्रतिपादितम्। अत एव च वैयाकरणधौरेयैरपि "निरङ्कुशाः कवयः" "न शास्त्रमनुवर्त्तन्ते स्वच्छन्दा ऋषयः किल" "स्थितेर्गतिश्चिन्तनीया" "महाकविप्रयोगबाहुल्यात् सोढव्यम्" इत्यादीनि वचनानि पुनः पुनरुपनिबध्यन्ते। अत एवोक्तमभियुक्तैः—

नैव व्याकरणज्ञमेति पितरं न भ्रातरं तार्किकं
दूरात् सङ्कुचितेव गच्छति पुनश्चाण्डालवच्छान्दसात्।
मीमांसानिपुणं नपुंसकमिति ज्ञात्वा निरस्तादरा
काव्यालङ्करणज्ञमेत्य कविता कान्ता वृणीते स्वयम्॥

कविकण्ठाभरणे क्षेमेन्द्रेणाप्युक्तम्—

यस्तु प्रकृत्याश्मसमान एव
कष्टेन वा व्याकरणेन नष्टः ।
तर्केण दग्धोऽनलधूमिना वा-
प्यविद्धकर्णः सुकविप्रबन्धैः ॥२२॥

न तस्य वक्तृत्वसमुद्भवः स्या-
च्छिक्षाविशेषैरपि सुप्रयुक्तैः ।
न गर्दभो गायति शिक्षितोऽपि
सन्दर्शितः पश्यति नार्कमन्धः ॥२३॥

कुर्वीत साहित्यविदः सकाशे
श्रुतार्जनं काव्यसमुद्भवाय ।
न तार्किकं केवलशाब्दिकं वा
कुर्याद्गुरुं सूक्तिविकासविघ्नम् ॥२४॥

अत एव कविप्रवरः पाणिनिरिति विप्रतिषिद्धमेतत् । येन तावत् श्वा युवा मघवा चैकसूत्रे संग्रथिताः, येन तावदात्मत्वमधिगतेन मनः-शब्दस्य नपुंसकत्वं विदधानेन निखिलकामिजनोऽतिसंहितः, अत एव च यमधिकृत्य कवयः प्राहुः—

काचं मणिं काञ्चनमेकसूत्रे
ग्रथ्नाति बाला न हि तद् विचित्रम् ।
विशेषवित् पाणिनिरेकसूत्रे
श्वानं युवानं मघवानमाह ॥

नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः ।
तत्तु तत्रैव रमते हताः पाणिनिना वयम् ॥ इति च ।

येन तावदरसिकजनमूर्धन्येन सहृदयश्लाघनीयम् "अथ शब्दानुशासनम्" इति वाक्यं प्रयुज्यापि तद्गतमर्थगौरवमनालोच्यैव तत ऊर्द्ध्वम् अ इ उण् इत्यादीन्यर्थलेशविधुराण्यक्षरजालान्युत्कीर्णानि, येन घुणाक्षरन्यायेनापवर्गे तृतीयेति समुच्छलितरसं काव्यसारं समुपनिब-

ध्यापि तदर्थमनवबुध्यमानेन स्वाशयानुरूपो गद्यमय एवार्थः कल्पितः*, येन गङ्गाया यमुनायाश्च नदीत्वं निराकृत्य स्थल्या एव तथात्वं सम्पादितं ‡ तस्य चेच्छास्त्रानुशीलनजडस्य रसलेशविधुरस्य शब्दाडम्बरमात्रनिष्ठस्य लब्धैकचक्षुषोऽर्धमात्रालाघवेन पुत्त्रोत्सवं समाकलयतो मुनेः कवि-प्रवरत्वं तर्हि "पारिभद्रतरोर्मूले किं न स्यात् फाणितोदयः," गगनमध्य-मलङ्कुर्वति चण्डरश्मौ किं न प्रादुर्भवेच्छैत्यातिशयः, रसिकजनमानस-सन्तर्पणे शारदसुधाकरे किं न पदं निदध्यादन्धतमसम्? उक्तञ्च—

यः स्यात् केवललक्ष्यलक्षणरतो नो तर्कसम्पर्कभृ-
न्नालङ्कारविचारचारुधिषणः काव्यज्ञशिक्षोज्झितः।
तस्माच्चेद्रसशालि काव्यमुदयेदेकान्ततः सुन्दरं
प्रासादो धवलस्तदा क्षितिपतेः काकस्य काष्ण्यीद्भवेत्॥

अवितथं किलोक्तं कृशानुना विश्वगुणादर्शे—

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्-
वसुमस्तानचि च ष्टुना ष्टुरत इञ् शप्श्नोऽव्ययोऽल्यादि टि।
लोपो व्योर्वलि वृद्धिरेचि यचि भं दाधाघ्वदाप्नाज्झला-
वित्येते दिवसान्नयन्ति कतिच्छब्दान् पठन्तः कटून्॥
झोऽन्तः शप्श्नोऽटि शेषोघ्यसखि ससजुषोरुर्विरामोऽवसानं
छे चेति व्यर्थवाचः सदसि यदि सतां शाब्दिकाश्चेद्बुधाः स्युः।
किं तैरेवापराद्धं नट-विट-गणिकानृत्यहस्तप्रचारै-
स्तोधी तोधीतधीतित्तकिटतकिटधिक् ताहधिक् तत्तकारैः॥

---

गुर्वन्तिके क्रिया पूर्वं संज्ञयार्थावबोधनम्।
करोति पत्युर्युवतिरथ शब्दानुशासनम्॥
उभयो प्रकृतिः कामे सज्जेदिति मुनेर्मतम्।
*अपवर्गे तृतीयेति भणतः पाणिनेरपि॥ (नै १७।७०)

‡ पाणिनेर्न नदी गङ्गा यमुना वा नदी स्थली।

किञ्च—

सूत्रैः पाणिनिकीर्त्तितैर्बहुतरैर्निष्पाद्य शब्दावलिं
वैकुण्ठस्तवमक्षमा रचयितुं वन्ध्यश्रमाः शाब्दिकाः ।
पक्वान्नं महता श्रमेण विविधापूपाद्यसूपान्वितं
मन्दाग्नीननुरुन्धते मितबलानाघ्रातुमप्यक्षमान् ॥

अत एवोपरिनिर्दिष्टानां श्लोकानाम् अष्टाध्यायीनिर्मातृकर्त्तृत्वं नितरामसम्भवमेवेति । ( क्रमशः )

---

## विद्याप्रस्थानम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—कालीघट्टवास्तव्यः श्रीगुरुपदहालदारः ]

दृष्टिभेदात् पुनः सम्प्रज्ञातः समाधिस्त्रिविधो ग्राह्यनिष्ठो ग्रहणनिष्ठो ग्रहीतृनिष्ठश्चेति । तत्र नानाविषयेभ्य इन्द्रियाणि प्रत्याहृत्य मनो यदा पूर्व्वापरानुसन्धानतः शब्दार्थोल्लेखतश्च स्थूल आलम्बनविशेषे प्रवर्त्तते तदा स सवितर्कः, यदा तु पूर्व्वापरानुसन्धानेन शब्दार्थोल्लेखमन्तरेण तत्रैव मनः प्रवर्त्तते तदा स निर्व्वितर्कः । एतावुभौ पूर्व्वं वितर्कशब्देनोक्तौ । सिद्धे च निर्व्वितर्के सति मनो यदा शब्दार्थोल्लेखपूर्व्वकं तद्वर्ज्जं च सूक्ष्मविषये प्रवर्त्तते तदा तावुभौ समाधी सविचारनिर्व्विचाराख्यौ भवतः । एतावुभौ पूर्व्वं विचारशब्देनोक्तौ निर्व्विचारस्य वैशारद्ये सति क्षीणक्लेशस्य चित्तस्य प्रज्ञालोको जायते येनैव परं वैराग्यं योगिनामभिमुखीभवति । तदुक्तम्—

प्रज्ञाप्रासादमारुह्य अशोच्यः शोचतो जनान् ।
भूमिष्ठानिव शैलस्थः सर्व्वान् प्राज्ञोऽनुपश्यति ॥ इति ।

अतः सवितर्कनिर्व्वितर्कयोरालम्बनं स्थूलं सविचारनिर्व्विचारयोस्तु

सूक्ष्मम्। एतत्स्थूलसूक्ष्मरूपे कोटिद्वये जितचित्तस्य समाधिर्ग्राह्यनिष्ठ उच्यते। यदा च मनसो मूर्त्याकारतां विहाय सत्त्वोद्रेकात् कर्म्मेन्द्रियज्ञानेन्द्रियसहकारि तन्मन इन्द्रियज्ञानविकल्पसहितत्वेन भावनायां प्रवर्त्तते तदा सोऽयं समाधिः सानन्दः सविकल्पः, इन्द्रियज्ञानविकल्परहितत्वेन तु सानन्दो निर्व्विकल्प एव। एतावुभौ सविकल्पनिर्व्विकल्पभेदेन पूर्व्वं समासत आनन्दानुगत इत्युक्तौ। एष एव समाधिर्ग्रहणनिष्ठ उच्यते।

आनन्दानुगतस्यापि तस्य वैशारद्ये सति भावयितुः समाधिर्विकल्पसन्धानेन तद्वर्ज्जं च ग्रहीतृनिष्ठो भवति। तत्र 'यच्छेद्वाङ्मनसी प्राज्ञस्तद् यच्छेज्ज्ञान आत्मनी'त्येवंजातीयकश्रुतेर्यदा पिण्डीकृतमनोव्यापार इदमहमस्मीति वृत्तिं ज्ञातृत्वोपाधौ विशेषाहंकारे यच्छति तदा समाधिः सास्मितः सविकल्पः, यदा तु ज्ञानं नियच्छेन्महतीत्येवमादेस्तादृशो मनोव्यापारो विशिष्टविषयवेदनमन्तरेण ज्ञानमस्मीत्येव ज्ञातृत्वोपाधौ सामान्याहंकाराख्ये सर्व्वानुस्यूते महत्तत्त्वे सम्प्रतिपन्नो भवति तदा स सस्मितो निर्व्विकल्प एव। एतावुभौ सविकल्पनिर्व्विकल्पभेदेन ग्रहीतृनिष्ठौ पूर्व्वं सास्मितसमाधिरित्युक्तौ।

अतः सानन्दसास्मितयोर्भेद आलम्बनाभिमुख्य-तद्वैमुख्यमात्रकृतः, यथैकः पूर्व्वाभिमुखस्ततः पश्चिमाभिमुखस्तद्वत्। एते सर्वे समाधयः सम्प्रज्ञाता अपरवैराग्ययोगतः सबीजाः, निर्बीजास्तु परवैराग्ययोगतः समाधिरसम्प्रज्ञातो यस्य लक्षणमग्रे वक्ष्यते। अभ्यासमन्तरेण च तेषां कोऽपि न सिध्यतीति तत्त्वम्।

भोगेष्वलंबुद्धिरपरवैराग्यम्। तच्च चतुर्विधं यतमानादिवैराग्यत्रयं वशीकारश्चेति। तत्र यतमानत्वं नाम नित्यानित्यवस्तुविवेकात् प्रजायते। चित्तगतदोषाणां मध्ये विवेकेनैतावन्तो जिता एतावन्तो जेतव्या इति विवेचनं व्यतिरेकः। दृष्टानुश्रविकविषयेषु दुःखमिति विचार्य्य मनसि रागद्वेषाद्यपसारणमेकेन्द्रियत्वम्। एतत्त्रयमेव न

निरोधहेतुः सामान्यत्वात्, किन्तु तदभ्यासिनः खलु प्रथमकल्पिकाः प्रवृत्तमात्रज्योतिषो वोच्यन्ते। विषयसन्निधानेऽपि हेयोपादेयत्वबुद्धिशून्यता वशीकारः। तदभ्यासिनश्चादौ मधुभूमिका ऋतंभरप्रज्ञा वा भूत्वा देवैरिन्द्रादिभिरुपनिमन्त्रयन्ते 'भो इहास्यतामिह रम्यताम्, कमनीयोऽयं भोगः, कमनीयेयं कन्या, रसायनमिदं जरामृत्युं बाधते, वैहायसमिदं यानम्, अमी कल्पद्रुमाः, पुण्या मन्दाकिनी, सिद्धा महर्षयः, उत्तमा अनुकूला अप्सरसः, दिव्ये श्रोत्रचक्षुषी, वज्रोपमः कायः, सगुणैः सर्वमिदमुपार्जितमायुष्मता, प्रतिपद्यतामिदमक्षयमजरममरस्थानं देवानां प्रिय'मिति। एवं च ते देवैरभिधीयमानाः सङ्गस्मयाकरणेन परिशेषात् प्रज्ञाज्योतिषो भूतेन्द्रियजयिनो वा भवन्ति। एतच्च वशीकारसंज्ञं वैराग्यं योगप्रवर्त्तकत्वेन सम्प्रज्ञातस्यान्तरङ्गमसम्प्रज्ञातस्य तु बहिरङ्गं भवति। एतद्वैराग्यमात्रात् पुरुषतत्त्वानभिज्ञस्य विदेहलयः प्रकृतिलयो वा प्रसज्यते।

अस्मिताज्ञानेऽप्यलंबुद्धिः परवैराग्यम्। तदपि द्विविधं विषयिविषयं गुणविषयं चेति। तत्र पूर्वं विषयदोषदर्शनाद् विषयज्ञानेऽपि यदेव वैराग्यं तद् विषयिविषयं यत एव पुरुषख्यातिर्हेतुभूता चित्तविमुक्तिरुत्पद्यते, अन्यत्तु गुणवैतृष्ण्यमिति बोद्धव्यम्। तदेव यथा कण्ठरवेण लोक आकूतं विज्ञाप्य निर्देशं सूचयति, तथा भगवान् पतञ्जलिरर्थत आद्यं वैराग्यं सूत्रयन् साक्षाद्भावेन द्वितीयं सूत्रयति "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" इति। विषयज्ञानवैराग्यपाटवानन्तरं गुणत्रयात्मकप्रधानाद् विरक्तस्य पुरुषस्य ख्यातिरात्मसाक्षात्कारो यतो गुणवैतृष्ण्यमुत्पद्यते। तच्च परं ज्ञानस्य काष्ठाप्राप्तिरतिक्रान्तभावनीयत्वात् ततो नान्तरीयकं कैवल्यं भवति।

अभ्यासो नाम कस्यांचिदेव चित्तभूमौ समानप्रत्यया वृत्तिरिह तु स्वरूपावस्थिते द्रष्टरि निर्वृत्तिकस्य चित्तस्य जलस्येव कुम्भे निश्चलतारूपा स्थितिस्तदर्थं यो यत्नो मनस उत्साहो वा स्वभाव-चाञ्चल्याद्

बहिः प्रवाहशीलं चित्तं सर्वथा निरोत्स्यामीत्येवंविध आवर्त्तमानोऽभ्यासः। 'स च दीर्घकालनैरन्तर्य्यसत्कारासेवितो दृढभूमि'रिति सूत्रकारः। एतदुक्तं भवति—अनिर्वेदेन श्रद्धातिशयेन च निरन्तरासेवितः सोऽभ्यासो विषयवासनया चालयितुमशक्यो भवतीति। लयविक्षेपादीनामपरिहारे व्युत्थानसंस्कारप्राबल्याददृढभूमिरभ्यासो योगाय न कल्पत इति समाधिभावनायां दृढभूमिरभ्यास उपात्तः।

असम्प्रज्ञातः समाधिः परवैराग्यजन्य एव। तदुक्तं परवैराग्यासम्प्रज्ञातयोर्हेतुहेतुमद्भाव इति। स च निर्वस्तुकः, परवैराग्यस्य निर्वस्तुकत्वात्। परवैराग्यमभ्यस्य सास्मितसमाधिस्थ आत्मानमनात्मानं वा यदा न विषयीकरोति तदा तस्य समाधिरसम्प्रज्ञातः। न किञ्चित् सम्प्रज्ञायतेऽस्मिन्निति व्युत्पत्त्या स सर्ववृत्तिनिरोधः। तदेव सूत्रितं 'विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्य' इति। सम्प्रज्ञातसमाधौ सामान्यतो या काचिदस्मितावृत्तिरुल्लसति तस्या विरामो निरासः। स चासौ प्रत्ययः ख्यातिश्चेति तस्याभ्यासः पुनः पुनश्चेतसि निवेशनं तत्पूर्वस्तज्जन्यः संस्कारशेषः संस्कारमात्रावशेषो वृत्तिनिरोधो यः सम्प्रज्ञातादन्योऽसम्प्रज्ञात इत्यर्थः। तदेव सम्प्रज्ञाते वृत्तीनां निरोधादसम्प्रज्ञाते निरोधसंस्कारस्तिष्ठति, मोक्षे तु तासामत्यन्तलयान्नापि निरोधसंस्कारा अवशिष्यन्ते।

असम्प्रज्ञातस्य दृष्टं फलं सम्प्रज्ञातसाधारणं भवति। अदृष्टन्तु निखिलसंस्काराणां प्रारब्धकर्म्मणां च विलयात् स्वेच्छातो द्रागविमोक्षः। तथाहि स्मृतिः—

विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि।
प्राप्नोति योगी योगाग्निदग्धकर्म्मचयोऽचिरात्॥ इति।

असम्प्रज्ञातसमाधिर्द्विविधो भवप्रत्यय उपायप्रत्ययश्चेति। तत्र भवप्रत्ययो विदेहानां प्रकृतिलयानां च भवति। भवो जन्म प्रत्ययः कारणं यस्येति भवप्रत्ययः। स मोक्षमाणैर्हेयः। इन्द्रियादि-

ष्वात्मभावनाभिर्विधूतदेहा विदेहाः। तन्मात्रादिष्वात्मभावनाभिर्महत्तत्त्वावरणपर्य्यन्तावरणानि भित्त्वा प्रकृत्यावरणेन प्रतिबद्धाः प्रकृतिलयाः। क्षीणपुण्याः प्राप्तावधयस्ते पुनः संसारिणो भवन्ति। 'दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः' इत्यादिशास्त्रप्रामाण्यात्। शीततौ निर्वृता इव स्थैर्य्यसम्पन्ना विलेशया यथा शीतात्यये विलेशयत्वं त्यक्त्वा जिह्मगत्वं प्राप्नुवन्ति, तथा विदेहादयः पुण्याभिपाते मोक्षदशां विहाय गुणाधिकारं कर्म्मविपाकं सहन्त एव।

येस्तु भवप्रत्ययरूपं मोक्षाभासमनादृत्य तात्त्विको मोक्षः स्पृहितस्तेषां समाधिरसम्प्रज्ञात उपायप्रत्यय इत्युच्यते। स एव श्रद्धादिपूर्वको भवति। तथा हि सूत्रं—'श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञालोकपूर्वक इतरेषा'मिति। तत्र श्रद्धाशब्देन शास्त्रदेवादिषु परानुरक्तिरादेश्या। सैव विकल्पादींस्तिरस्कृत्य योगिनं योगक्षमं करोति। सिद्धायां च तस्यां स्वयंप्रमाणस्य शास्त्रादेः प्रमाणान्तरनिरपेक्षत्वमुपजायते।

यद्वा श्रद्धा श्रद्धान्विता भक्तिः। 'भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सता'मित्यादिस्मरणात् *। गीतायामपि प्रश्ननिरूपणाभ्यां तस्या आधिक्यसिद्धेश्च। श्रद्धातो वीर्य्यं धारणाशक्तिर्यत एव योगभूमिकारोहणाय योगिन उत्सहन्ते। वीर्य्यात् स्मृतिर्ध्यानं भाव्यस्य पुनश्चेतसि निवेशनमित्यभिप्रायः। स्मृतिध्रौव्यात् समाधिर्विवेकप्रत्ययफलको भवति। एतच्चतुष्टयं प्रयाजवत् सम्प्रज्ञातासम्प्रज्ञातयोः करणीयम्। भाष्यार्थप्रत्यभिज्ञानात्। समाहितो भाव्यं विवेकेन साक्षात्करोतीति समाहितस्य प्रज्ञालोकः सम्प्रज्ञातजन्यविवेकसाक्षात्कारो यस्य निश्चयदार्ढ्याद् अभ्यासदार्ढ्याच्च परवैराग्यहेतुरसम्प्रज्ञातो यस्मादेव प्रान्तभूमिप्रज्ञाया विषय आविरस्ति। तत एव परमा मुक्तिः साधननिरपेक्षत्वेन भवति। तदुक्तं भगवता वात्स्यायनेन

---

* श्रीमद्भागवते ११।१४ श्लोकस्य भावार्थदीपिका द्रष्टव्या।

'समाहितो भावयति, भावयन् निर्विद्यते; निर्विसस्य वैराग्य' विरक्तस्यापवर्ग' इति।

उपायानुष्ठानमाद्ये क्रियायोग उक्तः। स च स्मृतिसम्मितः—

आदौ हिरण्यगर्भेण द्वे प्रोक्ते योगसंहिते।
एका निरोधयोगाख्या कर्म्मयोगाह्वयाऽपरा * ॥

इत्यादिप्रमाणात्। तथाच भगवता पतञ्जलिनापि साधनपादे व्युत्थितचित्तानां बहिर्मुखाणां क्रियायोगादीनि योगयोग्यसाधनानि पञ्च बहिरङ्गाणि च व्याख्यातानि। तदेष श्लोको भवति—

क्रियायोगं जगौ क्लेशान् विपाकान् कर्म्मणामिह।
तद्दुःखत्वं तथा व्यूहान् पादे योगस्य पञ्चकम्॥ इति।

तत्र व्युत्थितचित्ता अपि द्विविधा मध्यमाधिकारिणो मन्दाधिकारिणश्चेति। अभ्यासवैराग्यरूपौ योगोपायौ येषां झटिति नोदितस्त एव मध्यमाधिकारिणः। समाधिसिद्धये तेषामुपायः क्रियायोगस्तपः-स्वाध्यायेश्वरप्रणिधानानीति। तत्र तपो ब्रह्मचर्य्यादिकं सन्न्यासिनां भवति। 'ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते' इति स्मृतेः। तच्च चित्तप्रसादाविरोधि मृद्वेव कार्य्यमिति महर्षिर्व्यासो मन्यते। गृहिणां तु तप आश्रमधर्म्मो य एव चित्तशुद्धिद्वारा विविदिषां जनयति। यदाह योगियाज्ञवल्क्यः—

विधिनोक्तेन मार्गेण कृच्छ्रचान्द्रायणादिभिः।
शरीरशोषणं प्राहुस्तापसास्तप उत्तमम्॥ इति।

भगवान् अहिर्बुध्नश्च—'कृच्छ्रचान्द्रायणाद्यैश्च तपो देहविशोषणम्' इति। स्वाध्याय इष्टमन्त्रादिजपः। प्रणवादिपवित्राणां जपो मोक्ष-शास्त्राध्ययनमिति भाष्यकृद्व्याख्यानम्। स एव योगफलको भवति। तथाहि पारमर्षी गाथा—

* अहिर्बुध्नसंहिता।

स्वाध्यायाद् योगमासीत योगात् स्वाध्यायमामनेत् ।
स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते ॥ इति ।

ईश्वरप्रणिधानं प्रेमनाम्नी भक्तिरहैतुकी यतः फलाभिसन्धानं विना कायमनोवाग्भिः कृतानां कर्म्मणां भगवति समर्पणम् ।

नाहं कर्त्ता सर्व्वमेतद् ब्रह्मैव कुरुते तथा ।
एतद् ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥

इत्यादिस्मरणात् । तदेव भगवान् भाष्यकारः 'ईश्वरप्रणिधानं सर्व्वक्रियाणां परमगुरावर्पणं तत्फलसन्न्यासो वे'ति । तत्र सन्न्यासः परमेश्वरः कर्म्मफलभोक्तेति भावनाविशेषः । मां कर्म्मफलानि भोजयन् परमेश्वरः प्रीणातीति यत् स एव परमेश्वरस्य तत्फलभोगः । यथाऽर्थिभ्यो धनानि प्रयच्छन् दाता तत्फलभोक्ता । यद्यपि परमेश्वरस्य प्रीतिरानन्दभोगरूपा नित्या, तथापि तस्मिन्नेव कर्म्मफलानां भोगोत्पत्तिः सिसृक्षादिवद् गौणीति बोद्धव्यम् ।

तपःस्वाध्यायत ईश्वरप्रणिधानमाप्यायितं भवति । आप्यायितेन तेनैव चित्तं क्रमशः सम्प्रज्ञाते निरुद्धम्, असम्प्रज्ञाते तु निर्वृत्तिकतया शनैरेकाग्रतामपि विहाय निरिन्धनवह्निवदुपशाम्यति, ततः शुद्धतत्त्वमात्रेणान्तःकरणेन मायान्धकारपरिपन्थिनि सच्चिदानन्दघने परमे वस्तुनि तुष्यति, विरमति च षाट्कौशिकदेहादिसंघातात् तद्भोग्याद्वा । तदुक्तं योगवार्त्तिके भिक्षुपादैः—'न केवलमीश्वरेऽर्पितकर्म्मण ऐश्वरयोग एव भवति, अपि तु ईश्वरसाक्षात्कारद्वारा पूर्णत्वादिना जीवतत्त्वसाक्षात्कारोऽपी'ति । सूत्रञ्च तत्र समाधिसिद्धिरीश्वरप्रणिधानादिति ।

( क्रमशः )

# अव्ययीभावोपदेश:

[ निबन्धक:—श्रीसीतानाथसिद्धान्तवागीश: ]

इदानीं जलप्रवाहप्लाविते, प्रबलवात्यासमाकुलिते, विध्वस्तखाद्यशस्यजाले, विविधदैवोपद्रुते, उन्मत्तनदीनदैर्विजिगीषुभिरिव समाक्रान्ते मृतप्राये च वङ्गमण्डले, परस्परं विरोधमुपगतवति दिक्चक्रवाले, एकदेशवासिनामपि स्वार्थान्धानां नरशोणितपिपासुतायां जिघांसायां प्रवर्द्धमानायां प्रतिकूलदैवेनाकस्माद् विनष्टजनपदे, महाकालताण्डवायिते शवदेहसमाच्छन्ने निराश्रये च महाचीने, प्रलयघनघटाच्छन्ने च भारतीयराजनीतिकगगने, स्वाधीनभावारुणरागारुणिम्ना समुद्दीपिते चाशाप्रत्यूषसि, न जानीमो भवितव्यतां विधातुश्चिन्तनीयामचिन्त्यप्रभावस्य। महासङ्कटेऽस्मिन् अस्थिचर्म्मावशिष्टानां भारतीयानां प्राणधारणार्थमवश्यमेवाव्ययीभावोपदेश: कर्त्तव्य इति चिरादेवास्माभिर्गीयते—"भद्रगेहे नित्यमव्ययीभाव" इति। एतत्कार्य्यप्रवृत्तिसमकालमेव काकतालीयन्यायेन १८५३-शकीय-विगताषाढमासस्य "संस्कृत-साहित्यपरिषत्" पत्रिकायामव्ययीभावविषयक: "किमपि संशयोद्घाटनम्" इतिशीर्षक: कश्चिन्मनोरम: प्रबन्धोऽदर्शि। यद्यपि नायमस्मत्सङ्कल्पितोऽव्ययीभावस्तथापि शब्दसादृश्येनाव्ययीभावविषयकतयाऽयममन्दमानन्दमजनयदस्माकम्। प्रबन्धेन चानेन वैयाकरणकेशरिणामपि व्याकुलीकृतानि चेतांसि किमुत सुकुमारमतीनाम्, प्रतिपादिता च तेन प्रबन्धकर्त्तुर्विशेषत: कलापप्रतिभा। यद्यप्यल्पधियामदूरदर्शिनामस्माकमत्र समालोचनं प्रस्तुतविषये सम्पूर्णामुपयोगितां नावहति, तथाप्यायुष्मता श्रीमता प्रबन्धकर्त्रा साङ्ख्यतीर्थोपाधिकेनोपेन्द्रनाथेन तादृश: कश्चित्सम्मोहनो बाणो

निरत्तेपि, यः खल्वस्माकं पादौ संस्पृश्य कर्णौ स्पृशति। येन च न केवलं सुकुमारमतीनां व्याकुलीकृतानि चेतांसि, अपि तु प्रवयसामस्माकमपि दृषत्कठिनानि निस्यन्दानीव नीरसहृदयानि स्यन्दमानानि भिद्यन्ते। अत्र च श्रीमतो महती शुश्रूषणा, अपूर्वा भक्तिः, महच्छास्त्रानुरागः, तत्त्वज्ञानाय प्रबलानुसन्धित्सा च उद्यमयति, त्वरयति, प्रेरयति, वाचालयति चास्मानस्मिन्। यद्यपि 'निर्णीतार्था व्याकरणकर्णधारा' एव ग्रन्थार्थविवरणे संशयनिवारणे च समर्था व्याख्यातृत्वेन वक्तृत्वेन च प्रबन्धकर्त्तुरभिमतास्तथापि तेषामेव समालोचनसौकर्य्यार्थं ग्रन्थान्तरसंवादसंवलितं सङ्क्षेपतोऽस्माभिरुपोद्घातमात्रं क्रियते। एते खलु प्रबन्धकर्त्तुः सङ्क्षेपत आक्षेपाः—

'अव्ययो वानव्ययो वाव्ययीभावो भवेदिति।' इत्येवं संशय्यानेन श्रीमता प्रबन्धकर्त्रा कलापपरिशिष्टकाराणां मतमुपन्यस्याव्ययीभावस्यानव्ययत्वं प्रमाणीकृतम्। पिष्टपेषणन्यायेन पाठकानामरुचिकरत्वेनानावश्यकतया च पुनस्तदुल्लेखो नोपयुज्यत इति ततो विरताः स्मः।

(१) प्रथमतः श्रीमताव्ययीभावस्याव्ययत्वस्वीकर्त्तृमते सन्दिह्यते— 'परिशिष्टकारमतसिद्धानि छात्त्रोपकुम्भमित्यादिपदानि प्रमाणं न वा।'

अत्रोत्तरम्—एतानि, एवंविधान्यन्यानि च पदानि व्याकरणसिद्धानि पाणिन्यादिमतानुमोदितानि चेति।

अव्ययीभावस्याव्ययत्वमङ्गीकर्त्तॄणां केषाञ्चित्तार्किकाणां मतं पश्चादालोच्यते।

(२) दण्डादण्डीत्यादावव्ययीभावः। कलापमते बहुव्रीहिः। अत्रापि परिशिष्टकृताऽनव्ययत्वमेवास्य स्वीकृतम्। अव्ययीभाववादिमते अव्ययत्वमेवेति श्रीमतैव प्रदर्शितम्। अनव्ययत्वमङ्गीकुर्व्वतः परिशिष्टकारस्य मते दण्डादण्डिकं दण्डादण्डितरां, दण्डादण्डितमामित्यादिप्रयोगाभाव एव फलम्। अत्र श्रीमता शङ्क्यते 'तथाविधपदानि प्रमाणानि न वा?' इति।

अत्रोत्तरम्—उक्तानि पदानि सर्वतन्त्राप्रसिद्धान्यप्रमाणीभूतानि चेति ।

(३) अव्ययीभावस्याव्ययत्वाङ्गीकारे प्रथमोपस्थितन्यायेनास्माभिः केचिद्दोषाः समदर्श्यन्त कातन्त्रसञ्जीवन्याम् । तेषां समालोचनेन सुकुमारमतीनां कालापानामव्ययीभावस्यानव्ययत्वे मतिः स्थेयसी स्यादिति । न तु मान्यानामुपजीव्यानामार्षचक्षुषां तत्रभवतां पाणिन्यादीनां मतं खण्डयितुं सागराम्भः शोषयितुमुद्यतैर्विकिरैरिवास्माभिः प्रयत्नोऽकारि । तथापि श्रीमतः शङ्काकलङ्कलेशोऽपि समुत्सारयितुं युक्त इति मन्यामहे । तथाहि—

द्वितीयदोषेऽस्माभिरभिहितम् "उपवधुम्मन्य इत्यत्र ह्रस्वमकारागमाप्राप्ति"रिति । तत्र श्रीमताभिहितम्—"नात्र ह्रस्वमकारागमयोरप्राप्तिरपि तु केवलमकारागमस्य, 'स्वरो ह्रस्वो नपुंसके' इत्यनेनैव ह्रस्वप्राप्ते"रित्यादि । अस्तु वा तत्र श्रीमतामभिमतं, तथापि मकारागमाप्राप्तिरूपो दोषः केन वार्य्यताम् । यद्वा 'ह्रस्वे सति मकारागमाप्राप्ति'रिति तात्पर्य्ये संशय एव नोपतिष्ठते ।

(४) पञ्चम दोषेऽस्माभिरुक्तम्—"अन्यस्माल्लुगिति सूत्रविधानञ्चानर्थकं स्यात् अव्ययाच्चेत्यनेन सिद्धत्वात् ।" अत्र श्रीमताक्षिप्तम् "इति यदुक्तं तदपि नास्मभ्यमतिमात्रं रोचते" इत्यादि । तदत्र किमस्माभिरपराद्धं, कटुकौषधोपशमनीयस्य रोगस्य प्रतिकर्त्तुं यदि सितशर्करोपदेशः कर्त्तुं न शक्यते न तद् भिषजां दोषमावहति । अत्र तु श्रीमतामभिप्रायः—अन्यस्माल्लुगिति सूत्रे स्थिते उपकुम्भात्, उपकुम्भे इत्यादौ विभक्तिलोपो वारयितुं शक्यते, अकृते तु सूत्रे कथन्तत्र विभक्तिलोपो वारणीय इति । अत्रास्माकमयमभिप्रायः अव्ययीभावस्याव्ययत्वाङ्गीकारे अव्ययाच्चेत्यनेनैव विभक्तिलोपः सिद्धः । यदि तु अकारान्ताद्विभक्तिलोपः कथं न स्यादिति शङ्क्यते, तदा "वरमक्षराधिक्यं न पुनर्योगविभाग" इति न्यायात् "अनतोऽव्ययाच्च लुक्" इत्युक्ते-

नैव तद्दोषपरिहारः सम्भवति। तथा च अन्यशब्दग्रहणेन सञ्जाता विप्रतिपत्तिरपि तिरोहिता भवति।

(५) अतः परं "स नपुंसकलिङ्गं स्या"दिति सूत्रवैफल्यमाशङ्क्य तदालोचितं, तत्र बहुवक्तव्यत्वेऽपि अस्मन्मतानुप्रवेशेन तत्रौदासीन्यमवलम्बितमस्माभिः। परन्त्वेतद् ब्रूमः अव्ययत्वमङ्गीकुर्वतामपि मते अव्ययीभावस्य नपुंसकत्वमुपदिष्टमेवेति।

(६) महदिदमाशङ्कान्तरं श्रीमता समुपस्थापितं, यत् "स नपुंसकलिङ्गं स्या"दिति सूत्रवैफल्यभिया वृत्तिकार-त्रिलोचन-सुषेणवचनानामसामञ्जस्यमिति। तत्रेदमादौ चिन्त्यते अव्ययीभावस्याव्ययत्वेऽनव्ययत्वे वा मतान्तरे तस्य नपुंसकत्वमङ्गीक्रियते न वा ? अङ्गीक्रियते चेत् कया युक्त्या तस्य साफल्यमिति।

तदत्राव्ययत्ववादिनां पाणिनीयानां मते "अव्ययीभावश्चे"ति नपुंसकत्वविषयकं सूत्रमस्ति। वोपदेवस्य तु मते "चगैक्यवं क्लीबम्" इति सूत्रं दृश्यते। तन्त्रान्तरेऽपि एतदर्थं सूत्रमस्ति तदिह नोक्तं गौरवात्। "चगैक्यवं क्लीबम्" इति सूत्रे तर्कवागीशपादाः—"अधिस्त्रीत्यादौ पूर्वपदार्थप्राधान्याल् लिङ्गकृतप्रयोगवैलक्षण्याभावे प्राप्ते, उन्मत्तगङ्गमित्यादावन्यपदार्थत्वादन्यलिङ्गतायां प्राप्तायां वचनमिद"मित्युक्तवन्तः। दुर्गादासपादास्तु—अव्ययीभावस्य क्लीबत्वफलन्तु उपसंज्ञम् उपलक्ष्मीत्यादौ ह्रस्व" इति ब्रुवते स्म।

"व्याल्लक् क्तेः" इति वोपदेवसूत्रे तर्कवागीशपादाः—व्यम् अव्ययम्, अव्यक्तलिङ्गमित्यर्थः। अव्यक्तलिङ्गत्वात् नपुंसकत्वं प्रतिपादितम्। एतेन शास्त्रान्तरे अव्ययस्य क्लीबत्वविधानं व्यर्थमिति। न च व्यानां लिङ्गकृतवैलक्षण्याभावादलिङ्गत्वमिति वाच्यं युष्मदस्मदोस्तदभावेनालिङ्गत्वे तद्विशेषणानां त्रिलिङ्गत्वानुपपत्तेः। अत एवोक्तं—"डतिव्यष्णान्त" इति। तथा च "षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययम्"-इत्यमरः। तद् विशेषणानां क्लीबत्वैकत्वे एव। "क्रियाव्ययानां

भेदकान्येकत्वेऽपि" इति क्लीबलिङ्गसंग्रहे अमरकोषात्। तथा च "सनातनं स्वरपि येन मनोहर"मित्याहुः।

"स नपुंसकलिङ्गं स्या"दित्याचार्य्यसूत्रव्याख्यानावसरे "अव्ययपूर्वपदत्वादलिङ्गतैव प्राप्नोति.वचन"मिति वृत्तिकारेणोक्तम्। अत्र किं नाम अलिङ्गत्वं, कथं वाऽलिङ्गता इत्याशङ्क्य वृत्तिग्रन्थव्याख्यानावसरे त्रिलोचनेनोक्तं "पूर्वपदार्थप्रधानो ह्यव्ययीभावः, पूर्वपदार्थस्य चासत्त्वभूतत्वाल्लिङ्गसंख्याभ्यां योगो न स्यादत इदमुच्यते" इति। अस्य तु मते अलिङ्गत्वं सर्वलिङ्गराहित्यमिति प्रतीयते। सुषेणस्तु—"ननु किमर्थमिदं यावता विशेषलिङ्गावगत्यभावात् सामान्यत्वान्नपुंसकत्वं सिद्धमेवेत्यभिप्रायेण सिद्धान्तमाह अव्ययपूर्वपदत्वादिति वृत्तिः।" एतन्मतेऽपि तावल्लिङ्गराहित्यमेवाव्ययानां प्रदर्शितम्। आशङ्कार्थस्तु यत्र विशेषलिङ्गावगतिर्नास्ति तत्र सामान्यत्वात् प्राप्तं नपुंसकत्वं केन वारयितुं शक्यत इति। सिद्धान्ते त्वव्ययानां यावल्लिङ्गराहित्यान् नपुंसकत्वमपि कल्पयितुं न शक्यत इति तात्पर्य्यम्। अत्रेदमालोचनीयम्—अव्ययीभावस्याव्ययपूर्वपदत्वं प्रायिकम्। अत एव जगदीशेनापि "अव्ययपूर्वस्तु यो भवे"दिति अव्ययीभावलक्षणं परित्यज्य लक्षणान्तरं कृतम्। यत्राव्ययपूर्वपदत्वं तत्रैवालिङ्गता प्राप्ता, "अव्ययपूर्वपदत्वा"दिति हेतुनिर्देशेन वृत्तिकृता तथैवोपपादितत्वात्। सामान्यत्वान्नपुंसकमित्यादेर्विषयस्तु यत्र लिङ्गानां लिङ्गार्थता अस्ति तत्रैव सम्भवति। यथा—"क्रिया साध्यमुच्यते"। "शक्यं श्वमांसादिभिरपि क्षुत् प्रतिहन्तु"मिति भाष्ये। प्रादीनां लिङ्गार्थत्वाभावात् अत्र नपुंसकत्वमपि न युज्यते इत्येवं तात्पर्य्यं वृत्तिकार-त्रिलोचन-सुषेणवचनानां विरोधः कथमपि नोपपद्यते। शास्त्रानुशासनेनालिङ्गता चैतेषां परिदृश्यते तथाच—"ष्णान्ता संख्या कत्यव्ययुष्मदस्मदश्चालिङ्गकाः।" "षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययम्" इत्यमरः। "क्रियाव्ययानां भेदकान्येकत्वेऽपि" इत्यमरेण, "नित्यमसंख्यस्ये"ति सूत्रयता परि-

शिष्टकारेणापि अलिङ्गत्वादेव क्रियाव्ययानां विशेषणे नपुंसकत्वं व्यवस्थापितम्।

तत्र चालिङ्गत्वं लिङ्गत्रयेऽपि रूपकृतवैलक्षण्याभावः, "त्रिषु समा" इत्यमरोक्तेः, "सदृशं त्रिषु लिङ्गेषु" इत्यनेनापि तथैवावगतेः। यथा—ष्णान्तसंख्यायुष्मदस्मदादीनाम्। अत्र तु लिङ्गवत्त्वमस्त्येवेति प्रतिपादितम्। यथा—पञ्च पुरुषाः, पञ्च स्त्रियः, पञ्च कुलानि। एवं शोभनस्त्वं, शोभना त्वं, शोभनं त्वमित्यादि। अव्ययानामलिङ्गत्वन्तु यावल्लिङ्गराहित्यमेव, प्रादीनां लिङ्गार्थत्वाभावान्नपुंसकत्वमपि न युज्यते। इयांस्तु विशेषो यदव्ययानां लिङ्गसंख्याकारकेष्वेकरूपतापन्नत्वं, तादृशस्थल एव यावल्लिङ्गराहित्यरूपमलिङ्गत्वमुक्तं, न चैवं काचिद् ग्रन्थकृतामनुपपत्तिर्वचनजातेषु। किञ्च—"अव्ययादाप् सुपः" (२।४।८२) इति सूत्रे अव्ययाद्विहितस्य आपः, सुपश्च लुक् स्यादिति व्याख्याय "तत्र शालाया"मित्युदाहृतं दीक्षितेन। अत्र च "अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाभावा"दिति वार्त्तिककृतां वचनमप्यनुकूलमस्माकम्। एवञ्चानव्ययपूर्वपदकाव्ययीभावसमासस्थले नपुंसकत्वविधानं सर्वेषामेव ग्रन्थकृतां सुतरामेव सङ्गच्छते। यथा—द्विमुनि, द्वियमुनं, द्विगार्ग्यं, दशभारद्वाजम्, उन्मत्तगङ्गं, लोहितगङ्गं, खलेयवं, तिष्ठद्गुप्रभृति सर्वतन्त्रसिद्धप्रयोगाणां नपुंसकत्वविधानं विना कथं साधुत्वमित्यापाततोदर्शिभिरेव चिन्तनीयम्। किञ्चाव्ययानां सामान्यत्वान्नपुंसकत्वाङ्गीकारे, समया, निकषा, अन्तरा, हा प्रभृतीनामव्ययानां का गतिरिति च विभावनीयम्। पाठसामर्थ्यादिकल्पनायामपि महद् गौरवं स्यादिति।

(७) इदानीमव्ययीभावस्याव्ययत्वमनव्ययत्वं वाङ्गीकुर्वतां मते न किञ्चित् फलवैषम्यमस्तीति प्रतिपाद्यते। अव्ययीभावस्याव्ययत्वाङ्गीकारे ये खल्वापातत एव अनव्ययत्ववादिनां कालापानां मतदाढ्यायास्माभिर्दोषाः प्रदर्शिताः, पाणिनीयैरेवार्षैर्नैस्ते सर्व एव निराकृताः।

तन्मते चाव्ययीभावस्याव्ययत्वमतिदिष्टं कार्य्यविशेषप्रतिपत्त्यर्थम्। अन्यथा स्वरादिपाठेनैव सिद्धे "अव्ययीभावश्च" (१।१।४१) इति सूत्रेण पुनरव्ययत्वविधानमनर्थकं स्यात्। तथाहि तत्र सूत्रे—"इह लुकि मुखस्वरोपचारयोर्विवृत्तौ चेति परिगणनं कर्त्तव्य"मिति टीकाकृतः। तेनाव्ययनिबन्धनं लुगादिकार्य्यमनव्ययनिबन्धनं कार्य्यान्तरञ्च भवितुमर्हति। तेन उपाग्निमुखः, प्रत्यभिमुखः, उपकुम्भम्मन्यः, उपकुम्भीभूतः इत्यादि प्रयोगाणां साधुत्वमुपपद्यते। वस्तुतस्तु तन्मते स्वरविशेषप्रतिपादनार्थमव्ययत्वमङ्गीकृतम्। अस्मन्मते तु स्वरकृतवैलक्षण्याभावादनव्ययत्वमेवेति न काचिद्विरोधाशङ्का। तत्त्वबोधिन्यामपि—"यद्यप्यव्ययीभावस्य लिङ्गसंख्याकारकयोगोऽस्ति तथापि वचनादव्ययत्वम्।" एतेनाव्ययीभावस्यानव्ययत्वेऽपि कार्य्यविशेषप्रतिपादनार्थमस्याव्ययत्वमङ्गीकृतमित्येवायातम्।

(८) इदानीं तार्किकमतमालोच्यते। पञ्चलक्षण्यां तर्कवागीशपादैरभिहितं—"अव्ययीभावस्याव्ययतया तेन समं समासान्तराभावाच्चे"ति। अत्राव्ययत्वं हेतूकृत्य अव्ययीभावसमासे समासान्तराभावः साधितः। तथाच अव्ययेन सह अव्ययीभावातिरिक्तः समासो नास्तीति मतं प्रतिपादितम्। एवञ्चाव्ययीभावस्याप्यव्ययत्वेन तेन सममपि अव्ययीभावातिरिक्तः समासो न भवतीति ग्रन्थकृतामाशयः। तथा चाव्ययीभावसमासो न समासान्तरघटकः अव्ययत्वादित्यर्थः पर्य्यवस्यति। शैलीयं व्याकरणानुशासनानुसारिणी न वेति बहव एव मादृशाः स्थूलधियः संशेरते। तथाच तन्मते—"अत्युच्चैः, परमोच्चैः, सर्व्वपश्चात्, परमस्वरि"त्यादि सर्व्वतन्त्रसिद्धप्रयोगाणां साधुत्वव्याघातः। उपकृष्णमतिक्रान्तौ अत्युपकृष्णौ, बहूपकुम्भौ, अत्युपकुम्भौ, बहूच्चैसौ, अत्युच्चैसौ, बहूपवधुरत्युपवधुरित्यादयश्च यथेष्टं प्रयोगाः परिदृश्यन्ते। किञ्च क्वाचोपकुम्भं, ज्येष्ठानुपदमित्यादि प्रयोगं प्रमाणीकुर्व्वता परिशेषकारिणा तन्मते सर्व्वतन्त्रसम्मतिविरहः स्पष्टत एव प्रतिपादितः।

एतेनाधुनिकतर्कवागीशपादैर्महामहोपाध्यायैः पञ्चलक्षणीटिप्पण्यां भूतलोपकुम्भं भूतलावटमिति प्रामादिकः पाठ इति मन्यमानैरभिहितं कथं श्रद्धातुमीशते सुधिय इति तु चिन्तनीयम्।

वयन्तु तत्त्वान्वेषणपराः पश्यामो यत्तिष्ठद्गुप्रभृतीनामिवाव्ययीभावातिरिक्तः समासो नास्तीति व्युत्पत्तिसिद्धम्। तेन परमं तिष्ठद्गु इत्यादौ समासो न भवतीति। "सर्व्वनामशब्देनाव्ययीभावसमासो नास्ती"ति वोपदेवग्रन्थटिप्पण्यां पाणिनीयानां मतमुपन्यस्तम्। "अव्ययपरपदकः समासो नेष्यते" इत्यपि तर्कवागीशपादानामभिप्रायो वर्णयितुं न शक्यते, दर्शितदोषराशिभ्यः।

तदिदानीं बहुवक्तव्यत्वेऽपि सङ्क्षेपतो विवक्षवो वयं विरमामः। किन्त्वाशास्महे, दीधितिकारानुगैरन्तेवासिभिर्जीवद्गुरव एव शास्त्रचर्च्चापरैः पराजीयन्तां, येन शिष्योत्कर्षेण परं प्रमोदं लभमानाः प्रत्यक्षपूर्व्वपक्षशरनिकरशय्याशायिनश्चिरस्मरणीया भवेयुरिति शिवम्। *

---

* विषयमिममधिकृत्यास्माभिरपि कश्चन प्रबन्धः प्रणीतः, स चागामिन्यां संख्यायां प्रकाशयिष्यते इति। सं० सा० प० स।

# पदमञ्जरीकारो हरदत्तः

( पूर्वतोऽनुवृत्तः )

"नित्यवीप्सयोः" [ पा० ८।१।४ ] इत्यत्र तु वामनो वक्ष्यति तिङ्क्षु नित्यता अव्ययकृत्सु चेति, तन्मते नित्यग्रहणादेवात्र द्विर्वचनम् । *

(६) "अणिञोः—" [ पा० ४।१।७८ ] इत्यत्रोक्तम्—"तदेतद् "ये च तद्धिते" [ पा० ६।१।६१ ] इत्यत्र वामनो वक्ष्यति, यदि प्रत्ययः कथमौदमेघेय इति । आपत्याद् विहितः ष्यञ्, सोऽप्यापत्य एव तत्र यलोपे सिद्धमिति । जयादित्यस्तु मेने शीर्षादेशसन्निपातेन ष्यञ्, स तद्विघातं न करिष्यतीति, यद्येवमजादिप्रत्ययनिबन्धनः शीर्षादेशः कथं तमजादिं विहन्यात्, ततः किम्, ष्यञादेशो न प्राप्नोति, अनित्या सन्निपातपरिभाषा तेन ष्यञ् भवति शीर्षादेशश्च न भविष्यति ।"......

(७) "संख्यैकवचनाच्च वीप्सायाम्" [ पा० ५।४।४३ ] इत्यत्र वृत्तिकारेणोक्तम्—"एकवचनात् खल्वपि । कार्षापणं ददाति कार्षापणशः । माषशः । पादशो ददाति । एकोऽर्थ उच्यते येन तदेकवचनम् । कार्षापणादयश्च परिमाणशब्दा वृत्तावेकार्था एव भवन्ति । संख्यैकवचनादिति किम् ? घटं घटं ददाति" इति ।

---

* "इदमेव ज्ञापकं पौनःपुन्यस्य केनचिद्द्योतनेन सौत्रद्वित्वाप्रवृत्तेरिति पौनःपुन्ययङन्ते न सौत्रं द्वित्वम् । भुक्त्वा भुक्त्वा भोजं भोजमित्यादौ तु "आभीक्ष्ण्ये द्वे वाच्ये" इति भाष्यपठितवचनान्तरेण द्वित्वम् ।'—"प्रकारे गुणवचनस्य" इत्यत्र लघुशब्देन्दुशेखरः । ' "द्वित्वम् ।" "नित्यवीप्सयोः" इत्यनेन । यद्यप्याभीक्ष्ण्यं णमुलादिना द्योतितम्, तथाप्यर्थान्तरेऽपि तद्विधानाद् द्वित्वरहितयोर्न तद्द्योतने सामर्थ्यमिति भावः ।'—"आभीक्ष्ण्ये णमुल् च" इत्यत्र शब्देन्दुशेखरः । "आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञकृदन्तेषु च" इति "नित्यवीप्सयोः" इत्यत्र भट्टोजिः ।

एतच्च पदमञ्जरीकारेण व्याख्यातम्—"यद्यत्र पारिभाषिकस्यैकवचनस्य ग्रहणं स्यात् सर्वेभ्यो ब्राह्मणेभ्यो घटं घटं ददातीत्यत्रापि स्यात् घटशब्दस्यैकवचनान्तत्वादित्यालोच्यान्वर्थस्यैकवचनस्यात्र ग्रहणमित्याह—एकोऽर्थ उच्यते येनेति। नन्वेवमपि स दोषस्तदवस्थ एव, एकवचनान्तस्यैकार्थत्वादित्यत आह—कार्षापणादयश्चेति। अनेन वृत्तिस्थैकार्थताश्रीयते, न वाक्यगतेति दर्शयति। वृत्तौ च घटादयो जातिशब्दा अनेकार्था भवन्ति जातियोगस्यैकानेकसाधारणत्वात् किन्त्वभेदैकत्वसंख्यामुपाददते; कार्षापणादयस्तु परिमाणवचना उक्तपरिमाणमर्थमाचक्षाणा न मात्रयापि न्यूनाधिकभावे भवन्ति, वाक्ये तु कार्षापणौ कार्षापणा इत्येकशेषबलादन्या: पादा माषा इतिवदेकजात्यन्वयरहितानेकार्थप्रतीति:, वृत्तौ तु विभक्त्येकशेषयोरभावात् स एव केवलोऽक्तपरिमाणोऽर्थोऽवतिष्ठते, अत: कार्षापणादय एवोदाहरणमिति जयादित्यो मन्यते। वामनस्तु—"जश्शसो: शि:" [ पा० ७।१।२० ] इत्यत्रोदाहरिष्यति जसा सहचरितस्य शसो ग्रहणादिह न भवति कुण्डशो ददाति, वनश: प्रविशतीति। स मन्यते जातिशब्दोऽपि यदार्थप्रकरणादिना वृत्तावेकार्थीभवति, भवत्येव तदा ततोऽपि शसिति।" *

(८) "हुश्नुवो: सार्वधातुके" [ पा० ६।४।८७ ] इत्यत्र वृत्तिकृतोक्तम्—"इदमेव हुश्नुग्रहणं ज्ञापकं भाषायामपि यङ्लुगस्तीति। छन्दसि

* 'परिमाणशब्दा वृत्तावेकार्था एव।' तथाच एकवचनाग्रहणे वृत्तावेकार्थता नियता। परिमाणशब्दा एव गृह्यन्त इति भाव:। अत एव प्रत्युदाहरति घटं घटमिति। घटादयो हि जातिशब्दा नैकार्था भवन्ति। जातियोगस्यैकानेकसाधारणत्वात्, किन्त्वभेदैकत्वसंख्यामुपाददते। एतच्च सर्वं जयादित्यमतेनोक्तम्। वामनस्तु मन्यते जातिशब्देभ्योऽपि भवत्येव। तथा च जश्शसो: शिरिति सूत्रे जसा सहचरितस्य शसो ग्रहणादिह न भवति कुण्डशो ददाति वनश: प्रविशतीति प्रौढमनोरमा।

छन्दस्युभयथेत्यार्धधातुकत्वादेव यणादेशाप्रसङ्गः। न च यङ्लुगन्तादन्यत् प्रत्युदाहरणमुवर्णान्तमनेकाजसंयोगपूर्वं विद्यते" इति।

अत्र हरदत्तमिश्रैरुक्तम्—'एतच्च "यङोऽचि च" [ पा० २।४।७४ ] इत्यत्र छन्दोऽनुवृत्तिमाश्रित्योक्तम्। जयादित्यस्तु तत्र छन्दोऽनुवृत्तिं नाशिश्रियत्' इति।

(९) "इदितो नुम् धातोः" [पा० ७।१।५८] इत्यत्र हरदत्तेनोक्तम्—"जयादित्यस्तु आभीयासिद्धत्वमनित्यमाश्रित्य तासेरिदित्करणमनुनासिकलोपप्रतिषेधार्थमित्यवोचत्, तन्मते धातुग्रहणं तासिनिवृत्त्यर्थं कर्त्तव्यमित्यपदेशे नुम् भवतीत्यत्र यत्नान्तरमास्थेयम्" इति।

(१०) "प्रकारे गुणवचनस्य" [पा० ८।१।१२] इत्यत्र वृत्तिकृतोक्तम्—"प्रकारो भेदः सादृश्यं च। तदिह सादृश्यं प्रकारो गृह्यते। पटु पटु। अपरिपूर्णगुण इत्यर्थः। परिपूर्णगुणेन न्यूनस्योपमाने सत्येवं प्रयुज्यते। जातीयरोऽनेन द्विर्वचनेन बाधनं नेष्यते" इति। अत्र हरदत्तः—"तद्विधौ द्विविधस्यापि प्रकारस्य ग्रहणं मन्यते। जयादित्यस्तु तत्राह [ पा० ५।३।६९ ]—"सामान्यस्य भेदको विशेषः प्रकारः" इति।

(११) "अतः कृकमि—" [पा० ८।३।४६] इत्यत्र वृत्तिकृतोक्तम्—"तपरकरणं किम्? भाः करणम्। भास्कर इत्ययं तु कस्कादिषु द्रष्टव्यः।"

अत्र हरदत्तः—"दिवाविभा—" [ पा० ३।२।२१ ] इत्यादिना टप्रत्ययः। जयादित्यस्तु तस्मिन् सूत्रेऽवोचद् भास्करान्तेति प्रत्ययसन्नियोगेन सत्वं निपात्यत इति। †

---

* तथा च "प्रकारवचने जातीयर्" इत्यत्र लघुशब्देन्दुशेखरे नागेशः—अत्र प्रकारो भेद एवेति जयादित्यः। सादृश्यं भेदश्चेत्युभयमपीति "प्रकारे गुणवचनस्ये"त्यत्र वामनः। बालमनोरमायां वासुदेवदीक्षितोऽपि—"जयादित्यस्तु अत्र प्रकारो भेदः, थाल्विधौ [ ५।३।२३ ] सामान्यस्य भेदको विशेषः प्रकार इत्याह। वामनस्तु सादृश्यं भेदश्चेत्युभयमपि प्रकार इत्याह" इति।

† "सूत्रे भास्करान्तेति भाःशब्दस्य प्रत्ययसन्नियोगेन सकारो निपात्यते।

"क्ङिति च" [ १।१।५ ] इत्यत्रापि जयादित्यवामनयोर्मतविभेदो न्यासशब्दकौस्तुभादिषु स्पष्टः। न जानीमः किमिति हरदत्तमिश्रेण प्रसिद्धतमस्यापि विरोधस्यास्य समुल्लेखो न कृतः।

यद्यपि काशिकावृत्तिर्जयादित्यवामनाभ्यां विरचितेति निर्विवादं तथापि कियान् भागो जयादित्यप्रणीतः कियांश्च वामननिर्मित इत्यत्र विप्रतिपद्यन्ते विपश्चितः। तत्र प्रौढमनोरमाव्याख्याने शब्दरत्ने हरिदीक्षितैरुक्तम्—"प्रथमद्वितीयपञ्चमषष्ठा जयादित्यकृतवृत्तयः, इतरे वामनकृतवृत्तय इत्यभियुक्ताः।" हस्तलिखितेषु वृत्तिग्रन्थेषु सर्वत्रैव प्रथमाद्यध्यायपञ्चकस्य पुष्पिकायां जयादित्यविरचितत्वमन्तिमस्याध्यायत्रितयस्य च पुष्पिकायां वामनविवृतत्वमुपलभ्यते इति बेल्भाल्कारमहोदयः। वाराणसीमुद्रितपुस्तके त्वेतद्विपर्य्यय एवोपलक्ष्यते। तथाहि—तत्र पञ्चमाध्यायस्य चतुर्थश्चरणो वामनविरचित इति दृश्यते, तृतीयः पादः पुनर्जयादित्यविरचित इति। विषयमिममधिकृत्य बाहुल्येन विचारो वारान्तरे करिष्यते, इदानीमत्र पदमञ्जरीकृतो मतं प्रदर्श्यते। पूर्वप्रदर्शितेभ्यो हरदत्तवचनेभ्य एतदेव स्फुटीभवति यत् प्रथमाध्यायस्य प्रथमपादः, द्वितीयस्य द्वितीयचतुर्थौ, तृतीयस्य प्रथमद्वितीयचतुर्थाः, चतुर्थस्य प्रथमः, पञ्चमस्य तृतीयचतुर्थौ च जयादित्यविवृताः, षष्ठस्य प्रथमद्वितीयचतुर्थाः सप्तमस्य प्रथमः, अष्टमस्य च प्रथमद्वितीयतृतीया वामनविवृता इति। *

---

तेन भास्कर इत्यत्र विसर्जनीयजिह्वामूलीयौ न भवतः। यद्वा कस्कादिषु बोध्यः" इति शब्दकौस्तुभे भट्टोजिः।

| * | जयादित्यः | वामनः | | जयादित्यः | वामनः |
|---|---|---|---|---|---|
| (१) | १।३।६७ | ...... | (५) | ३।४।२२ | ८।१।४ |
| (२) | २।२।१७ | ६।२।७३ | (६) | ४।१।७८ | ६।१।६१ |
| (३) | ३।१।३६ | ७।१।५८ | (७) | ५।४।४३ | ७।१।२० |
| (४) | ३।२।१९ | ८।२।३० | | | |

यत्र च वृत्तिकृद्ग्रां वार्त्तिकस्थं भाष्यस्थं वा पदं सूत्रे प्रक्षिप्तं तत्रापि प्रायेण विचित्रा हि वृत्तेः कृतिर्वृत्तिकारेणेत्युक्तम्। तथाहि—"अध्यायन्यायोद्यावसंहाराश्च" [३।३।१२२] इति सूत्रं वृत्तिकृता "अध्यायन्यायोद्यावसंहाराधारावयोश्च" इति विपरिवर्त्तितम्। अत्र जिनेन्द्रबुद्धिना किमपि नोक्तम्। हरदत्तमिश्रेण पुनः—"घञ्-विधावाहारावायानामुपसंख्यानमिति वार्त्तिकम्। वृत्तिकारस्तु आधा-रावायशब्दौ सूत्रे प्रक्षिप्य चकारेणावहारशब्दं साधयति स्म। विचित्रा हि वृत्तेः कृतिर्वृत्तिकारेण" इत्युक्तम्। "कृत्याः प्राङ् ण्वुलः" [३।१।९५] इत्यत्राप्युक्तम्—"कृत्या इत्येतावदेव पठितं सूत्रकारेण, वृत्तिकारस्तु भाष्ये पूर्वपक्षरूपेण पठितं सूत्रे प्रचिक्षेप। विचित्रा हि वृत्तेः कृतिर्वृत्तिकारेणेति।" एवं वार्त्तिकपाठगणपाठयोरपि प्रक्षिप्ता अंशाः प्रायेण प्रदर्शिताः। तथाहि "मण्यादीनां प्रतिषेधो वक्तव्यः" [काशिका १।१।११] इतयत्रोक्तम्—न चेदं वचनम्। भाष्य-वार्त्तिककाराभ्यामपठितत्वात्, किन्तु मण्यादीनां निर्वाहः कर्त्तव्य-इत्यर्थः" इति। "स्वाङ्गाच्चोपसर्जनात्—" इतयत्र वृत्तिकारेण पठितम् "अङ्गगात्रकण्ठेभ्यश्च वक्तव्यम्" इति वार्त्तिकमधिकृत्योक्तम्—"अङ्ग-गात्रेति भाष्येऽनुक्तमप्येतत् प्रयोगबाहुल्याद्वृत्तिकारेणोक्तम्" इति। "जातेरस्त्रीविषयादयोपधात्" [४।१।६३] इतयत्रोक्तम्—गौरादि-ष्विदानीन्तनैर्हयादयः प्रक्षिप्ता इति वार्त्तिककारवचनाद्विज्ञायते।

अन्तरान्तरा सूत्रकारस्यापि स्खलितानि समुद्घाटितानि। तथाहि—"संपर्य्युपेभ्यः करोतौ भूषणे, समवाये च, उपात् प्रतियत्नवैकृतवाक्या-ध्याहारेषु" [६।१।१३७-१३९] इति सूत्रत्रयं व्याख्याय प्रोक्तम्—

| वामनः | जयादित्यः |
|---|---|
| (८) ६।४।८७ | २।४।७४ |
| (९) ७।१।५८ | [३।१।३३] |
| (१०) ८।१।१२ | ५।३।५९ |
| (११) ८।३।४६ | ३।२।२१ |

'अथैवं कस्मान्न कृतम्, "सम्प्रतिभ्यां करोती भूषणसमवाययोः, उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु च" इति। सूत्रकारं पृच्छ' इति।

"एङि पररूपम्" [ ६।१।९४ ] इत्यत्रोक्तम्—रूपग्रहणं चिन्त्य-प्रयोजनं तथा चाग्रि पूर्वं इत्यत्र रूपग्रहणं न कृतम्। "नित्यं छन्दसि" [ ४।१।४६ ] इत्यत्राप्युक्तम्—"योगारम्भश्चिन्त्यप्रयोजनः।"

"अपृक्त एकाल्प्रत्ययः" [१।२।४१] इति सूत्रस्य न्यासे—"प्रत्यय-ग्रहणं विस्पष्टार्थमल्ग्रहणेनात्र जातिग्रहणं भवतीति ज्ञापनार्थमेक-ग्रहणम्" इत्युक्तम्। पदमञ्जर्यां पुनः—"ननु च यद्यल्समुदायोऽपि गृह्येत अल्ग्रहणमनर्थकं स्यात्, अतो यद्यपि "निपात एकाजनाङ्" [ १।१।१४ ] इत्यत्र एकाज्ग्रहणेन वर्णग्रहणे जातिग्रहणं ज्ञापितं तथाप्यत्राल्ग्रहणसामर्थ्यात् समुदायस्य न भविष्यतीति चिन्त्यप्रयो-जनमेकग्रहणम्। तथापृक्तप्रदेशेष्वल्ग्रहणेनैव सिद्धे नार्थः संज्ञया, नतरां महत्या, नतमां पूर्वनिर्दिष्टया *। सुरां सुनोतीति क्विपि तुक्। सुरासुतमाचष्टे इति णिचि टिलोपः क्विब् णिलोपः। अत्र धातु-सकारस्य "हल्ड्याब्भ्यः—" [ ६।१।६८ ] इति लोपो न भवति। प्रत्ययग्रहणपरिभाषया सिद्धम्, तिपा साहचर्य्याच्चैकवचनस्य ग्रहणं सिद्धमिति प्रत्ययग्रहणमपि चिन्त्यप्रयोजनम्।" इति सिद्धान्तितम्।

इममेवार्थं प्रकटयन्ति शब्दकौस्तुभे दीक्षितमहाभागाः—"एकेति व्यर्थं निपात एकाजनाङित्येकग्रहणेन वर्णग्रहणे जातिग्रहणमिति ज्ञापने-ऽपि अल्ग्रहणसामर्थ्यादेवेह व्यक्तिपरत्वात्। किञ्च सूत्रमेवेदं व्यर्थम्, अपृक्तप्रदेशेष्वल्ग्रहणेनैव सिद्धेः। न च सुरां सुनोतीति सुरासुत्, तमाचक्षाणः सुरा इत्यत्र धात्ववयवस्य सस्य लोपः स्यादिति वाच्यम्, प्रत्ययाप्रत्ययपरिभाषया गतार्थत्वाद्, विभक्तिसाहचर्य्याच्च। यथा सूत्रा-रम्भेऽपि तिसाहचर्य्यात् सेरपि तिङ एव ग्रहणात् अभैत्सीत् इति सिचो न भवति।"

* पूर्वनिर्दिष्टयेति। विधेयाविमर्शदोषदुष्टयेत्यर्थः।

भाषायां यङ्लुग्विषये "हरदत्तेनोक्तम्—प्रसिद्धश्च यथा छान्दसो यङ्लुगिति। प्रयोगश्च चिरन्तनैः पद्ये गद्ये च काव्याख्यायिकादौ विकटपदोपन्यासप्रधानैरपि कविभिर्न कृतो दृश्यते।"

"विदांकुर्वन्त्वित्यन्यतरस्याम्" [ ३।१।४१ ] इत्यत्रोक्तम्—"कश्चित्तु भाष्यवार्त्तिककारानुक्तत्वादुपलक्षणत्वं नेच्छति। स इतिकरणस्य प्रयोजनं ब्रवीतु।"

यद्यपि टीकाकृद्धर्मं प्रतिपालयता हरदत्तमिश्रेणान्तरान्तरा पूर्वाचार्य्याणां मतं निराकृतं तथापि पाणिन्यादिमुनित्रितयेऽस्य गरीयसी श्रद्धा प्रतिपदमेव स्फुटीभवति। मुनित्रितये च यथोत्तरं मुनीनां प्रामाण्यमिति न्यायेन पतञ्जलेरेव प्रामाण्यं सर्वत्राव्याहतम्। तथा चोपोद्घाते उक्तम्—

"यद्विस्मृतमदृष्टं वा सूत्रकारेण तत् स्फुटम्।
वाक्यकारो ब्रवीत्येष तेनादृष्टञ्च भाष्यकृत्॥" इति।

एवं "क्ङिति च" [ १।१।५ ] इत्यत्रापि "इह त्रिमुनि व्याकरणं यथोत्तरञ्च मुनीनां प्रामाण्यमिति दर्शनस्थितिः, तेन सूत्रकारेणानुक्तं वार्त्तिककार आह, तदुक्तं च दूषयति,* एवं भाष्यकारो वार्त्तिककारेण। व्याख्यातृत्वमपि द्वयोश्चास्तीत्येतावत्।"

"एको गोत्रे" [४।१।९३] इत्यत्र श्रुतिस्मृतिवचनोपन्यासेन पुत्रोत्पादितयापि प्रजया पितॄणामुपकारं प्रतिपाद्योक्तम्—सूत्रकारश्च शब्दविदां मूर्धाभिषिक्तः सूत्रयति एको गोत्र इति।

अर्वाचीनैष्टीकाकृद्भिः प्रायेण प्राचीनटीकानामनुसरणं क्रियते इति सुविदितमेवैतद् विदितवेदितव्यानाम्। तन्नैतदाश्चर्य्यं यद् हरदत्तेनापि न्यासकृतां महाभाष्यटीकाकृताञ्च वचनान्यन्तरान्तरा समुपनिबद्धानि। यत्र च तेषां वचसामसमीचीनत्वं तत्र युक्त्युपन्यासपुरःसरं तन्मतं खण्डितम्, बहुत्र मनोहरतमा अभिनवा युक्तयोऽपि समुद्भाविताः।

* उक्तानुक्तदुरुक्तार्थव्यक्तिकारि तु वार्त्तिकमित्युक्तेः।

तथाहि—'तद्धितश्चासर्वविभक्तिः' इति सूत्रस्थकाशिकाव्याख्याने न्यासकारेणोक्तम्—"प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणं भवतीति तद्धितान्तस्य संज्ञा विज्ञायते इत्याह—तद्धितान्तः शब्द इति।" एतत्त्वापाततो रमणीयम्, सामान्यतः प्रत्ययग्रहणे तदन्तस्य ग्रहणेऽपि संज्ञाविधौ तत्प्रतिषेधात् "सुप्तिङन्तं पदम्" इत्यत्र न्यासकृतैव तदर्थस्य व्याख्यातत्वात्। तथाहि "सुप्तिङन्तं पदम्" [१।४।१५] इत्यत्र न्यासः—"यदीहान्तग्रहणेनाप्यन्यत्र संज्ञाविधौ तदन्तविधिर्नास्तीत्ययमर्थो न ज्ञाप्यते तदा "तरप्तमपौ घः" [ १।१।२२ ] इत्यत्र तरबन्तस्य घसंज्ञा स्यात्, न प्रत्ययमात्रस्य। तस्मादत्रास्मिन्नर्थेऽन्तग्रणेन ज्ञाप्यतेऽन्यत्र संज्ञाविधौ तदन्तग्रहणं यथा स्यादिति।" एवं न्यासकारस्य प्रमादं परिलक्ष्य भाष्यप्रदीपकृतान्यथैव तदन्तविधित्वं साधितम्। तथाच तद्वचनम्—"इह संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधाद् यद्यपि केवलस्य प्रत्ययस्य ग्रहणं तथापि प्रयोजनं सर्वनामाव्ययसंज्ञयामिति वाचनिकस्तदन्तविधिरस्तीति तदन्तस्याव्ययसंज्ञा विधीयते।" इदमेव तदन्तविधित्वं हरदत्तमिश्रैर्मनोहरतरेण प्रकारान्तरेण प्रतिपादितम्—"इह यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधस्तथापि केवलस्य तद्धितस्य संज्ञायाः प्रयोजनाभावात् तदन्तविधिर्विज्ञायते इति।"

"क्ङिति च" [१।१।५] इत्यत्र न्यासकृतोक्तम्—"ननु च विधीयमानतया प्राधान्यात् प्रतिषेधस्यैवैतद् विशेषणं युक्तम्। नैतदस्ति। यत्र हि गुणः कृतात्मसंस्कारः प्रधानोपकाराय महते प्रभवति तत्र प्रधानस्यैव भूयांसमुपकारं कर्तुमात्मनः संस्कारमनुभूय प्रधानेन सम्बन्धमनुभवति। यथोक्तम्—

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते।
प्रधानस्योपकारे हि तथा भूयसि वर्तते॥" इति।

अत्रैव हरदत्तेनोक्तम्—ननु च विधीयमानतया प्राधान्यात् प्रति-

षेधस्यैवैतद् विशेषणं युक्तम्, नैतदस्ति। यत्र हि गुणः कृतात्मसंस्कारः प्रधानोपकाराय महते प्रभवति, तत्रात्मनोऽपि संस्कारमनुभूय प्रधानेन सम्बध्यते, यथा पानीयमेलादिसंस्कृतं पुरुषेण। उक्तञ्च—गुणः कृतात्मसंस्कार इत्यादि।" यद्यप्यत्र हरदत्तमिश्रेण सर्वमेव न्यासतः समुद्धृत्य विलिखितम्, तथापि "यथा पानीयमेलादिसंस्कृतं पुरुषेण" इति दृष्टान्तोपन्यासेन विषयस्यातिमात्रं सुबोधत्वं सम्पादितमितरवश्यमेवाभ्युपगन्तव्यम्।

"गतिश्च" [ १।४।१० ] इत्यत्र काशिकायां "कारिकाशब्दस्योपसंख्यानम्" इति वर्तते। एतद् व्याचक्षाणेन न्यासकृतोक्तम्—"धात्वर्थनिर्देश एतदुपसंख्यानं कर्तव्यम्। योऽन्यः कर्त्तरि कारिकाशब्दो ण्वुलन्तस्तस्य कारिकां कृत्वेत्येव भवति।"

एतस्यैव महाभाष्यस्थस्य वार्त्तिकस्य व्याख्याप्रसङ्गेन भाष्यप्रदीपकृतोक्तम्—"कारिका क्रिया मर्य्यादा स्थितिरित्यर्थः। यत्न इत्यपरे। यस्तु श्लोकवाची कारिकाशब्दस्तस्य ग्रहणं न भवति। क्रियायोगशब्देन कारिकाशब्दस्य विशेषणात् क्रियावृत्तेर्ग्रहणात्।"

काशिकास्थस्यास्यैव वार्त्तिकस्य व्याख्यायां पदमञ्जरी—"कारिका क्रिया मर्य्यादा स्थितिरित्यर्थः। यत्न इत्यपरे। धात्वर्थनिर्देश इति ण्वुल्। यस्तु कर्त्तरि कारिकाशब्दः कारिका दासीति, यश्च श्लोकवाची तयोर्ग्रहणं न भवति क्रियायोगग्रहणेन कारिकाशब्दस्य विशेषणात् क्रियावृत्तेर्ग्रहणात्।"

एतस्मात् स्फुटमेव न्यासकृति कैयटस्य, जिनेन्द्रकैयटयोश्च हरदत्तस्याधमर्ण्यं प्रतीयते। तथापि कैयटेन श्लोकवाचिकारिकाशब्दविषये गतिसंज्ञककारिकाशब्दस्यार्थनिर्देशे च न्यासकृतानुक्तमपि प्रतिपादितम्, हरदत्तेन पुनर्नात्र किमपीदंप्रथमतयोपनिबद्धम्।

"अव्ययीभावश्च" [ १।१।४१ ] इतिसूत्रस्थकाशिकां व्याचक्षाणेन

न्यासकारेणोक्तम् अत्र सुखस्वरोपचारौ निवर्त्यमानौ प्रयोजनं, न तु विधीयमानौ। लुक् पुनर्विधीयमानः।" कैयटकारेणाप्येतदेवोक्तं केवलमुदाहरणोपन्यासेन विषयोऽयं वैशद्यमापादितः। तथाहि तद्वचनम्—"सुखस्वरोपचारौ निवर्त्यमानौ प्रयोजनं यथा मशकार्थो धूम इति।" पदमञ्जरीकारेण कैयटस्यैवोक्तिरुपनिबद्धा—"अत्र सुखस्वरोपचारौ निवर्त्यमानतया प्रयोजनं मशकार्थो धूम इतिवत्, लुक् प्रवर्त्यमानतया।"

"शि सर्वनामस्थानम्" [१।१।४२] इत्यत्र जिनेन्द्रबुद्धिना सर्वनामस्थानलक्षणाया महत्याः संज्ञायाः प्रयोजनमप्रतिपद्यमानेनोक्तम्—"पूर्वाचार्य्यैरेवेयं प्रयोजनमन्तरेणापि महती संज्ञा प्रणीता। तस्या इह समाश्रयणं यत् तत् तत्कृतस्य शब्दानुशासनस्य दोषवत्त्वसूचनार्थम्। तत् पुनः स्वशास्त्रस्य पुनरुक्ततादोषपरिहारार्थम्। यदि हि तद्दोषवद्भवत्येवमस्य परिहारो युज्यते नान्यथा।" इदन्त्वतिमात्रमाश्चर्य्यकरं यन्नितरामुपहासास्पदमपि व्याख्यानमिदं हरदत्तमिश्रैः स्वग्रन्थे सन्निवेशितम्। तथाहि तद्वचनम्—"केचिदाहुः सर्वं नाम तिष्ठत्यस्मिन्निति सर्वनामस्थानम्। नाम प्रातिपदिकम्, सर्वशब्दोऽवयवकार्त्स्न्यवचनः। सर्वावयवयुक्तं यत्र नाम तिष्ठतीत्यर्थः। तेनान्यत्र न्यूनं नाम तिष्ठतीत्यर्थो गम्यते। किं सिद्धं भवति? उपेयुषा इत्यादौ सम्प्रसारणे कृते पूर्वकृतस्येटो निवृत्तिः सिद्धा भवति, अन्यथा निवृत्तिकारणाभावादवतिष्ठतेति। एवं तु कस्मिन् प्रातिपदिके किं न्यूनं न ज्ञायेत। तस्मात् पूर्वाचार्य्यानुपालब्धुमेषा महती संज्ञा प्रणीता" इति।

दीक्षितचरणैः पुनर्व्याख्यानस्यास्य निःसारतमत्वं सम्पश्यतोक्तम्—तस्मात् संज्ञा तावत् प्रणेया, महासंज्ञाकरणं तु पूर्वाचार्य्यानुरोधात्।

अत्र दीक्षितवचनमेव समीचीनतया प्रतिभासते। संज्ञाया अन्वर्थत्वविषये पदमञ्जरीकृता यदेकीयमतमुद्धृतं तदपि मनोरमम्, परं

पाणिनीये तन्त्रे तस्योपयोगो नास्ति, तेन पाणिनीयानामुद्वेजिकापि संज्ञेयं कालापकोविदानां विशेषतश्चेतोऽपहरति।

"कृत्यैरधिकार्थवचने" [ २।१।३३ ] इत्यत्र काशिकायामुक्तम्—पूर्वस्यैवायं प्रपञ्चः। न्यासकृता च व्याख्यातम्—"ननु किमर्थमिदमित्याह—पूर्वस्येत्यादि। ते वै विधयः सुसंगृहीता येषां लक्षणं प्रपञ्चश्चेति। सुसंगृहीता यथा स्यादिति पूर्वस्यायं प्रपञ्चः क्रियते।" कैयटेन तु पूर्वव्याख्यातॄणां व्याख्याद्वितयमुपन्यस्तम्—"स्तुतिनिन्दापरत्वात् क्रियोपादानस्य कर्तृकरणयोर्गौणत्वात् पूर्वेणाप्राप्तः समासोऽनेन विधीयत इति केचिदाहुः। अन्ये तु प्रपञ्चार्थमेतदित्याहुः।" पदमञ्जरीकारेण कैयटोपन्यस्तमाद्यं मतं निराकृत्य द्वितीयं संस्थापितम्—"यद्यपि स्तुतिनिन्दापरत्वात् क्रियोपादानस्य कर्तृकरणयोर्गौणत्वं तथापि बहुलवचनात् पूर्वेणैव सिद्धम्, तथाच काकपेया नदीत्यत्राकृत्यैरप्यधिकार्थवचनैः समासो दृश्यते, अतः प्रपञ्च एवायं नाप्राप्तविधिर्नापि नियम इत्यर्थः" इति।

"शिवादिभ्योऽण्" [ ४।१।११२ ] इत्यत्र न्यासः—"अथाण्ग्रहणं किमर्थम् ? न शिवादिभ्य इत्येवोच्येत। शिवादिभ्य इत्येतावत्युच्यमाने यथाविहितमिञादिरेव प्रत्ययो माभूत्, अणेव यथा स्यादित्येवमर्थमिति चेत्, नैतदस्ति। यथाविहितमिञादीन् प्रतययान् प्रत्येतदनर्थकम्। विनाप्यनेन तत्सिद्धेः। तस्मादन्तरेणाप्यण्ग्रहणम् अणेव भविष्यति। ननु चासत्यण्ग्रहणे फञः प्रकृतत्वात् तस्यैव विधिर्विज्ञायते। नैतदस्ति। यदि हि शिवादिभ्यः फञ विधातुमिष्टः स्यात् ततोऽश्वादिष्वेव तेषां पाठं कुर्य्यात्। इदं तर्हि प्रयोजनम्। अयमृष्टिषेणशब्दः शिवादिषु पठ्यते। तस्य 'सेनान्तलक्षणकारिभ्यश्च' [ ४।१।१५२ ] इति ण्यप्रत्ययः प्राप्नोति। तत्रासतप्रण्ग्रहणे पुनर्विधानमिदं तद्बाधने कृतार्थमिति। ततो यथाविहितमिञेव स्यात्, नाण्। ततोऽणेव यथा स्यादित्यण्ग्रहणम्।"

तत्रैव सूत्रे पदमञ्जरी—"अथाण्ग्रहणं किमर्थं न यथाविहित-मित्येवोच्येत। एवमुच्यमाने इञादय एव स्युः, ते विहिताः। पुन-रारम्भसामर्थ्याद्यो विहितो न च प्राप्नोति स एवाण् भविष्यति। इदं तर्हि प्रयोजनम्। ऋष्टिषेणशब्दोऽत्र पठ्यते, तत्र यथाविहितमित्यु-च्यमाने अत इञ् प्राप्तस्तस्य सेनान्तलक्षणो ण्यो बाधकः प्राप्तस्तत्रा-रम्भसामर्थ्यादिञ् प्रसज्येत, पुनरण्ग्रहणादणेव भवति।"

तत्रैव सूत्रे शब्दकौस्तुभम्—"अण्ग्रहणं मास्तु। वचनसामर्थ्या-दिञादिभिर्बाधितुमारब्धोऽणेव प्रसोष्यते। मैवम्। ऋष्टिषेणशब्दो-ऽत्र पठ्यते। तस्मादत इञ् प्राप्तः। स एव सेनान्तलक्षणेन ण्येन पर-त्वाद्बाधितुमारब्धोऽनेन सूत्रेण प्रतिप्रसूयेत। तस्माद् यथान्यास-मेवास्तु।"

अतश्चेदमेव व्यक्तीभवति यन्न्यासकारस्यैव वचांसि संक्षिप्य पद-मञ्जरीकारेणोपनिबध्यन्ते, कौस्तुभकारेणापि पदमञ्जरीकारस्येति।

"कन्यायाः कनीन" [ ४।१।११६ ] इत्यत्र न्यासकृता न किम-प्युक्तम्। कैयटेन पुनर्मतद्वितयं प्रदर्शितम्, हरदत्तेनापि तदेवानू-दितम्।

"क्षत्राद् घः" [ ४।१।१३८ ] इत्यत्र न्यासकृतोक्तम्—"घशब्द एव न तु तरप्तमपाविति वेदितव्यम्। कथं पुनरेतल्लभ्यते यावता घ इति तरप्तमपोरियं संज्ञा। संज्ञा चोच्चारिता संज्ञिनं सम्प्रत्यायय-तीति तयोरेव ग्रहणं युक्तम्। नैष दोषः। प्रत्ययविधौ यत्र घ इति श्रूयते तत्र स्वरूपस्य ग्रहणं भवति ज्ञापकात्। यदयं प्रत्ययादेर्घ-कारस्येयादेशं शास्ति तज्ज्ञापयति यत्र प्रत्ययविधौ घः श्रूयते तत्र स्वरूपमेव गृह्यते इति। न हि संज्ञिनो ग्रहणेन प्रत्ययादेर्घः सम्भवति।"

तत्रैव पदमञ्जरी—"घशब्द एव न तरप्तमपौ, अन्यथा सर्वत्रैव प्रत्ययविधौ घ इति तरप्तमपोर्ग्रहणात् प्रत्ययादेर्घकारस्येयादेश-

वचनमनुपपन्नं स्यात्। 'न च तुग्राद् घन्' [ ४।४।११५ ] 'घच्छौ च' [ ४।४।११७ ] इति घन्‌घचाववकाशौ, तत्रापि संज्ञाशब्दः सानुबन्ध उपात्तः। अनुबन्धास्तु संज्ञार्थं इति सम्भवात्। ङमुण्नित्यमितिवत्। "किमिदं भ्यां वो घ" इत्यत्रापि तरप्‌तमपोरिवादेशत्वं विज्ञायेत।"

शब्दकौस्तुभे मञ्जरीकृन्मतमेवानूदितम्।

अत्रेदमवधेयम्। यद्यपि हरदत्तेन न्यासकारवचनमेव समुद्धृतम्, तथापि हरदत्तेन घन्‌घच्-विषयिकाभिनवा युक्तिः समुद्भाविता समाहिता च।

"व्यन् सपत्ने" [ ४।१।१४७ ] इत्यत्र वृत्तिकृतोक्तम्—"भ्रातृशब्दाद्व्यन्प्रत्ययो भवति समुदायेन चेदमित्रः सपत्न उच्यते। अपत्यार्थोऽत्र नास्त्येव।" अत्र प्रत्यवतिष्ठमानः प्रदीपकारः प्राह—विरोधाभावात् सपत्नेनापत्यार्थो न बाध्यते। न च समुदायार्थः सपत्नः। प्रकृतिप्रत्यययार्थयोस्त्यागप्रसङ्गात्। न च गत्यन्तरसम्भवे तत्त्यागो युक्त इति भावः। एतदसहमानेन वृत्तिकृदुक्तमेव बहुमन्यमानेन मञ्जरीकृतोक्तम्—अथानुवृत्तस्यापत्यस्य विशेषणमेव सपत्नं कस्मान्न भवति। तत्राह—अपत्यार्थोऽत्र नास्त्येव। एतदेवोदाहरणेन स्पष्टयति—पाप्मना भ्रातृव्येणेति। न हि पाप्मा भ्रातुष्पुत्रो भवति। अतः सपत्नमात्रे भ्रातृव्यशब्दस्य दर्शनादपत्यार्थोऽत्र नास्ति। किञ्च योऽपि सपत्नो भ्रातुरपत्यं सम्भवति सोऽप्याद्युदात्ताद् भ्रातृव्यशब्दात् सपत्नरूपेणैव प्रतीयते नापत्यरूपेण। तथाच भ्रातृव्यो भ्रातृव्य इति सहप्रयोगोऽपि व्यन्व्यदन्तयोर्भवति। अतः सुष्ठूक्तमपत्यार्थो नास्त्येवेति।"

अत्र भाष्यकारश्रद्धया यद्यपि सर्वैरेव प्राचीनैरर्वाचीनैश्च व्याख्यातृभिरपत्यार्थः स्वीकृतस्तथापि भाष्यविरुद्धमपि समीचीनं वृत्तिकृन्मतमभ्युपगतं युक्त्युपन्यासपुरःसरं प्रतिष्ठापितञ्च प्रमाणपरतन्त्रेण हरदत्तमिश्रेण। भाष्योक्तं तु प्रौढिवादमात्रमिति तस्याशयः।

"युवाखलतिपलितवलिनजरतीभिः" [२।१।६७] इत्यत्र जयादित्ये-

नोक्तम्—"खलत्यादिभिः समानाधिकरणैः सह युवशब्दः समस्यते तत्पुरुषश्च समासो भवति। जरतीभिरिति स्त्रीलिङ्गनिर्देशः प्रातिपदिकग्रहणेन लिङ्गविशिष्टस्यापि ग्रहणमिति ज्ञापनार्थः।" अत्र न्यासः—"खलत्यादिभिः समानाधिकरणैरित्यादि। यद्येवं किमर्थं जरतीभिरिति स्त्रीलिङ्गेन निर्देशः। जरद्भिरित्येवं नाम निर्देशः कर्त्तव्यः स्यात्। न हि जरतीशब्देन स्त्रीलिङ्गेन युवशब्दस्य पुंलिङ्गस्य सामानाधिकरण्यमुपपद्यत इत्याह—जरतीभिरिति स्त्रीलिङ्गेन निर्देश इति। कथं पुनरनेन निर्देशेनैषा परिभाषा शक्यते ज्ञापयितुम्? यद्येषा परिभाषा न स्यात्तदा जरतीभिरित्येवं निर्देशोऽनर्थकः स्यात्। तथा च समानाधिकरणाधिकारात् समानाधिकरणेन जरतीशब्देनायं समासो विज्ञायते। न च तेन स्त्रीलिङ्गेन पुंसि वर्त्तमानस्य युवशब्दस्य सामानाधिकरण्यं भवति। तदेष निर्देशः कथमर्थवान् भवति? यद्येषा परिभाषावतिष्ठते। तस्यां हि सत्यां युवशब्दस्य ग्रहणे युवतिशब्दस्य ग्रहणं भवतीत्युपपद्यते युवतिजरतीशब्दयोः सामानाधिकरण्यम्, तस्मिंश्च सति तयोः समासः। तदेवं जरतीभिरिति निर्देशो ज्ञापयत्येषा परिभाषास्तीति। नन्वेवमपि जरत्या समास उच्यमाने जरता न प्राप्नोति युवजरन्निति। नैष दोषः वृत्त्यन्तरे हि जरद्भिरिति पठ्यते। उभयथा ह्याचार्य्येण शिष्याः प्रतिपादिता इत्युभयं सिध्यति।

अत्र कैयटेन महाभाष्यप्रदीप उक्तम्—"पुंलिङ्गेन सामानाधिकरण्यं नोपपद्यत इत्यर्थापत्त्या परिभाषा ज्ञाप्यते तेन युवतिर्जरतीति स्त्रीलिङ्गेन समासः। नन्वेतयोरपि विरुद्धवयोवाचित्वान्नास्ति सामानाधिकरण्यम्। नैष दोषः, जरत्यां युवतिधर्मोपलम्भात् युवजरतीर्वा जरतीधर्म्मसद्भावात् तद्रूपारोपात्। युवतिशब्दस्यैव पूर्वनिपातार्थमिदम्, अनियमो हि गुणशब्दात् स्यात्। जरद्भिरित्यपि पाठं शिष्या आचार्य्येण बोधिता इति युवजरन्नित्यपि भवति।"

अत्रैव सूत्रे पदमञ्जरी—"संज्ञायूनो ग्रहणे गार्ग्यायणः खलतिरि-

त्यादाविव तु स्यान्न च तस्य जरतीशब्देन सामानाधिकरण्यम् न च गार्ग्यायणी युवतिरस्ति, स्त्रियां युवसंज्ञाप्रतिषेधादतो युवेति स्वरूप-ग्रहणमित्याह—युवशब्द इति। कथं पुनर्युवशब्दस्य जरतीशब्देन सामानाधिकरण्यं पुंलिङ्गस्य स्त्रीलिङ्गेनेति? तत्राह—स्त्रीलिङ्गनिर्देश इति। अस्यां हि परिभाषायां सत्यां युवशब्दस्य ग्रहणे युवतिशब्द-स्यापि ग्रहणादुपपद्यते युवतिजरतीशब्दयोः सामानाधिकरण्यम्, असत्यां तु नोपपद्यत इत्यर्थापत्त्या परिभाषा ज्ञायते। युवखलतीति। 'क्तिदि-कारादक्तिनः' 'सर्वतोऽक्तिन्नर्थादित्येके' इति ङीष्। वलिशब्दः पामादिः। युवजरन्निति। जरद्भिरित्यपि पाठः केनचिदाचार्येण बोधितः इति पुंलिङ्गेनापि समासो भवतीति भावः। युवतिर्जरतीति। कथं विरुद्धवाचिनोः सामानाधिकरण्यम्? अन्योऽन्यधर्मोपलम्भात् तद्रूप-त्वारोपाद् भविष्यति। यद्येवम्, विभिन्नलिङ्गयोरपि सामानाधिकरण्य-सम्भवात् कथं परिभाषा ज्ञाप्यत इति चिन्त्यम्। युवशब्दस्य पूर्व-निपातनियमार्थं वचनम्, अनियमो हि गुणशब्दत्वात् स्यात्।"

अत्रैव सूत्रे शब्दकौस्तुभे भट्टोजिः—"जरद्भिरिति पाठान्तरम्, तत्राद्यपाठे युवशब्दस्य जरत्याः सामानाधिकरण्यासम्भवात् तदन्यथा-नुपपत्त्या प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापीति परिभाषा ज्ञाप्यते। तथा च युवयुवतिशब्दयोर्द्वयोरपि खलत्यादिभिश्चतुर्भिरुभयलिङ्गैः समानाधिकरणैः सह समासे अष्टावुदाहरणानि पर्यवस्यन्ति। तथाहि युवा खलतिः युवखलतिः, युवतिः खलती युवखलती। क्तिदिकारा-दक्तिनः, सर्वतोऽक्तिन्नर्थादित्येके इति ङीष्। युवपलितः युवपलिता। युववलिनः युववलिना। वलिशब्दः पामादिः। युवजरन् युवजर-तीति। जीर्य्यतेरतृन्। उगितश्चेति ङीप्। युवत्यामेव जरतीधर्मो-पलम्भेन तद्रूपारोपात् समानाधिकरण्यम्। यत्तु, एवं सति पुंस्येव स्त्रीत्वारोपेण जरतीसामानाधिकरण्यं सम्भवतीति परिभाषाज्ञापनं कथमिति हरदत्तेनोक्तम्, तत्रेदमुत्तरम्—आरोपं विनोपपत्तौ किं

तेन। न ह्येकमगत्यारोपितमिति सर्वमारोपणीयम्। लघ्व्यानुरोधेन परिभाषाज्ञापनस्यैवौचित्यात्। "कुमारः श्रमणादिभिः" [ १।२।७० ] इति वा ज्ञापकमस्तु, श्रमणादिषु स्त्रीलिङ्गानामेव बहूनां पाठात्। "अश्वादिभ्यः फञ्"विधौ [ ४।१।११० ] "पुंसि जातः" इति गणसूत्रे पुंसीत्युक्तिर्ज्ञापिकेति तु तत्त्वम्। युवशब्दस्य पूर्वनिपातनियमार्थं वचनम्। अनियमो हि प्रसक्तः, गुणशब्दत्वात्।"

पूर्वविलिखितस्य प्रदीपस्योद्योतः—"यद्यपि मुखं चन्द्र इत्यादौ भिन्नलिङ्गयोरपि सामानधिकरण्यं तथापि न सर्वत्र, किन्तु सम्प्रतिपन्न-स्थल एव। तदप्येकस्य नियतलिङ्गत्व एवेति भाष्याभिप्रायः। तद्रूपा-रोपादिति। नन्वेवं पुंस्त्वस्याप्यारोपोऽस्तु किं ज्ञापकेन, असङ्गतं च तदिति चेन्न। उभयोरपि गौरवात्, लघ्व्यानुरोधेन भाष्यप्रामाण्येन क्लृप्तपरिभाषाज्ञापनस्यैवौचित्याच्चेत्यलम्। जरद्भिरित्यपीति। अत्र मानं चिन्त्यम्। युवजरन्निति। बहुलग्रहणेन सुसाधम्।" ( क्रमशः )

---

## अप्पाशास्त्रिणां पत्राणि

(८)

श्रीशिवः शरणम् सांगलीतः
७।१८३५

सप्रणयं गाढमालिङ्ग्य मूर्ध्नि च समाघ्राय कुशलं वार्त्तयति। वत्स! प्रेरितपूर्वं मया श्रीमते पत्रमेकं सह मदीयया प्रतिकृत्या। कच्चिदधिगतं तदेतच्छ्रीमता? अयि हृदयाह्लादन! प्रकाशितं वङ्गीय-संस्कृतोपाधिपरीक्षाणां फलमिति वङ्गवासितोऽवगतम्यते। तदुत्कण्ठते चेतः श्रीमतः परीक्षाफलमवगत्यामन्दमानन्दमनुभवितुं व्याकरणतीर्थं इत्युपाधिना च संयुज्यमानं श्रीमतां मङ्गलमभिधानमालोकयितुम्। तच्छीतलीकरोतु प्रियवयस्यस्तथाविधप्रवृत्तिपीयूषासेकेन समुत्कण्ठा-कुलमन्तरङ्गमस्य जनस्य। कुत्रेदानीमायुष्मान् उपेन्द्रचन्द्रः। अत्र मे मङ्गलम्। श्रीमतस्तु सर्वाङ्गीणं तदनवरतं विज्ञाय वाञ्छाम्यन्त-रात्मानमानन्दयितुम्। प्रणिपात्यतामव्याजभक्तिभरावनम्रोऽयं जनः प्राणस्य मे प्रियबन्धोः श्रीमत्याश्च जननीनिर्विशेषायाः प्रजावतीदेव्या-श्चरणसरोजद्वितये। किमधिकमिति शिवम्।

भवदेकप्रेमा—श्रीअप्पाशर्म्मा।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| October, 1931. | १८५३ शकीये आश्विने १४वर्षस्य ६ष्ठ-संख्या | Vol. XIV, No. 6. |


## उपनिषत्कथा

( छान्दोग्ये चतुर्थावृत्तिः )

[ निबन्धकः—महामहोपाध्यायः श्रीदुर्गाचरणसांख्यवेदान्ततीर्थः ]

अयि भोः प्रियपाठकाः, पूर्व्ववृत्तो जबालासत्यकामसंवादः साम्प्रतमपि भवतां स्मृतिपथान्नापगत इत्यनुमीयते। अत्र खलु गवेषणापरायणाः केचन वैदेशिकाः सदाचारपूतायाः सत्यकामसूतिर्जबालायाः शशाङ्कसुन्दरे चरित्र-चित्रे वितथं कलङ्कपङ्कमशङ्कमारोपयन्तः स्वान्ते सन्तोषसन्ततिमातन्वन्ति, ते खलु वराका नितरामस्माभिरुपेक्षणीया एव, यतः सर्व्वतः स्वेच्छातन्त्राणां तेषाम्—

धर्म्मः कर्म्मसमाचारः प्रवृत्तिर्वृत्तिरेव च ।
अस्मत्तः सर्व्वतो भिन्नाः प्राच्यवाच्या यथा दिशः ॥

अतोऽस्मद्विपरीतदिग्वर्त्तिनः सुखसेवैकव्रताः सुकृतिनस्ते अस्मत्-समाचारेषु यथातथा नाम जल्पन्तु स्वच्छन्दं निन्दन्तु स्तुवन्तु वा, तेनास्मन्महिमा नोपचीयते, नाप्यपचीयते। यत् पुनरस्मदीया अपि

केचन प्राज्ञम्मन्यास्तन्मति-पिशाचिकयोपगूढचेतस्तया समुपहृत-विवेकबुद्धय इव विस्मृतात्मसमाचारा जगदिदमात्मौपम्येन परिपश्यन्ति, तदिदमविमृष्यकारित्वमस्माकमन्तःशूलमिव निरतिशयं वैशसमुपजनयति। तत्प्रबोधनार्थमेवायमस्माकमुद्यम इत्यवधेयम्। तदास्तां तावत्, अलमप्रस्तुतप्रस्तावनया, प्रकृतमर्थमिदानीमनुसरामः, येन तावज्जबालायाश्चारित्रं मेघमुक्तशशधर इव समधिकं शोभतितराम्। तेषामित्थं कथावतारः—

प्रौढे वयसि वर्त्तमाना जबाला नाम काचिदबला उपनयनार्थिना गुरुकुलं जिगमिषुणा सत्यकामाभिधानेन पुत्रेण स्वगोत्राभिधानं पृष्टा —"नाहमेतद्वेद—यद्गोत्रस्त्वमसि" इत्युक्तवती। प्रागेवोक्तं यत्, एतस्मादेव वचनाद् जबालायाः साधुचरित्रे सत्यकामस्य चाजारजत्वे विप्रतिपद्यन्ते केचन मनीषिण इति, वयन्तु तदेतन्न साधु मन्यामहे। यतोऽत्र जबालाया यथोक्तवचनात् स्वैरिणीत्वं नैवावगम्यते, नाप्यनुमातुं शक्यते। यदि तावद् जबाला जात्या ब्राह्मण्येव नाभविष्यत्, नूनं तर्हि गोत्रे परिचयप्रसङ्गे "परिचारिणी" इत्येतावन्मात्रमात्मविशेषणं नैव निरदेक्ष्यत्, अपि तु 'दासो'इत्येवावदिष्यत्। न हि परिचारिणीति पदं दास्यां निरूढम्, येन तत्पदबलादेव जबालाया दासीत्वमनुमीयेत। अतः परिचारिणीति पदेन तस्याः पर्य्याप्तपरिचर्य्यापरतैवाध्यवसीयते, न पुनर्दासीभावः।

यदपि "बह्वहं चरन्ती" इत्युक्तिरेव जबालाया बहुचारिणीभावं गमयतीत्युच्यते, तदपि दुर्विलसितमज्ञताया भाषाविज्ञाने। यतः 'बहु' इति पदं क्रियाविशेषणं चरन्तीत्यनेन समन्वेति। ततश्च बहु प्रभूतं यथा स्यात् तथा चरन्ती सती परिचारिणी—बाहुल्येन परिचर्य्यापरासमित्येवं समुदितोऽर्थः सम्पद्यते, नात्र बहुपुरुषगामितारूप-बहुचारिणीभावस्य गन्धोऽपि समुपलभ्यते। यदि पुनः कुलललनानां परिजनपरिचर्य्याबाहुल्यमेव व्यभिचारिताया गमकं स्यात्, हन्त भोः

तर्हि अविभक्तपरिजनबहुलानामेतद्देशवास्तव्यानां कुटुम्बिनां गुरु-भर्त्तृ-बान्धवादिसेवापरासु कुलाङ्गनास्वपि निःशङ्कमुपलिप्यतामयं व्यभिचारकलङ्कपङ्कसङ्करः। तथा च सर्व्व एवाकुलीभवेल्लोकव्यवहारः। आचार्य्यपादास्तु एतत्सन्दर्भव्याख्यानावसरे—"भर्त्तृगृहे बहुपरिचर्य्याजातमतिथ्यभ्यागतादिविषयं ··· ··· परिचरणव्यग्रचित्ततया गोत्रादिस्मरणे मम मनो नाभूत्। यौवने च तत्काले त्वामलभे लब्धवत्यस्मि। तदैव ते पितोपरतः, अतोऽनाथाहम्" इत्येवं व्याजह्रुः।

अथ सा व्यभिचारपरतया गणिकाप्रायैव स्यात्, तदा ध्रुवं सा स्वसुतमात्मानञ्चाब्राह्मणतया जानात्येव। तथा विजानत्यपि किमिति उपनयने कृताग्रहं सौम्यविग्रहं सत्यकामं न न्यवारयत्; किमिति वा सत्यकामं भूतार्थं नोपादिशत्? सा तु आत्मनो गोत्रपरिचये नितरामज्ञतामभिनीय "जबाला तु नामाहमस्मि, सत्यकामस्त्वमसि। स सत्यकामो जाबाल एव ब्रवीथाः" इत्यादिभिस्तेजोगर्भैः प्रोत्साहवचनैः सत्यकाममभिलषितेऽर्थ एव समनोदयत्।

सत्यकामस्य चाब्राह्मणवंश्यत्वे कुतोऽकस्मादुपनयनग्रहणे स्वैरप्रवृत्तिः? विशेषविदुषा गुरुणा च कथं कृत्याकृत्यविवेकमूढेनेव सहसा तत्राभ्यनुज्ञानं कृतम्? इत्येवं सर्व्वमेवाकुलीभवेज् जबालायाः स्वैरिणीत्वपक्षे।

सहृदयैः पाठकैरत्र तदप्यभिनिविष्टव्यम्, यत्, उपनयनग्रहणे यथा गोत्राभिज्ञानमपेक्ष्यते, तथा पित्रादिनामविज्ञानमपि, सत्यामपि तयोर्द्वयोरेव तुल्यायामपेक्षायां तत्र सत्यकामो गोत्रमात्रमपृच्छन्मातरं, न पुनः पित्रादीनां नामान्यपि? तदप्रश्नादेव सम्यक् प्रतीयते यत्, सत्यकामस्य पित्रादिनामविज्ञानं सम्यगेवासीत्, नासीत् केवलं गोत्राभिज्ञानम्। तत एव तन्मात्रविषयकः प्रश्नः साधु संगच्छते मातरं प्रति। मातापि अलब्धगोत्रसंविदः पुत्रस्य प्रश्नानुरूपमेवोत्तरं प्रायच्छत्—"नाहं वेद यद्गोत्रस्त्वमसि" इति। नैतावता जबालायाः

स्वैरिणीत्वं, सत्यकामस्य च जारजत्वं सिध्यतीति सुधीभिरेव विचारणीयम्। साम्प्रतमपि प्राप्तवयस्कानां पुंसामपि कदाचित् स्वगोत्रानभिज्ञता समक्षमीक्ष्यते किं पुनर्योषितां परकुलप्रसूतानाम्। अतः पतिगोत्रानभिज्ञानं जवालाया नातीव विस्मयमावहति।

ये पुनराचक्षते—ब्राह्मणादिविभागो न जन्मकृतः, परन्तु गुणकर्म्मकृत एव। मनुष्येषु य एव सत्यसंयमादिगुणविशेषसम्पन्नः, स एव निष्प्रत्यूहं ब्राह्मण्यमधिकरोति, न तत्र जन्म वंशगौरवं वा कथञ्चिदपेक्ष्यते। सत्यकामश्च तादृशगुणसम्पत्तिमात्मनोऽदर्शयत् सत्यवादितया; तत एव विचारपरो गुरुस्तं ब्राह्मणेनान्वग्रहीदिति। एतदपि मनोरथमात्रं मन्यन्ते मनीषिणः, यतः सत्यवादिता नैव ब्राह्मणत्वस्य प्रयोजिका, अपि तु ब्राह्मणत्वमेव सत्यवादितायाः प्रयोजकम्। ब्राह्मणो हि सत्यं ब्रूयात्, नानृतमित्येवमेव शास्त्रीयो विधिरुपलभ्यते, न खलु सत्यवादी ब्राह्मणो भवतीत्येवं विधिः कुत्रापि परिलक्ष्यते। ततश्च केवलसत्यवदनमात्रेण सत्यकामस्य ब्राह्मणत्वावधारणं कुतः सम्भवतीति सुधीभिरेव विचारणीयम्।

ये पुनः परोत्कर्षामर्षिमनसः परदोषाविष्करणे स्फुटपद्मपलाशचक्षुषो भवन्ति, परगुणोद्वीक्षणे च नितरां गजनिमीलिकामाचरन्ति, ते तु स्वतन्त्राः—न गुरूनाद्रियन्ते, न साधूनपेक्षन्ते, न सत्पथमवलोकयन्ते, न साधुसमाचारं बहुमन्यन्ते, दुष्टमपि स्वपक्षं नोपलक्षयन्ते, प्रत्यक्षमपह्नुवाना अपि न विलज्जन्ते, दुर्व्वारगर्व्वसर्व्वस्वतया च परं कोलाहलमारभन्ते; नितरामुपेक्षणीया एव ते वराकाः। वयन्तु प्रतीमः—जवालासौ नाब्राह्मणी नापि कामकारिणी स्वैरिणी, सत्यकामोऽपि नाब्राह्मणतनयः, नाप्यकार्य्ये दुराग्रह इत्येवं यथोक्तश्रुतिवचनादेवावधार्य्यत इति। अतः परमपि यदि केचन विवदितुमिच्छन्ति, तान् स्वपक्षसमर्थनाय सोत्कण्ठमर्थयामह इति शिवम्।

---

# विद्याप्रस्थानम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—कालीघट्टवास्तव्यः श्रीगुरुपदहालदारः ]

मन्दाधिकारिणो यथा, क्रियायोगेणापि येषां विवेकख्यातिरविप्लवा न भवति। तान् प्रति शास्त्रं विरोधाय योगाङ्गान्यपि प्राह—यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इति। एतान्यष्टौ योगस्य साधनानि भवन्ति। योगमारुरुक्षुभिः ससाधनः क्रियायोगो यथाशास्त्रमनुष्ठेय इत्यभिप्रायेण तपःस्वाध्यायेश्वरप्रणिधानादीनि योगसाधनैः सह पिण्डीकृत्य योगज्ञानोभयसाधनतया सर्व्वमेव मन्दाधिकारिभ्यो गृहस्थादिभ्यश्च तेभ्य उपदिश्यन्ते।

कर्म्मणा सहिताज्ज्ञानात् सम्यग् योगोऽभिजायते।
ज्ञानञ्च कर्म्मसहितं जायते दोषवर्जितम्॥

इत्यादिः स्मृतिरेव क्रियादीनां योगसाधनतामभिधत्ते। "योगोऽपि ज्ञानहीनस्तु न क्षमो मोक्षकर्म्मणी"त्यादिश्रुतिश्च योगस्य ज्ञानसाधनतां स्पष्टमेव व्यनक्ति। एतेषां साधनानां द्वितीयपादोक्तयमादीनि देहप्राणेन्द्रियाणां निग्रहरूपाणि पञ्च बहिरङ्गाणि, तृतीयपादोक्तध्यानादीनि तु चित्तस्य निग्रहरूपाणि त्रीण्यन्तरङ्गाणीति मन्तव्यम्।

योगाङ्गानां स्वरूपं सूत्रकारेण दर्शितं भाष्यकारादिभिश्च व्याख्यातम्। तत्र ये योगिनं निषिद्धकर्म्मभ्यो यमयन्ति निवर्त्तयन्ति ते यमा अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहरूपा भवन्ति। अहिंसा भूतानामनभिद्रोहः। तदेव पौराणिका 'अहिंसा वाङ्मनःकायैः परपीडानिवर्त्तनमि'त्याचक्षते *। सत्यादीनामहिंसाप्रयोजनकत्वं भाष्यटीकादिषु प्रतिपादितम्।

---

* अहिर्बुध्न्यसंहिता।

यथा नागपदेऽन्यानि पदानि पदगामिनाम् ।
एवं सर्वमहिंसायां धर्म्मार्थमपि धीयते ॥

इत्यादिस्मरणात्। तदेव योगिनः सर्वेभ्यो हिंसानिदानेभ्यो निवर्त्तमानास्तपःस्वाध्यायध्यानवन्त आत्मानमुपयन्ति ।

प्राणवियोगादिप्रयोजनकव्यापारात्मिका हिंसा। सा च स्वयं कृता, कुरु कुर्व्विति प्रयोजनानुकूलव्यापारेण कारिता, साधु साध्विति मतानुमोदिता चेति त्रिधा। त्रैविध्यमेतच्च परस्परव्यामोहनिवारणाय शास्त्रेषु व्यवस्थापितम्। अन्यथा मन्दमतिर्मन्येत न मया स्वयं निष्पादिता हिंसेति नास्ति मे पापमिति। तदुक्तम्—

भोक्तानुमन्ता संस्कर्त्ता क्रयविक्रयिहिंसकाः ।
उपहर्त्ता घातयिता हिंसकाश्चाष्टधाऽधमाः ॥ इति ।

एकैका हिंसा लोभक्रोधमोहभेदेन पुनस्त्रिविधा भवति। लोभक्रोधमोहाश्च मृदुमध्यतीव्रत्वेन त्रिप्रकाराः। मृदुमध्यतीव्रा अपि पुनस्त्रिप्रकाराः—मृदुमृदुर्मध्यमृदुस्तीव्रमृदुः, मृदुमध्यो मध्यमध्यस्तीव्रमध्यः, मृदुतीव्रो मध्यतीव्रस्तीव्रतीव्रश्चेति। एवं लोभो नवविधस्तथा क्रोधमोहाविति तत्पूर्व्विका हिंसाः सप्तविंशतिधा भवन्ति। अतः कृतकारितादिभेदेनापि प्रत्येकं सप्तविंशतिधेति हिंसाया एकाशीतिर्भेदाः। सर्व्वास्ता हिंसाः प्राणिनां वधबन्धनक्लेशव्यापारत्वाद् दुःखाज्ञानानन्तफला इति योगिनस्ताभ्यः सर्व्वाभ्य एव प्रतिनिवृत्ता भवन्ति। यागादिषु वैधहिंसा शास्त्रेषु व्यवस्थापिता। भाष्ये तु तस्या अपि त्यागो महाव्रतत्वेन कल्पितः, यागादिकर्म्मणि योगिनां प्रयोजनाभावात्। स्मृतिश्च—

हिंसा चैव न कर्त्तव्या वैधहिंसा तु राजसी ।
ब्राह्मणैः सा न कर्त्तव्या यतस्ते सात्त्विका मताः ॥ इति ।

ननु, विधात्रैव भक्षणार्हा भक्षयितारश्च निर्म्मिता इति न्यायेन हिंसायां प्राणिनां कामचारः स्वाभाविक एव। तथा हि प्राणसंवादो-

पनिषदि श्रूयते—'स ( प्राणः ) होवाच किं मेऽन्नं भविष्यतीति। यत्किञ्चिदिदमा श्वभ्य आ शकुनिभ्य इति होचुरि'ति।' भवति च तदनुवादिनी स्मृतिः—'प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयदि'ति। योगिनश्च व्रीहियवादिना प्राणान् बिभ्रति, व्रीहियवादीनामपि जीवयोगोऽस्ति। अत एव हिंसाया अनिष्टानुबन्धित्वं न युक्तमिति चेत्? मैवम्। सैव श्रुतिः साधारणभूतानां वृत्त्यर्थमुद्दिष्टा। विश्वस्य भूतिसंवर्द्धनाय सर्वे प्राणिनो नित्यं मत्स्या इव परस्परं भक्षयन्तीत्यत्र न हिंसादोषः प्रजापतेरैकत्वेन जगत्कल्पितत्वात्। स्मृतिश्च तत्र श्रुतिसौहार्द्दात्—'प्राणस्यान्नमिदं सर्व्वमि'त्यनेन न्यायप्राप्तमर्थानुवादमुदाहरति न तु प्राणिहिंसां चोदयति, हिंसाया अचोदितत्वात्। योगिनः खलु शरीरस्थितिहेत्वर्थमल्पसत्त्वा हन्यन्त इति स्थितिविहितं विज्ञाय भूरिसत्त्वानां देहवतामभिद्रोहञ्च विहाय व्रीहियवादिना प्राणान् बिभ्रति, बीजादिहिंसाया अपरिहार्य्यत्वाच्च तद्गतपापप्रक्षालनाय प्राणायामादिकमाचरन्ति। 'अनस्थ्नां चैव हिंसायां प्राणायामेन शुध्यती'*त्येवमादिस्मृतेः।

बहिःसाधनसम्पन्ने श्रौते कर्म्मणि बीजादीनां जीवनाशात् कीटादीनाञ्च वधसम्भवात् तस्य पापफलत्वं सांख्यवृद्धादिभिरुक्तम्। तदेवं भूतोपघातभीरवः सत्त्वबहुला भूरीष्टानुबन्धी यज्ञः परपीडादिद्वारेणैव सम्पादयितव्य इति ततोऽपि विरक्ता भवन्ति। त एवमाहुः। यद्यपि हिंसा यज्ञाङ्गभूता दैवानुष्ठानं तथापि सात्त्विका अहिंसावदानाय बहिःसाधनसम्पादनेभ्यो यागादिभ्यो निवर्त्तेरन्। ये तु मनुष्या रजोबहुलास्तेषां शास्त्रीया हिंसाप्रवृत्तिरल्पाल्पा दृश्यते। श्रुतिश्च तान् सत्त्वनिकायत्वे समुन्निनीषतीति केवलं क्रत्वर्थमेव तेषां हिंसां नियम्य प्रोक्षितप्राणिवधमभ्युपजानाति। तत्रापि यस्य बुद्धौ सत्त्व-

---

* मनुसंहिता—११।१४२।

सच्चिवं रजो वर्त्तते, स पशुवधोपयाचितकाले न,फलसम्पत्तिरिति मन्यमानः पिष्टमयीं पशुप्रतिकृतिं कृत्वा कुष्माण्डादिकं वानुकल्पं विधाय देवताभ्य उपहरति, न तु प्राणिनां वधबन्धनादिजनितं क्लेशव्यापारं चिकीर्षति। एवं यज्ञादिकर्म्मणा तेषां चित्तशुद्धिर्भवति, ततश्च जिज्ञासा प्रवर्त्तते। 'ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'ति श्रुतेः। तदनन्तरं ते भूतोपघातपरात् कर्म्मणो विरक्तास्तपःस्वाध्यायध्यानवन्त आत्मन्येवात्मानं पश्यन्ति। ये तु मनुष्यास्तमोबहुलास्ते पिशाचाः शास्त्रविगर्हिता आत्मसुखेच्छया देवोद्देशं विनैव प्राणिनं व्यापाद्य तन्मांसभक्षणे प्रवृत्ता दृश्यन्ते। वैधहिंसातिरिक्तहिंसायाः प्रतिषिद्धत्वात्, तेषां बलवदनिष्टसाधनत्वं दुर्व्वारं भवति।

ननु, 'अग्नीषोमीयं पशुमालभेत', 'वायव्यं श्वेतमालभेत', 'तस्माद् यज्ञे वधोऽवधः' इत्यादिश्रुतिजातैश्चोदिताया वैधहिंसाया अनिष्टानुबन्धित्वं कथं सम्भवति? विध्यर्थप्रेरणया यज्ञाङ्गभूतहिंसानामनिष्टानुबन्धित्वानाक्षेपात्? तन्न युक्तम्।

'आततायिनमायान्तं हन्यादेवाविचारयन्।
नाततायिवधे दोषो हन्तुर्भवति कश्चन॥'

इत्येवमादिस्मृतेरेकवाक्यतया च वैधहिंसाया इष्टानुबन्धित्वमेव समुपपन्नमिति चेत्?

मैवं वोचः। 'मा हिंस्यात् सर्वा भूतानी'ति श्रुत्या प्रभूतपुण्यप्रापककर्म्मणि पशुयागेऽपि हिंसाया अनिष्टसाधनत्वं ज्ञाप्यते। अनिष्टस्य विशेषस्तु तत्र प्रधानकर्म्मणावापगमनम्। यथा गोधूमैः सह समुत्पन्नानां तृणबीजानां तैः सह कुसूलप्राप्तिः, कुसूलगतानां तेषामस्वातन्त्र्येण गोधूमैः सह चावापगमनम्, तथा प्रधानकर्म्मणा यागादिना सहैव तदङ्गीभूतप्राणिहिंसादीनामपि बलवदनिष्टानुबन्धित्वम्। यद्यपि प्रधानोपकारो यागादीनां तदङ्गत्वेन विधानाद् भवति, तथापि 'मा हिंस्यात् सर्वा भूतानी'तिनिषेधादनर्थसाधनत्वमपि तत्कार्य्यस्यैव।

"सांख्यैः प्रकृतेः परिणत्यात्मकोऽसौ (कालः) इत्युच्यते ; यदाहुः :—

परिणामः पृथग्भावो व्यवस्थाक्रमतः सदा ।
भूतेष्ववृत्तमानात्मा कालरूपो विभाव्यते ॥ इति ।"

( श्रीमृगेन्द्रवृत्तिदीपिका—१० प्रकरणम्-१४कारिका )

एवं च प्रकृतिपरिणतिः काल इति केषाञ्चित् सांख्याचार्य्याणां मतमासीदिति प्रतीयते। अत एवैतस्य मतस्य खण्डनावसरे उक्तम्— "सांख्याभ्युपगतस्तावत् कालो न युक्तः। यतो भोक्तुर्भोगाधिकरणत्वेन स्थितायास्तनोर्वृद्धितरुणाद्यवस्थयाऽनुमीयते परिणतिव्यतिरिक्तः कालः" इत्यादि।

पराशरसंहिताभाष्ये श्रीमाधवाचार्य्यैरभिहितम्—"प्रधानवादे पञ्चविंशतितत्त्वेभ्यो बहिर्भूतस्य कालतत्त्वस्याभावात् प्रधानमेव कालशब्देन व्यवह्रियताम्" ( १अ० २० ) इति।

तथाच प्रधानशब्दवाच्यायाः प्रकृतेरेव कालत्वं कैश्चित्सांख्यमतानुयायिभिरङ्गीकृतम्।

"सदेव सोम्येदमग्र आसीत्" ( छा० उ० ६।२।१ ) "तद्धेदं तर्ह्यव्याकृतमासीत्" ( वृ० उ० १।४।७ ) इत्यादिश्रुतिषु प्रलये कालव्यवहारः श्रूयते। वैशेषिकाभिमतानां कालोपाधीनां जगतः स्थितिकाल एव सम्भवेन वाचस्पतिमते प्रलये कालव्यवहारः कथङ्कारमुपपद्यताम्? प्रकृतिपरिणतिः काल इति मते प्रलयेऽपि प्रकृतेः समपरिणामसत्त्वेन कालव्यवहार उपपद्यते। प्रकृतिरेव सांख्यनये काल इति माधवाचार्य्यमते प्रलये कालव्यवहारः सुतरामुपपन्नः, प्रलयेऽपि प्रकृतेः सत्त्वादिति विभावयन्तु सुधियः।

"द्विविधं च सांख्यं निरीश्वरं सेश्वरञ्च" ( शास्त्रदीपिका १।१।५)।

सेश्वरसांख्यमतम्। तत्र कापिलं मतं निरीश्वरम्। पातञ्जलं मतं सेश्वरम्। सेश्वरनिरीश्वरयोः सांख्ययोर्यद्यपि परस्परं सम्मति-

पत्तिसत्त्वेऽप्यस्ति कुत्रचिद् विमतिरपीति विज्ञानामतिरोहित-मेतत्। अस्ति खलु कालविषये तयोर्विमतिः। तत्र निरीश्वरसांख्यानां मतं पूर्वत्र प्रदर्शितम्।

सेश्वरसांख्यसिद्धान्तानुसारिणस्तु पातञ्जलाः क्षणात्मकं कालं वस्तु-भूतमङ्गीकृत्य तदतिरिक्तानां मुहूर्त्तयामाहोरात्रप्रभृतिरूपाणां सर्वेषां कालानां बुद्धिमात्रपरिकल्पितत्वमभ्युपगच्छन्ति। श्रीविज्ञानभिक्षुणा योगवार्त्तिके "क्षणतत्क्रमयोः संयमाद् विवेकजं ज्ञानम्" इति (पातञ्जलदर्शने ३।५२) सूत्रस्य व्यासभाष्यव्याख्यानावसरे समुपवर्णितम्—

"इदानीं क्षणातिरिक्तः कालो नास्ति मुहूर्त्तादिरूपो महाकाल-पर्य्यन्त इति प्रसङ्गात् स्वशास्त्रसिद्धान्तमवधारयति।" इति। "मुहूर्त्ता-होरात्रादयो बुद्धिकल्पितसमाहार एव" इति च।

अतत्यं व्यासभाष्यन्त्वेवम्:—

"क्षणतत्क्रमयोर्नास्ति वस्तुसमाहार इति बुद्धिसमाहारो मुहूर्त्ताहो-रात्रादयः। स खल्वयं कालो वस्तुशून्यो बुद्धिनिर्माणः शब्दज्ञानानु-पाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इवावभासते। क्षणस्तु वस्तुपतित" इत्यादि।

वस्तुपतितो वास्तव इत्यर्थ" इति तत्त्ववैशारद्यां वाचस्पति-मिश्राः।

विज्ञानभिक्षुणाऽत्रैव सूत्रे क्षणस्यास्थिरत्वं तस्य सत्त्वादीनां गुणानां परिणामविशेषरूपत्वं द्रव्यत्वं चेति भाष्याक्षरेभ्यः प्रतिपादि-तम्। तन्मते "कालनित्यत्वश्रुतिस्मृतयश्च प्रवाहरूपकालपराः।" (योगवार्त्तिके तृतीयपादे—५१ सूत्रे)

"क्षणतत्क्रमयोः संयमात्तयोः साक्षात्करणम्" इति व्यासभाष्य-दर्शनात् क्षणसाक्षात्कारस्य ध्यानधारणासमाधिरूपसंयम*जन्यत्वप्रतीत्या

* "देशबन्धश्चित्तस्य धारणा।" १। "तत्र प्रत्ययैकतानता ध्यानम्"। २। "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः"। ३। "त्रयमेकत्र संयमः" ॥४॥ [योगदर्शने तृतीये विभूतिपादे]

क्षणानां योगिप्रत्यक्षगम्यताऽङ्गीकृता । एवञ्च पातञ्जलदर्शने तत्त्वभूते क्षणरूपे काले स्वीकृतेऽपि तस्य योगजप्रत्यक्षविषयत्वकथनेन स्वमते लौकिकप्रत्यक्षाविषयत्वं सूचितम् । देवदत्तो वामेनाक्ष्णा पश्यती-त्युक्ते दक्षिणेन न पश्यतीतिवत् ।

कुमारिलभट्टो मुरारिमिश्रः प्रभाकरश्चेति त्रयो मीमांसकाः । एत एव क्रमेण भट्ट-मिश्र-गुरव उच्यन्ते । तत्र मुरारिमिश्रमतप्रतिपादकः कश्चिदपि पदार्थविषयको ग्रन्थो नाधुनाऽपि दृष्टिविषयमधिगत इति कालविषये तदीयं मतं विशिष्य प्रतिपादयितुं न शक्यते । यद्यपि मद्रासनगरात् प्रकाशिते "Oriental Research" नाम्नि पत्रे मुरारि-मिश्रकृतं मीमांसासूत्रव्याख्यानम् अर्थवादाधिकरणात् (१।२।१) आरभ्य किञ्चित्प्रकाशितं, तथापि तत्र स्वमतसिद्धानां पदार्थानां चर्चा नैव दृश्यते ; तद्व्याख्यानं मुरारिकृतमन्यकृतं वेति बहवः संशेरते च ; व्याख्याने च तत्र लेखकादिदोषेण बहूनि स्थलानि दुर्बोधप्रायाणीति न ततः कथञ्चिदपि मुरारिमिश्रसम्मतानां पदार्थानां समधिगमसम्भावना ।

भाट्टमते तावत्कालस्य द्रव्यत्वमेवाङ्गीकृतम् । तत्र चैतन्मानमेयोदये

भाट्टमीमांसक-मतम् ।

प्रमेयपरिच्छेदारम्भे —

... ... ... ...

परिमाणगुणाधारे द्रव्यं द्रव्यविदो विदुः ॥६॥
पृथिवी सलिलं तेजः पवमानस्तमस्तथा ।
व्योमकालदिगात्मानो मनः शब्द इति क्रमात् ॥७॥
एकादशविधं चैतत् कुमारिलमते मतम् ।

...

भाट्टचिन्तामणावपि—

'द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोऽन्धकारशब्दरूपा-ण्येकादश" इत्युक्तं प्रत्यक्षसूत्रे (१।१।४) ।

भाट्टसिद्धान्ते कालस्य विभुत्वमत एवात्मवन्नित्यत्वञ्च स्वीक्रियते ।

तस्य चैकस्याप्युपाधिवशात् क्षणदिनमासादिभेदव्यवहारः। तथाचोक्तं मानमेयोदये :—

"कालस्यापि विभुत्वेऽप्यौपाधिको भेदव्यवहारोऽस्ति। स यथा :— पञ्चदशनिमेषाः काष्ठा। ताभिस्त्रिंशता मुहूर्त्तः। ते त्रिंशदहोरात्रः। तैस्त्रावद्भिर्मासः। तैर्द्वादशभिः संवत्सरस्तैश्च क्रमेण युगादय इति।"

"स च कालः षडिन्द्रियग्राह्यः" इति मानमेयोदयकाराः। अद्वैतसिद्धौ परिच्छिन्नत्वहेतूपपत्तिप्रस्तावे श्रीमत्परमहंसपरिव्राजकाचार्य्यमधुसूदनसरस्वतीपादैरपि कालस्य प्रत्यक्षविषयत्वं मीमांसकसम्मतमिति प्रतिपादितं :—

"कालस्य च रूपादिहीनस्य मीमांसकादिभिः सर्वेन्द्रियग्राह्यत्वाभ्युपगमात्" * इति।

लघुचन्द्रिकाकारैः श्रीमद्गौडब्रह्मानन्दस्वामिपादैरत्र विशेषोऽभिहितः :—

"'न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते।'

इति मीमांसकोक्तेर्ज्ञानं सर्वं किञ्चित्कालावच्छिन्नमेव स्वविषयं

---

* मीमांसकमते षडेवेन्द्रियाणि। "बाह्यं पञ्चविधं, घ्राणरसनचक्षुस्त्वक्श्रोत्रात्मकम्। आन्तरं त्वेकं मनः।" इति शास्त्रदीपिका (१।१।४)। "तच्च षड्विधम्। घ्राणरसनचक्षुस्त्वक्श्रोत्रमनोभेदादि"ति भाट्टचिन्तामणिः (१।१।४)। "कानि पुनरिन्द्रियाणि? घ्राणरसनचक्षुस्त्वक्श्रवणानि बाह्यानि, आन्तरन्तु मनः।" इति प्रकरणपञ्चिका (५म प्रकरणम्)।

"प्रत्यक्षगम्यतामेव केचित्कालस्य मन्वते।
विशेषणतया कार्य्यप्रत्यये प्रतिभासनात्॥"

[इति न्यायमञ्जर्य्याम् १५६ पृष्ठे।]

अत्रैवकारेणानुमित्यादौ सर्वत्र विषयविशेषणतया कालस्य न भानमिति सूचितम्। इदं मतं प्रायो भाट्टमीमांसकानामिति प्रतिभाति। तैः खलु "अव्यतिरेकश्चार्थेऽनुपलब्धे" (जैमिनिसूत्रे १।१।५) इति सूत्राक्षरव्याख्यानेन

गृह्णाति। तत्र स्वाधिकरणक्षणावच्छिन्नत्वेन गृह्णातीत्युत्सर्गः। अत एव धारावाहिकज्ञानस्थले ज्ञानानां स्वस्वाधिकरणक्षणविशिष्टतया स्वस्वविषयग्राहित्वेनाज्ञातज्ञापकत्वमिति मीमांसकाः। तस्य बाधे तु सम्भवत्क्षणान्तरावच्छिन्नत्वेन, यथा,—पाकरक्ते घटे 'श्यामोऽयमि'ति धीः पाकपूर्वक्षणावच्छिन्नत्वेन श्यामत्वं गृह्णाति, स्मृतिस्तु स्वकारणधीगृहीतकालावच्छिन्नं स्वविषयम्।" इति।

श्रीमद्गौडब्रह्मानन्दसरस्वतीमहाशयैरयमेवार्थः स्वप्रणीतायां मीमांसाचन्द्रिकायामौत्पत्तिकसूत्रे (१।१।५) प्रतिपादितः * :—

"क्षणस्यातीन्द्रियत्वेऽपि ज्ञानसामान्यसामग्रीबलाज्ज्ञानमात्रविषयकत्वे बाधकाभावात्। तदुक्तम् :—

---

यथार्थमगृहीतग्राहि ज्ञानं प्रमाणमिति" (शास्त्रदीपिका) प्रमालक्षणमभ्युपगम्य धारावाहिकप्रत्यक्षस्थलेऽस्य लक्षणस्याव्याप्तिमाशङ्का कालस्य प्रत्यक्षत्वमाश्रित्य समाहितम्। तदुक्तं भाट्टचिन्तामणौ तर्कपादे चतुर्थे सूत्रे—

"एवं चाज्ञातविषयकं बाधकज्ञानरहितं ज्ञानं प्रमेति फलितम्। अनेनैवाशयेनागृहीतग्राहित्वं प्रामाण्यमित्याचक्षते। नचैवं गृहीतविषयकधारावाहिकज्ञानस्याप्रामाण्यप्रसङ्गः, कालस्य षडिन्द्रियवेद्यत्वेन पूर्वक्षणविशिष्टघटस्य विषयीकरणेन तादृशस्योत्तरज्ञानाविषयतयाऽनधिगतार्थविषयकत्वसम्भवात्।" शास्त्रदीपिकादावपि स्फुटमेतत्। धारावाहिकानुमित्यादीनामसम्भवेन स्मृतेः प्रामाण्यस्य चानिष्टत्वेन तत्राव्याप्तेरभावेन न तासु कालस्य विशेषणतया भाननियमः सप्रयोजनः।

अपरे पुनर्भाट्टमतानुयायिनो ज्ञानमात्रे कालस्य विषयविशेषणतया भानमभ्युपयन्ति—इत्यनुपदमेव स्पष्टीभविष्यति।

* काशीस्थराजकीयसरस्वतीभवन-(Government Sarasvati Bhavan Library)-स्थितहस्तलिखितपुस्तकादस्माभिरेतत् प्रदर्शितम्, मीमांसाचन्द्रिकाया अद्याप्यमुद्रितत्वात्। अधुना तु सरस्वतीभवनादेव मुद्रयितुमुपक्रान्ता।

'न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते †।' इति।

क्षणस्य स्वातन्त्र्येण प्रत्यक्षयोग्यता नास्ति, तस्य स्वातन्त्र्येणेन्द्रियायोग्यतया तैः सन्निकर्षासम्भवादिति सूचनायात्र क्षणस्यातीन्द्रियत्वमुक्तम्। एवं च ज्ञानसामान्यसामग्रीबलेन क्षणस्य सर्वेषु ज्ञानेषु विषयविशेषणतया भानमिति पर्य्यवसितम्।

प्राभाकर-मीमांसकमतम्।

प्राभाकरमते कालस्य द्रव्यत्वमेकत्वमतीन्द्रियत्वं विभुत्वमुपाधिभेदेन च क्षणादिव्यवहारहेतुत्वमित्यादिकं सर्वं वैशेषिकसिद्धान्तवदङ्गीक्रियते।

श्रीरामानुजाचार्य्यविरचिते तन्त्ररहस्ये (Gaekwad's Oriental Series, No XXIV) प्रमेयपरिच्छेदे "तत्र चाभ्युपगमसिद्धान्तन्यायेन काणादतन्त्रसिद्ध एव प्रमेयवर्गोऽङ्गीक्रियते, तस्य तत्प्रतिपादनार्थं प्रवृत्तत्वात्। न तु पृथगत्र व्युत्पाद्यते। तत्रानभिमतांशो निराक्रियते। विशेषांशस्तु व्युत्पाद्यते।" इत्युपक्रम्य—

"तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नव" इति द्रव्येषु काल उद्दिष्टः। इतः परं कालविषये काऽपि चर्चा कुत्रापि न कृता; तथाच प्राभाकराणां कालविषये सर्वथा वैशेषिकतन्त्रसिद्धान्तसमाश्रयणं सुस्पष्टं प्रतीयत इति कालविषये वैशेषिकसिद्धान्तेनैव प्राभाकरसिद्धान्तो गतार्थ इति न तत्र पृथङ्निरूपणापेक्षा वर्त्तते। वैशेषिकसिद्धान्तश्चैतद्विषयेऽग्रे व्यक्तीभविष्यति।

तन्त्ररहस्यं खलु प्राभाकरसिद्धान्तप्रतिपादकः प्रकरणग्रन्थविशेष इति व्यक्तं बहुज्ञानाम्।

---

† अयमर्द्धश्लोकः काश्मीरकसदानन्दप्रणीतायामद्वैतब्रह्मसिद्धौ प्रथममुद्गरप्रहारेऽपि दृश्यते; निम्बार्कमतानुसारि-श्रीनिवासाचार्य्यविरचिते वेदान्तकौस्तुभाख्यब्रह्मसूत्रभाष्ये जिज्ञासासूत्रे-(१।१।१)ऽयं स्मृतिरित्युपन्यस्तः। आकरस्तस्य नोपलभ्यते।

भगवच्छङ्कराचार्य्यसम्मतेऽद्वैतसिद्धान्ते ब्रह्मातिरिक्तस्य वस्तुनोऽभावेन ब्रह्मातिरिक्तः कालः कश्चित्पारमार्थिको नैव विद्यते इति विदुषां नातितिरोहितमेतत्।

शाङ्कराद्वैतमतम्।

खण्डनखण्डखाद्ये चतुर्थपरिच्छेदे कारणलक्षणखण्डनप्रसङ्गेन वर्त्तमानत्वादिकं प्रत्याख्यातं श्रीहर्षेण—

"नियमे च प्राक्कालीनतयाऽभिधीयमाने प्रागित्यस्य व्यवच्छेद्यौ वर्त्तमानभविष्यत्कालौ प्राक्कालस्य व्यवच्छेदको विवेचनीयः, न च तद्विवेचनं शक्यम्" इत्यादिना।

यद्यपि पारमार्थिकः कश्चित्पदार्थः कालो नाम नाद्वैतवादिभिरङ्गीक्रियते तथापि कालव्यवहारस्य तैरप्यवश्यमुपपादनीयतया व्यावहारिकः कश्चित्कालोऽद्वैतसिद्धान्ते स्वीकार्य्यः। अत एव वेदान्तपरिभाषायाम् "अनधिगताबाधितार्थविषयज्ञानत्वमि"ति प्रथमप्रमालक्षणस्य धारावाहिकप्रत्यक्षेऽव्याप्तिवारणाय "नीरूपस्यापि कालस्येन्द्रियवेद्यत्वाभ्युपगमेन धारावाहिकबुद्धेरपि पूर्वपूर्वज्ञानाविषयतत्तत्क्षणविशेषविशिष्टविषयकत्वेन न तत्राव्याप्ति"रित्युक्तम्। अनेन हि ग्रन्थेन स्वसिद्धान्ते कालस्य सत्ता तस्य प्रत्यक्षविषयता चोक्ता। तत्रैव शिखामणिटीकायां कालस्य प्रत्यक्षज्ञान एव सर्वत्र विशेषणतया भानं न त्वनुमित्यादिपरोक्षज्ञानेऽपीति प्रतिपादितम्।

परन्त्वत्रेदं चिन्त्यम् :—सृष्टिप्रतिपादिकासु श्रुतिषु कुत्रापि कालसृष्टिर्न श्रूयते। तैत्तिरीयश्रुतौ [२।१]—

"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नात् पुरुषः।"

इति भूतभौतिकानामेव सृष्टिः प्रपञ्चिता। छान्दोग्ये षष्ठप्रपाठकस्य द्वितीयखण्डे तेजऽबन्नानामेव सृष्टिरुक्ता।

( क्रमशः )

**सङ्केतशक्यसम्बन्धविभिन्नसहकारिणी ।**
**वाच्यलक्ष्यातिरिक्तार्थधीहेतुर्वृत्तिरञ्जना ॥१॥**

व्यञ्जनाया लक्षणमाह—सङ्केतेति । सङ्केतशक्यसम्बन्धाभ्याम् अभिधालक्षणासहकारिभ्यां विभिन्ना अतिरिक्ता वक्ष्यमाणरूपाः सहकारिणो यस्याः सा । किञ्च, वाच्यलक्ष्याभ्यां शक्तिभक्तिप्रतिपाद्याभ्याम् अतिरिक्तस्य व्यङ्ग्यार्थस्य हेतुर्बोधकारणम् अञ्जना व्यञ्जना ॥१॥

**अस्त्रमन्त्रितबाणस्य वृत्तिवद्विविधार्थकृत् ।**
**एषा शब्दगतैवार्थानाश्रित्यापि प्रवर्त्तते ॥२॥**

वृत्तिद्वयाद्विलक्षणतामाह—अस्त्रेति । अस्त्रेण वायव्यादिना मन्त्रितस्य कृताभिमन्त्रणस्य बाणस्य वृत्तिवद् विविधार्थकृत् अनेकार्थबोधनपटुः युगपदिति शेषः । एषा व्यञ्जना शब्दगतैव किन्तु अर्थान् वाच्यलक्ष्यव्यङ्ग्यानाश्रित्यापीत्यर्थः ॥२॥

**अस्याः कारणतां शब्दा भजन्त्यर्थास्तथोभये ।**
**वक्तृवाक्यादिवशिष्ट्यं सहकारि निरूपितम् ॥३॥**

अस्या इति । कारणतां मूलताम्, तेनैषा त्रिविधेत्यर्थः ॥३॥

**वर्णं पदं तदंशश्च वाक्यबन्धश्च संश्रिता ।**
**प्राधान्याद् व्यञ्जना वृत्तिः शब्दधर्मोऽर्थगापि सा ॥४॥**

शब्दशक्तिमूलाया भेदानाह—वर्णमिति । तदंशं प्रकृतिप्रत्ययादिकम्, बन्धं वृत्तादिकम् ॥४॥

**देशकालप्रकरणवक्तृवाक्याभिधेयकाः ।**
**सान्निध्यकाकुबोद्धव्या व्यञ्जनासहकारिणः ॥५॥**

अर्थशक्तिमूलायाः सहायानाह—देशेति । "काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः" इत्यमरः ॥५॥

**पञ्चाननो विजयते हिमवद्भूविहारकृत् ।**
**अत्र व्यञ्जनयान्योऽर्थस्तत्साम्यं वा प्रतीयते ॥६॥**

क्रमेणोदाहरति—पञ्चाननेति । हिमवद्भूविहारकृत् हिमवद्भूः पार्वती हिमाचलभूमिश्च, तत्र विहारकृत् पञ्चाननः शिवः सिंहश्च । पञ्चं विस्तीर्णमाननं यस्येति व्युत्पत्तेः । अत्र शिवस्य सिंहपक्षो व्यङ्ग्यः । प्रकृताप्रकृतयोः साम्यं वा व्यङ्ग्यम् । अत्र श्लिष्ट-शब्दयोः परिवृत्त्यसहत्वाच्छब्दशक्तिमूलत्वम् ॥६॥

**भाति भूतिकृतच्छायः प्रभुः सर्वप्रियङ्करः ।**
**इतरोऽप्यत्र वाक्यार्थः शब्दार्थव्यक्तिकल्पितः ॥७॥**

सूचिकटाहन्यायेनादावुभयशक्तिमूलामुदाहरति—भातीति । भूति-कृतच्छायः भस्मकृतशोभः सम्पत्तिकृततापाभावश्च सर्वप्रियङ्करः लोक-प्रियकर्ता जनपदप्रियकर्ता च प्रभुः शिवो राजा च भातीत्यन्वयः । अत्राद्यपदस्य परिवृत्त्यसहत्वाद् द्वितीयतृतीययोः परिवृत्तिसहत्वाच्च उभयशक्तिमूलत्वमिति बोध्यम् । शेषं पूर्ववत् ॥७॥

**शिवप्रासादशिखरे सानन्दान् पश्य पक्षिणः ।**
**अत्र देशविविक्तत्वमर्थादेव प्रतीयते ॥८॥**

शिवेति । अत्र पक्षिणां सानन्दत्वात् त्रासाभावो गम्यते, तेन च जनसञ्चाराभावप्रतीतिः ततश्च पूजोपयोगि स्थलमिति गम्यते ततो गन्त-व्यमिति ॥८॥

**रेवावारीशलिङ्गानि पुष्पिता यत्र पादपाः ।**
**धन्यः स देश इत्यत्र पूजौत्सुक्यं प्रतीयते ॥९॥**

रेवेति । देशस्य धन्यत्वाभिधानात् पूजोपयोगिवस्तुगणनेन पूजाभिलाषित्वं व्यज्यते शिवभक्तिश्चेति ॥९॥

**माघादिभ्यत माघोऽयं यत्र रात्रिः शिवप्रिया ।**
**अत्र कालस्य वैशिष्ट्याद् व्रते भक्तिः प्रतीयते ॥१०॥**

देशवैशिष्ट्यमुक्त्वा कालवैशिष्ट्यमुदाहरति—माघेति । अघात् तापात् मा बिभ्यत चतुर्दशीसम्बन्धिन इत्यर्थः । अत्र मा बिभ्यतेत्युक्तो व्रतमहिमातिशयो व्यज्यते, तेन च व्रते भक्तिस्ततश्च शिवे भक्तिरिति कालस्य वैशिष्ट्यादसाधारण्यादित्यर्थः ॥१०॥

**शीघ्रमाहर वन्यानि पुष्पादीनि निशामुखे ।**
**शिवप्रियत्वं वन्येषु प्रस्तावादवगम्यते ॥११॥**

शीघ्रमिति । प्रस्तावात् प्रकरणात् । श्रोतृवक्तृबुद्धिस्थं प्रकरणम् ।

वन्येषु यादृशी प्रीतिर्वर्त्तते परमेशितुः ।
उत्तमेष्वपि नास्त्येव ग्रामजेषु तु तादृशी ॥

इति शिवगीतोक्तेरिति भावः ॥११॥

**वाटिकायां जनान् दूरान् कुरुतेत्याह शाम्भवः ।**
**विविक्तप्रियता तस्य वैशिष्ट्येन प्रतीयते ॥१२॥**

वाटिकायामिति । अत्र वक्तुः शाम्भवस्य वैशिष्ट्यात् शिवपूजार्थं विविक्तरुचिः प्रतीयते ॥१२॥

**शिवं पूजयताजस्रं जुषध्वं सुखमीप्सितम् ।**
**कार्य्यकारणभावोऽत्र वाक्यवैशिष्ट्यबोधितः ॥१३॥**

शिवमिति। अत्र हि तिङन्तवाक्यद्वयवैशिष्ट्यात् सुखे शिवपूजाजन्यत्वं व्यज्यते ॥१३॥

**शैवानां चेत् पुनर्जन्म सा हानिर्गिरिजापतेः।**
**अभिधेयस्य वैशिष्ट्याद्भाति कैवल्यदातृता ॥१४॥**

शैवानामिति। केवलस्याद्वितीयस्य भावः कैवल्यं निःश्रेयसम्, तद्दातृत्वं पशुपाशमोचकत्वमित्यर्थः ॥१४॥

**एकाकिना मया काशी गन्तुं शक्या कथं द्विजाः।**
**तदीयसहकारेच्छा सन्निधेरत्र गम्यते ॥१५॥**

एकाकिनेति। सन्निधेः जिगमिषूणां तेषां सहकारेच्छा ॥१५॥

**संसारकूपपतनं शम्भुभक्तस्य किं भवेत्।**
**अत्र काकुप्रभावेण व्यज्यते मुक्तिदातृता ॥१६॥**

संसारेति। अत्र किंशब्दकाकुर्बोध्या ॥१६॥

**मुमुक्षो भज भूतेशं संसारे मा मनः कुरु।**
**मुक्तिदातृत्वमत्रापि भाति बोद्धव्यपाटवात् ॥१७॥**

मुमुक्षो इति। बोद्धव्यपाटवात् सम्बोध्यवैशिष्ट्यादित्यर्थः ॥१७॥

**वाच्यमूला व्यञ्जनैषा लक्ष्यगा प्राक् प्रदर्शिता।**
**उदाहृतेषु दूरार्थभाने व्यङ्ग्यगताप्यसौ ॥१८॥**

वाच्यमूलेति। एषा उक्तप्रकारा व्यञ्जना वाच्यार्थमूला लक्ष्यगा लक्षणीयार्थगता प्राक् लक्षणानिरूपणे प्रदर्शिता लक्षणाप्रयोजनस्य तदेकगम्यत्वादिति भावः। उदाहृतेषु वाक्येषु दूरतोऽर्थभाने सति एकस्मादर्थादर्थान्तरं ततोऽप्यर्थान्तरमेवंविधे भाने सतीत्यर्थः। व्यङ्ग्यगता व्यङ्ग्यमूलाप्यसौ व्यञ्जना वेदितव्या ॥१८॥

विविधा वृत्तिरेकैव वैलक्षण्येऽपि वस्तुतः ।
इत्याहुः शाब्दिकास्तेषां भिन्नत्वे गौरवाद् भयम् ॥१८॥

विविधेति । वैलक्षण्येऽपि परस्परविलक्षणत्वेऽपीत्यर्थः । भिन्नत्वेऽनेकवृत्तिस्वीकारे ॥१८॥

नित्यं निवासनिरतौ गङ्गायां झषतापसौ ।
हिंसकाहिंसकौ दृष्टौ प्रकृतिर्हि बलीयसी ॥२०॥

नित्यमिति । अत्र गङ्गापदेन प्रवाह-तीरयोर्युगपदुपस्थित्या न वृत्तिभेद इति भावः ॥२०॥

गङ्गायां वासिनौ नित्यं वैसारिणमहाद्रुमौ ।
न विमुक्तौ जडतया प्रकृतिर्हि सुधीत्वदा ॥२१॥

गङ्गायामिति । वैसारिणो मत्स्यः । जडतया शीतलतया च । प्रकृतिरेव सुधीत्वदा सङ्गतिस्तु न तथेति भावः । अत्रापि गङ्गाशब्दः पूर्ववत् ॥२१॥

अत्र स्रोतसि तीरे च पावनत्वे च वर्त्तते ।
शक्तिभक्तिव्यक्तियोगाद् गङ्गाशब्दः सहैव यत् ॥२२॥

अत्रेति । शक्तियोगात् स्रोतसि, भक्तियोगात् तीरे, व्यक्तियोगात् पावनत्वे चेत्यर्थः ॥२२॥

अत्र तल्लेण वावृत्त्या सहानेकार्थबोधकः ।
गङ्गाशब्दस्ततो वृत्तेरभेदो नैव सिध्यति ॥२३॥

अत्रेति । तस्मात्वृत्त्योर्युगपदनेकार्थबोधकत्वेन वैयाकरणैः स्वोक्तत्वादिति ततो वृत्तेरभेदो नैव सिध्यति । भेदस्तु व्यक्त एवेति भावः ॥२३॥

इत्याहुरपरे भिन्ना भेदक्लृप्तौ हि गौरवम् ।
व्यवहारात् कार्यतश्च भेदो हि दुरपह्नवः ॥२४॥

इतीति। इति उक्तप्रकारेण। अपरे आलङ्कारिका आहुः। हि यस्माद् भिन्नायास्तस्या अभेदकल्पने गौरवं भवति व्यवहारात्. अभिधालक्षणाव्यञ्जनाशब्दैर्व्यवहृतत्वात् कार्य्यतः प्रातिस्विकार्थबोध-लक्षणाद् भेदो दुरपह्नवः निह्नोतुमशक्य इत्यर्थः ॥२४॥

अथाभिधा लक्षणा च वृत्तिरस्तु द्विधैव* सा ।
आद्यायां वा द्वितीयायां व्यञ्जनान्तर्भविष्यति ॥२५॥

मतान्तरमाह—अथेति। व्यञ्जनायाः शक्तौ भक्तौ वान्तर्भावो-ऽस्तु तथा सति लाघवं स्यादिति भावः ॥२५॥

दीर्घदीर्घाभिधा व्यङ्ग्यानर्थान् बोधयितुं क्षमा ।
यत्परं न्यायमाश्रित्य व्यङ्ग्यार्थस्यापि वाच्यता ॥२६॥

अभिधायामन्तर्भावं दर्शयति—दीर्घेति। दीर्घदीर्घेति। अति-शयार्थे द्विर्भावः। यत्परेति "यत्परः शब्दः स शब्दार्थः" तेन व्यङ्ग्यार्थो-ऽपि वाच्यार्थ एव ॥२६॥

अथवा लक्षणा व्यङ्ग्यं प्रत्याययतु केवला ।
उभे वा स्वस्वविषये न शङ्क्यं कोविदैरिदम् ॥२७॥

लक्षणायामन्तर्भावमाह—अथवेति। प्रत्याययतु बोधयतु। उभे वाच्यं व्यङ्ग्यं प्रत्याययतामित्यर्थवशाद् वचनपरिणामः ॥२७॥

सकृदुच्चरितन्यायाद्वाच्यार्थैविरताभिधा ।
व्यङ्ग्योपपादनेऽशक्ता दीर्घदीर्घा न सा ततः ॥२८॥

उक्तार्थे हेतुं दर्शयति—सकृदिति। "सकृदुच्चरितः शब्दः सकृदर्थं

* द्विधैवेयम् इति पाठान्तरम्।

गमयति", "शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभावः" इति न्यायाद् वाच्यार्थमात्रे विरामं प्राप्ताभिधा व्यङ्ग्यार्थबोधनेऽसमर्था भवति ततो दीर्घदीर्घा लक्ष्यव्यङ्ग्यप्रत्यायनसमर्था न भवतीत्यर्थः ॥२८॥

**यत्परन्यायपक्षे च शब्दार्थत्वं विधीयते ।**
**तात्पर्य्येण न वाच्यत्वं ततो व्यङ्ग्यत्वमस्तु तत् ॥२९॥**

यत्पर इति । "यत्परः शब्दः स शब्दार्थः" इति मतेऽपि तात्पर्य्य-विषयीभूतस्यार्थस्य व्यङ्ग्यत्वमेव विधीयते न तु वाच्यत्वमित्यर्थः ॥२९॥

**पौर्वापर्य्यादिभिर्भेदैर्व्यक्तिः शक्तेर्विलक्षणा ।**
**तत्रान्तर्भवितुं नार्हा धिया सम्यक् परीक्ष्यते ॥३०॥**

पौर्वापर्य्येति । शक्तेः पूर्वत्वम्, तदनन्तरभावित्वाद् व्यञ्जनाया अपरत्वम्, शक्तेरेकार्थबोधकत्वं व्यञ्जनायाश्च "गतोऽस्तमर्कः" इत्यादौ युगपदनेकार्थबोधकत्वम्, शक्तेः शब्दमात्राश्रयत्वं व्यञ्जनायास्त्वर्था-श्रयत्वमपीत्येवं विविधैर्विशेषैर्व्यञ्जनायाः शक्तावन्तर्भावो न युज्यते इत्यर्थः ॥३०॥

**शक्तिः पूर्वा परा व्यक्तिः, शक्तिर्बोधस्य कारणम् ।**
**चमत्कारस्य च व्यक्तिः, शक्तिः शब्दाश्रयापरा ॥३१॥**
**व्यक्तिर्नानाश्रया, शक्तिरेकार्था व्यक्तिरन्यथा ।**
**शास्त्रगम्या भवेच्छक्तिः प्रज्ञागम्यापरा मता ॥३२॥**
**सर्वाधिकारिका शक्तिर्व्यक्तिः सुध्यधिकारिका ।**
**एवं परीक्षितेऽत्यन्तं व्यक्तिः शक्तेर्विलक्षणा ॥३३॥**

शक्तिरिति ॥३१॥

व्यक्तिरिति ॥३२॥

सर्वेति। सर्वाधिकारिका सर्वगम्या व्यक्तिस्तु सुधीबोध्यैव ॥३३॥

**सम्बन्धनियतत्वेन लक्षणा तां न निर्वहेत्।**
**यतः स नार्थधारायां युगपद्वर्तितुं क्षमा ॥३४॥**

व्यक्तेर्लक्षणायामन्तर्भावो न भवतीत्याह—सम्बन्धेति। लक्षणायाः सम्बन्धनियतत्वेन व्यञ्जनायास्तथात्वाभावादिति भावः। यतः सा लक्षणा युगपदर्थधारायां "गतोऽस्तमर्कः" इत्यादौ अनेकार्थपरम्परायां युगपद् भवितुमशक्ता ॥३४॥

**न गतार्थानुमानेन व्यञ्जना व्याप्त्ययोगतः।**
**शब्दप्रमाणनिष्ठा तु व्यक्तिर्वृत्तिर्विलक्षणा ॥३५॥**

व्यञ्जनाया अनुमानप्रमाणेऽन्तर्भावो न भवतीत्याह—नेति। व्यङ्ग्य-व्यञ्जनयोः साहचर्यनियमाभावादनुमानप्रमाणेन सकलव्यङ्ग्यप्रत्ययानाम् असम्भवादित्यर्थः। फलितार्थमाह—शब्द इति ॥३५॥

**एवं प्रदर्शितास्तिस्रः पदानामेव वृत्तयः।**
**तासां प्रयोगेऽङ्गीकारात् प्राग्विभक्त्युदयात्तु न ॥३६॥**

एवमिति। पदानामिति न तु प्रातिपदिकानां धातूनां चेति भावः ॥३६॥

**विभक्त्यनुदयेऽर्थेषु सङ्केतस्तु न वार्यते।**
**शब्दस्य द्विविधस्यापि नामधातुप्रभेदतः ॥३७॥**

विभक्तीति। धातुप्रातिपदिकयोः सङ्केतमात्रसत्त्वे विभक्त्युदये सति व्यापारोदयादिति भावः। यद्यपि धातूनां लाक्षणिकार्थसम्भवोऽप्यस्ति तथापि विभक्त्युदयात् प्राक् तत्प्रतीतेरभावान्न विरोधः ॥३७॥

सत्तायामेव सङ्केतो नाम्नो धातोश्च दर्शितः ।
अद्वैतवादिभिः सैव धात्वादित्वेन सम्मता ॥३८॥

वेदान्तिमते विशेषमाह—सत्तायामिति । तस्या एव जात्यादिरूपत्वादिति भावः ॥३८॥

विभक्त्युदये सैव प्रयुक्तेन निरूप्यते ।
नाम्ना वा धातुना वापि वर्णिताभिस्तु वृत्तिभिः ॥३९॥

विभक्तेरिति । सैव सत्तैवेत्यर्थः ॥३९॥

सा सत्तैव परं ब्रह्म शब्दो ब्रह्म परं स्मृतम् ।
द्वे ब्रह्मणी वेदितव्ये इति श्रुत्यनुशासनम् ॥४०॥

सेति । सार्थत्वयरूपेत्यर्थः । तथा च श्रुतिः—
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥४०॥

शब्दब्रह्मविचारेण परं ब्रह्मावगम्यते ।
शब्दवृत्तिविचारोऽयं कृतस्तस्माच्छिवप्रदः ॥४१॥

शब्दब्रह्मेति । शिवप्रदः कल्याणदायकः । यथाह भगवान् भाष्यकारः—एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति ॥४१॥

शिवस्य भक्त्या समवाप्तसिद्धि-
र्धी-नीरधीरामजिभट्ट आसीत्

तत्सूनुनाशाधरभट्टनाम्ना
ग्रन्थः कृतोऽयं सुधियां मुदेऽस्तु ॥४२॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणधुरीणरामजिभट्टात्मजाशाधरभट्टविरचितकोविदानन्दे व्यक्तिनिर्णये तृतीयपरिच्छेदः समाप्तः ॥

शिवस्येति। अन्ते शिवशब्दो मङ्गलार्थः ॥४२॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणधुरीणरामजिभट्टात्मजाशाधरभट्टविरचितायां कादम्बिनीसमाख्यायां स्वकृतकोविदानन्दव्याख्यायां व्यञ्जनापरिच्छेदस्तृतीयः।

सटीकः कोविदानन्दः समाप्तः।

---

## वसन्तोत्सवः

( पूर्वतोऽनुवृत्तः )

[ निबन्धकः—श्रीकालीचरणमित्रः, बि. ए. ]

इत्यनेन भगवते स्मराय चूताङ्कुराणि समर्पितवत्यौ।

तथा च वासवदत्तामालतीमाधवकथासरित्सागरप्रभृतिषु बहुषु ग्रन्थेष्वपि विद्यते मदनमहोत्सवोल्लेखः।

नितरामन्तःकरणोल्लासकराणि ह्यस्य मदनोत्सवस्य बाह्यानुष्ठानानि। स्वभावसुखसेव्येऽस्मिन् भारते वर्षेऽतीव सुललितं विलसति निसर्गोन्मादकतामाधुर्य्यादिगुणरमणीयो वसन्तसमयः। मदनभस्मानुक्रमणिकावलम्बनेन हिमानीनिषिक्तशीतसमीरणात्ययवशाद्वा हर्षातिरेकोत्फुल्लमानेव अचिरोद्गतकिसलयरागमनोहरां धरणीं परितो

बभूवुरुत्सवमग्नाः। अतः प्रतिभातीदमस्माकं यहतुराजः स्वप्रभावेणैव स्वच्छन्दवनजातपुष्पप्रभृत्यभिभूय सकलजनहृदयः सर्व्वानेवोत्सवमग्नानकरोत्। ततः कालक्रमेणैवास्य जातीयमहोत्सवरूपेण परिणतिर्बभूव। तदनन्तरञ्च नृत्यगीतचन्दनकुसुमसुराप्रभृतयः संयोजिताः सन्तो मधुमासं मधुरतरमकुर्व्वन्निव। तदा प्रियसमागमे सङ्गीतच्छलेनोच्छसिताभिर्निभृतहृदयोद्वेलप्रसृतभावधाराभिर्जनानां सम्भ्रमसङ्कोचं प्लावयित्वा कश्चिदपूर्व्वानन्दसान्द्ररसस्तान् समस्तान् सातिशयमभिभवति। अहो! रमणीयानि वत्सरस्य तानि वसन्तोत्सवदिनानि।

अस्मिन् यात्रावसरे नृत्यगीतादिवन्नाटकाभिनयस्यापि प्रचलनं प्ररिलक्ष्यते। तथा च मालविकाग्निमित्रनाटकस्य प्रस्तावनायाम् "अभिहितोऽस्मि परिषदा श्रीकालिदासग्रथितवस्तुमालविकाग्निमित्रं नाम नाटकमस्मिन् वसन्तोत्सवे प्रयोक्तव्य"मिति सूत्रधारमुखेणाभिनयव्यापारः सूच्यते। पुनश्चावसरेऽस्मिन् राज्ञः श्रीहर्षदेवस्य सभायां श्रीहर्षकृतापूर्व्ववस्तुरचनालङ्कृता रत्नावली नाम नाटिका नानादिग्देशागतानां नृपतीनां पुरतोऽभिनीतासीत्।

उक्तमेवास्माभिः पूर्वं यत् कदाप्रभृत्ययं भारतीय-जातीयमहोत्सवो होलाकामहोत्सवरूपेण परिणतिमवाप तस्य यथार्थप्रमाणं दुर्लभमिति। परं ज्ञायते तावदेतावदस्माभिर्यद्भारतस्य सर्वत्राप्रतिहतभास्वरोज्ज्वलप्रभावप्रभया यदा "एसिया"-महामण्डलस्य जलस्थलादिस्थानानि समुद्भासितान्यासन्—स्थलमार्गे गान्धार-वाह्लीक-तिब्बत-तातार-महाचीनप्रभृतिषु तथा च जलपथे लङ्का-सुमात्रा-यवद्वीव-जापानप्रभृतिषु प्रदेशेषु विस्तृतो बौद्धप्रभावः समुद्रपोतेन भारतप्रशान्तादिमहार्णववक्षसि द्वीपाद्द्वीपान्तरं गमनागमनव्यापृता वाणिज्यनिष्णाता भारतीयसांयात्रिकाः, किं बहुना नानाजातीयानामध्ययनशीलानां नालान्दाख्यसुप्रसिद्धबौद्धविद्यालयान्तेवासिनां विविधविद्यानुशीलनेन भारतज्ञानभाण्डारस्य देशाद्देशान्तरं वहनेन सर्वत्रैव हि

भारतगौरवसम्भारस्तदा खलु तस्मिन् महामहिमान्विते समयेऽपि मदनोत्सवस्यानुष्ठानमक्षुण्णमेवासीत्।

उत्सवोऽयं प्राचीनकालतः सर्वत्र भारते वर्षे प्रचारबाहुल्यमासाद्याद्यापि किञ्चन परिवर्त्तनविक्षतः सम्महता डम्बरेण समनुष्ठीयते। तथाहि वसन्तोत्सवे श्रीकृष्णपूजनवृत्तान्तोऽपि संश्लिष्ट एवेति हरिभक्तिविलासे फाल्गुनोत्सवावसरे द्रष्टव्यम्। यथा—

"फाल्गुन्यां पौर्णमास्यान्तु विदध्याद्वैष्णवैः सह।
श्रीकृष्णप्रियभक्तस्य वसन्तस्यार्च्चनोत्सवम्॥
भविष्योत्तरतो ज्ञेयस्तद्विधिस्त्वेदपेक्ष्यते।
यः श्रीयुधिष्ठिरस्योक्तो व्यक्तं भगवता स्वयम्॥"

तन्माहात्म्यञ्च तत्रैव—

"एवं यः कुरुते पार्थ शास्त्रोक्तं फाल्गुनोत्सवम्।
मत्प्रसादाच्च सिध्यन्ति तस्य सर्वे मनोरथाः॥
वृत्ते तुषारसमये सितपञ्चदश्यां
प्रातर्वसन्तसमये समुपस्थिते च।
सम्प्राश्य चूतकुसुमं सह चन्दनेन
सत्यं हि पार्थ पुरुषोऽब्दशतं सुखी स्यात्॥"

केचन ब्रह्मवैवर्त्तपुराणस्य—

"चन्दनागुरुकस्तूरीकुङ्कुमद्रवसंयुतम्।
आवीरचूर्णं रुचिरं गृह्यतां परमेश्वरः॥"

इत्यमेन मन्त्रेण भगवते श्रीकृष्णायावीरचूर्णप्रदानव्यापार उल्लिखित एवेति दृष्ट्वा होलाकासूत्रमध्याहर्त्तुं शक्यन्ते। अपि तु श्रीकृष्णो भगवान् स्वयमेव मदनोत्सव आवीरचूर्णनार्च्चितोऽभूदित्येव तदानीन्तनदोललीलासीत्।

इस्लामधर्म्मस्य यदा नवोत्थितप्रभावविस्तारिमहाशक्तिः शनैः शनैः पश्चिमसागरतीरे पुञ्जीभूता सती भारतसीमान्तेषु प्रासरत्तदापि

भारतवर्षे मदनमहोत्सवस्यातिशयेन प्रचलनमासीत्। अल्बेरुणीकृत-भारतविवरणीप्रकाशितग्रन्थे परिस्फुट एवास्य परिचयः। पुरुषोत्तम-देवरचिते हारावलीतिनाम्नि सुप्रसिद्धशब्दकोषे ग्रन्थकारेण होलाकेति वसन्तोत्सव इत्याख्यया व्याख्या कृता। दायभागटीकायां होलाका-शब्दस्य "होलीति भाषा" इत्यनेन व्याख्यानं कृतम्। मुसलमान-शासनसमय एव प्राचीनवसन्तमहोत्सवस्य होलाकेत्यभिधानं सञ्जातम्।

मदनोत्सवो हि पराधीनजातेर्मर्य्यादारक्षणे नितरामसमर्थः। अवरोधप्रथा नूनमस्याननुकूलैव। प्रकृतेः परिवर्त्तनमुत्सवस्य संघटित-मस्य मुसलमानाधिकारे। पुरातनकाले श्रीविष्णुपूजापि मदनपूजा-सहिता। सकलभुवननियन्तुर्विश्वस्य भर्त्तुर्भगवन्नारायणस्यैव शुभ-हत्या कृपया धरा धृतरुचिरकलेवरा पुलकिता सती जगद्वासिनां पालन-क्षमेव प्रतिभातीति स्मरार्च्चनस्थाने नारायणस्य पूजाविधानं प्रवर्त्तित-मासीत्। अत एवाधुना प्रसूनविशिखपूजनं परिहाय श्रीविष्णुपूजा-भिवर्त्तते। उभयत्रापि पूजाया बाह्यानुष्ठानादिकमेकप्रकारमेव। अत आवीरचूर्णकुङ्कुमनृत्यगीताद्याचाराणां समानविधौ सत्यप्येतावानेव सञ्जातः प्रभेदो यल्ललनाकुलविलासकेलिललितवसन्तोत्सवः शनैः शनैः पुरुषमध्यसंक्रमणलब्धप्रभावविस्तारात् प्रायो हि विनापि स्त्रीजनामधु-मानुष्ठीयते महोल्लासेन। भवतु तद्यथा तथा वा; एतत्तु ध्रुव-मुररीकर्त्तव्यमेव यत् साम्प्रतं रूपकभावेन नारायणोद्देशानुष्ठिते होला-केति पर्वणि पर्य्यवसितो मदनमहोत्सवोऽयमेवेति। नागरनागरीणां मदनोत्सवे विभूषणार्थं चन्दनपुष्पमाल्यादिकं तथा हिन्दोलायां दोलनञ्चैतत् सर्वमेवाधुना श्रीश्रीराधागोविन्दचरणसरोजेषु समर्पितम्। श्रीवृन्दावनधामनि श्रीश्रीकृष्णबलरामोद्देशे तथा श्रीनीलाचले भग-वन्तं जगन्नाथमुद्दिश्य फाल्गुनशुक्लप्रतिपत्तः पूर्णिमापर्य्यन्तं होलाकेति फाल्गुनोत्सवो विविधानुष्ठानानुविद्धानन्दातिशयेन सम्पद्यते।

न केवलमस्माकमावासभूमावस्मिन् भारते वर्षेऽपि तु 'इंलण्ड'-प्रभृतिषु सुदूरप्रदेशेष्वपि वसन्तोत्सवस्यास्य परिलक्ष्यते कथञ्चन प्रचलनम्। पूर्वतनेंराजानां मध्ये 'मे' इत्यभिधानस्य मासस्य प्रथमदिवसे "मे डे" * इत्युपलक्ष्यानन्दोत्सवप्रवाहः प्राचालीत्। अद्यापि युरोपमहादेशवासिनां मध्ये रीतिरेषास्ति यदनेके "मे डे" इत्युत्सवसमये कञ्चन जनं "मे फुल" † इति हास्यास्पदं मूढं विधायामोदप्रमोदेषून्मत्ता भवन्ति। मथुराया वाथेनाख्यग्रामे येन प्रकारेण वाद्योद्दामसाचिव्येन होलाका सम्पन्ना भवति तथैवानुरूपप्रक्रियया रोमराजधान्यां "फालिक् अर्गि" ‡ इत्युत्सवे जना उच्छ्वसितानन्दाभिभूता रता भवन्ति। तत्रैव हि "स्याटार्णालिया" § इति नाम्नि प्रचलितेऽस्मद्देशीयानुरूप उत्सवविशेषे जना विविधासंयतामोदमत्ता अभूवन्। ग्रीसेऽपि भारतीयहोलाकोत्सवस्य प्रतिरूपनिदर्शनमस्माभिरुपलभ्यते। अलमतिपल्लवितेन। अस्मिन् जगतीतले प्रायः सर्वत्रैवास्य वसन्तोत्सवस्य प्रकारभेदः सम्यक् परिदृश्यते।

मदनमहोत्सवस्य होलाकालीलायां पर्य्यवसानान्तरमपि बहूनि यावद्दिनानि किल महोत्सवोऽयं सनातनधर्म्मावलम्बिनां सर्वप्रधानपर्व्वेत्येतत्तदानीन्तनमुसलमानैः सुज्ञातमेवासीत्। अष्टादशशताब्देऽन्तिमे भागे "कोम्पानीबाहादुराणां" "कलिकाता गेजेट" इत्याख्यायां पत्रिकायां होलाकेति पर्व्वावकाश एव तालिकामध्ये सर्व्वेषामेवोत्सवानां शीर्षस्थानमधिकुर्वन्नास्तेत्यस्माभिरवगम्यते।

देशकालादिनानाविधपारिपार्श्विकावस्थाप्रभृतीनामात्यन्तिकक्रमविपर्य्यये सामाजिकाचारादिपरिवर्त्तनानुसारेण वसन्तमहोत्सवस्य

---

* Merry-makings on May Day.

† May Fool.

‡ Phallic Orgies.

§ Saturnalia.

प्रकृतेर्यत् प्रभूतं खलु वैलक्षण्यं सविशेषं सञ्जातं प्रागेव तदस्माभिर्यथामति यथाशक्ति च दर्शितमेवेत्यलमतिगहनावगाहनेन ।

याता समाप्तिमधुना रचना ममैषा (?)
अज्ञानमोहतमसावृतचित्तवृत्तेः ।
तस्मात् कृपालुहृदयान् प्रति याचनं मे
दोषानुपेक्ष्य सकलान् विबुधाः क्षमध्वम् ॥

---

## उद्भटश्लोकाः

आशीर्वादं न गृह्णीयात् पूर्वदेशनिवासिनः ।
शतायुरिति वक्तव्ये हतायुरिति भाषिणः ॥१॥

अधिगगनमनेकास्तारका दीप्तिभाजः
प्रतिगृहमपि दीपा दर्शयन्ति प्रभुत्वम् ।
दिशि दिशि विलसन्तः सन्ति खद्योतपोताः
सवितरि परिभूते किं न लोकैर्व्यलोकि ॥२॥

सिंहो व्याकरणस्य कर्त्तुरहरत् प्राणान् प्रियान् पाणिने-
र्मीमांसाकृतमुन्ममाथ तरसा हस्ती मुनिं जैमिनिम् ।
छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गल-
मज्ञानाहतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः ॥३॥

## अप्पाशास्त्रिणां पत्राणि

(१०)

श्रीशिवः शरणम्। १८२१ का. व,

१२ श्याम्, वाईग्रामात्

(P.O. Wai)

सप्रणयं साशीर्वादं च मूर्ध्न्युपाघ्राय गाढं च परिष्वज्य कुशलं वार्तयति। आयुष्मन् वत्स! अतिक्रान्तसमयं किलाधिगता ग्रामान्तरं गतेन मया पत्रिका भवतः। अत एव चायमेतावान् विलम्बस्तदुत्तरप्रदान इति। हृदयानन्दन! एकान्ततः किल प्रीयते श्रीमतो व्याकरणोपाधिपरीक्षाप्रदानोदन्तमवबुध्यमानस्य मे चेतः। युष्मदानुकूलेन परीक्षाफलेनापि प्रसादाच्छ्रीमतो गिरीन्द्रनन्दिनीजानेः। किमिदानीमध्यवस्यति प्रेयान्मे जीवितायमानो बन्धुः? प्रेष्ठ! इच्छामि किल प्रबन्धानदसीयानधिगन्तुम्। युगपदेव हीदानीमवशिष्टाः सं चं. षट्संख्याः प्रकाशयितुमिच्छामि। आगामिनि च वत्सरे प्रतिमासं नियतसमयमेव चैनां प्रकाशयिष्यामि। जीवित! आस्वादितानि मया तिलपुलकानि प्रणयोपहारीकृतानि श्रीमता। यच्चात्र न सम्यक् प्रादुरभूवन् पुलकानि तदेतत् सान्द्रतरतामापन्नस्य फलं शर्करापाकस्य। अयं हि नातिसान्द्र एवात्रोपयोजनीय इति श्रीमत्या मातुर्ममाभिप्रायः। एष च श्रीमत्याः प्रजावतीदेव्याः श्रोत्रयोः क्रियताम्। निवेद्यन्तां च तस्यै नमांसि मे विनयावनतस्य। प्रणिपात्यतां च प्रियबन्धोश्चरणसरोजयोः प्रणयभरविनतोऽयं जन इति। अत्र मे मङ्गलम्। श्रीमतस्तु सर्वाङ्गीणं मङ्गलं मुहुर्मुहुर्जिज्ञासे। इति शिवम्।

वशंवदः

श्रीअप्पाशर्मा

सार्कं चाऽमुना पत्रेण प्रेषयते मदीया प्रतिकृतिर्वत्साय।

---

## व्योषः

प्रियपाठकमहाभागाः ! मा खलु व्योषशब्दसन्दर्शनेन भैषुर्भवन्तः। जानीमः खलु वयं व्योषशब्दस्त्रिकटुपर्य्यायः, त्रिकटु च, वर्जयित्वा रोगिणमरोचकग्रस्तं वा, न स्वदेत कस्मा अपि समसंस्थितायेति। तथापि पिण्डखर्जुरैरुद्वेजितस्य तिन्तिड्यामभिलाषो दृश्यत इति न्यायेनाद्य व्योष एव समुपस्थाप्यते भवतां पुरतः, एतद्रससमास्वादनेन सन्तर्पयन्तु भवन्तः निरन्तरसितशर्कराशनजडीकृतां रसनां स्वीयामिति संप्रार्थ्यते।

व्याकरणनिबन्धानामभिधानकोषाणां च टीकासूदाहरणप्रदर्शनप्रसङ्गेन समुद्धृता भूयांसः श्लोका व्योषकाव्यगता इति नैतत् तिरोहितं कोविदानाम्। तत्र किमिदं व्योषकाव्यमिति विचारयन्तो बहुधा विप्रवदन्ते विपश्चितः। बहव एव लेखकप्रमादाद् घोषशब्द एव व्योषतया विपरिणतः, घोषस्य नामैकदेशग्रहणे नामग्रहणमिति न्यायेनाश्वघोषपरः इत्याशेरते। केचन पुनः साहसिकाः व्योष इत्येतस्य स्थाने घोषमेव मुद्रयन्ति। तथाहि पुरुषोत्तमदेवकृतभाषावृत्तेरुपोद्घाते विद्वत्प्रवरेण परलोकनवप्रवासिना श्रीशचन्द्रचक्रवर्तिमहाभागेन व्यलेखि—घोषशब्द एव व्योषतया विपरिवर्तितः स्यात्। यच्च अश्वघोषप्रणीते बुद्धचरिते व्योषकाव्यतः समुद्धृता इमे श्लोका नैवोपलभ्यन्ते तत्र साम्प्रतं समुपलभ्यमानस्य बुद्धचरितग्रन्थस्य त्रुटितत्वमेव बीजम्। समग्रे ग्रन्थे प्रकाशमारूढे सर्वे इमे श्लोकास्तत्र सन्दृश्येरन् इति बलवत् सम्भाव्यते इति। सुगृहीतनाम्ना महामहोपाध्यायगणपतिशास्त्रिमहोदयेन त्रिवाङ्कुरराजकीयपुस्तकविभागात् प्रचारितस्य दुर्घटवृत्तिग्रन्थस्य सूचीपत्रे व्योषः घोषतयैव निर्दिष्टः, अश्वघोषप्रणीतस्य श्लोकस्य व्योषकारप्रणीतानां च श्लोकानामेकत्वैवैकेनैव नाम्ना समुल्लेखश्च कृतः। अन्यत्रापि बहुत्रैवं घोषव्योषयोर्विपर्य्यासो नयनसरणिमव-

तरन् विशकलीकरोति स्वान्तानि दोषज्ञानाम्। अत एवास्माभिर्व्योष-काव्यस्य स्वरूपनिर्णये साम्प्रतं व्यापार्यते लेखनी।

व्योषकाव्यतः समुद्धृतानां श्लोकानां सन्दर्शनमात्रेणैव स्फुटं प्रतीयते यत् श्लोका इमे व्याकरणसूत्राणामुदाहरणप्रदर्शनार्थमेव प्रवृत्ता इति। अत एव व्योषकाव्यमपि भट्टिकाव्यद्व्याश्रयकाव्यादिसदृशमेव किञ्चन शास्त्रकाव्यं स्यात्। ततश्च शास्त्रकाव्यानां पर्य्यालोचनावसरे रावणार्जुनीयाख्यं भट्टभीमप्रणीतं काव्यं स्मृतिपथमधिरोहति, तत्र च प्रायेण सर्व एवेमे श्लोकाः समुपलभ्यन्ते। अत एव रावणार्जुनीय-मेव व्योषकाव्यम्, न खल्वेतस्य वोपेण साकं लेशतोऽपि सम्बन्धः सम-स्तीति सुस्थितम्।

इदानीं व्योषकाव्यगताः श्लोकाः श्लोकांशा वा तैस्तैः शाब्दिकै-रुदाहरणतयोपन्यस्ता उपप्रदर्श्यन्ते। तथाहि—

(१) ऊर्य्यादिच्विडाचश्च (पा० १।४।६१) इत्यत्र तन्त्रप्रदीपे उक्तम्— तथाच व्योषः—ऊरीकृत्य क्ष्माभृतस्तस्य पातम् इति।

मुद्रितस्य रावणार्जुनीयस्य तृतीयसर्गे सप्तत्रिंशत्तमे श्लोके पादोऽयमुपलभ्यते।

(२) व्रातेन जीवति (५।२।२१) इत्यत्र भाषावृत्तौ—'व्रातीन-सङ्घाः प्रकटं नरेन्द्रैस्ते राक्षसाः सङ्कटमाशु नीताः" इति व्योषः' इति।

रावणार्जुनीये षोडशसर्गस्याष्टाचत्वारिंशत्तमे श्लोके एतदुपलभ्यते, केवलं तत्र सङ्घाः इत्येतस्य स्थाने सङ्गाः इति पठ्यते।

रजःकृष्यादिसूत्रे (५।२।११२) भाषावृत्तौ—

याऽसम्प्रति प्राक् परिषद्वलानाम्" इति व्योषः' इत्युक्तम्। अस्यैव सूत्रस्य दुर्घटवृत्तौ 'या सम्प्रति परिषद्वलानाम्' इति नामनिर्देश-पुरःसरं व्योषकाव्यतः समुद्धृतम्। मुद्रितस्य तु रावणार्जुनीयस्य षोडशसर्गस्यपञ्चषष्टितमश्लोके "प्राज्ञात्मनां यां परिषद्वलानाम्" इति दृश्यते।

(४) "ओजःसहोऽम्भस्तमसस्तृतीयायाः" (६।३।३) इति सूत्रस्य भाषावृत्तौ—

"इह तमःशब्दं तप इति केचिदूचिरे। तथाच व्योषः

तमोजसा निर्जितदेवराजं दृष्ट्वा रथस्थं तपसाप्तसिद्धिम्।

जग्राह राजा सहसात्तकोपश्चापानि चारूणि सशायकानि॥

इति।"

कातन्त्रपरिशिष्टेऽप्युक्तम्—"तमःस्थाने तपः पठन्ति शाक्याः * व्योषकाव्येऽप्यलुकि तदेव प्रयुक्तम्। अत्र गोपीनाथकृतटीका—तथा च व्योषेति (?)। तमोजसा निर्जितदेवराजं दृष्ट्वा रथस्थं तपसाप्तसिद्धिम्।" इति।

श्लोकोऽयं रावणार्जुनीयस्य ऊनविंशसर्गे समुपलभ्यते। परं तत्र द्वितीयपादस्त्रुटितप्राय एव।

(५) "अवोदैधौद्मप्रश्रथहिमश्रथाः" (६।४।२९) इत्यत्र भाषावृत्तिः—

प्रश्रथवद् भ्रमन्तमाजाविति व्योषः।

मुद्रिते पुना रावणार्जुनीये (२०।१९) "श्लथवेगं तमथो भ्रमन्तमाजौ" इति पाठ उपलभ्यते। अयं पाठः स्फुटमेव प्रामादिकः। "प्रश्रथवत्तमथो भ्रमन्तमाजौ" इत्येव समीचीनः पाठ इति प्रतिभाति।

(६) "अधःशिरसी पदे" (८।३।४७) इत्यत्र भाषावृत्तिः—

' "अधस्पदं यस्य निरस्तभूपतेः शिरस्पदं तस्य नतेऽङ्घ्रिपीठकम्" इति व्योषः' इति।

इदमेव श्लोकार्धं सुपद्ममकरन्देऽप्युदाहरणरूपेणोपन्यस्तम्। तत्र

---

* तथा च जैनेन्द्रव्याकरणसूत्रम्—ट ओजःसहोम्भस्तपोऽञ्जसः (४।३।१५१)। ओजोऽञ्जसहोऽम्भस्तपसष्टः इति च शाकटायनीयं सूत्रम् (२।२।४।)। हेमचन्द्रेण तु स्वकीये शब्दानुशासने तपस्तमःशब्दावुभावेव पठितौ। तथा च तत्रत्यं सूत्रम्—"ओजोऽञ्जःसहोऽम्भस्तमस्तपसष्टः" (३।२।१२) इति।

"अधस्पदं तस्य निरस्तभूपतेः शिरस्पदं यस्य न चाङ्घ्रिपीठम्" इति पाठः।

रावणार्जुनीये ( २६।१६ ) तु—

शिरस्पदं येन च पादपीठं कृतं त्वदीयं नमतादरेण।
अधस्पदं तस्य निरस्तभूतः करोति राजन् वसुधाधिपस्य॥

इति पाठः सन्दृश्यते।

(७) कातन्त्रधातुप्रदीपस्य 'मनोरमा'व्याख्यायामपि व्योषतः समुद्धृतं वचनम्। तथाहि—तौदादिकस्य प्रच्छधातोर्वर्णनप्रसङ्गेनोक्तम्—'व्योषे "न संपपृच्छे गमनाय सत्वरा सखीजनम्" इति व्यतीहारविवक्षायामात्मनेपदं सिद्धम्, किन्तु सम्प्रसारणानुपपत्तेरस्य च्युतसंस्कारत्वं दोष इति भ्रान्तः ( प्राञ्चः ? )। शरणदेवस्तु—अकृतेऽपि सम्प्रसारणे 'प्रश्ने वा' इत्यस्य विषयत्वान्न छन्दोभङ्ग इत्याह।'

शरणदेवः दुर्घटवृत्तिकारः। दुर्घटवृत्तौ स्थलद्वितय एतद्गतो विचारः समुपलभ्यते। तत्र—"असंयोगाल्लिट् कित्" ( १।२।५ ) इत्यत्रोक्तम्—

कथं न सम्पपृच्छे गमनाय सत्वरा इति व्योषः, संयोगान्तत्वात् कित्त्वाभावात्। उच्यते। अपशब्द एवायम्। अथवा "यजयाचयतविच्छप्रच्छरक्षो नङ्" ( ३।३।९० ) इति नङो ङित्त्वेनागमशासनानित्यत्वात् तुकोऽभावे कित्त्वात् सम्प्रसारणे कृते ऋकाराश्रयस्तुक्। इति।

समोः "गम्यृच्छि—"( १।३।२९ ) इत्यादिसूत्रस्य वृत्तावप्युक्तम्—

कथं 'न संपपृच्छे गमनाय सत्वरा सखीजनं सन्दद्दशे तथापरा' इति व्योषः, तथा 'रक्षांसीति पुरापि संशृणुमहे' इति मुरारिः, अकर्मकादित्यनुवृत्तेः। उच्यते—कर्मव्यतीहारे तङत्र। सखीजनादिति वा पाठः। ल्यब्लोपे पञ्चमी। सखीजनं प्राप्येत्यर्थः। इति।

एतच्छ्रुतिमात्रं विस्मयकरं यत् सुपद्ममकरन्दे श्लोकार्धमिदं न समुद्धृतम्। मुद्रिते रावणार्जुनीये ( २।२९ )—

"न संपप्रच्छे गमनाय सत्वरा विलासिनी सन्ददृशे न चापरा" इति पाठ उपलभ्यते। तत्रात्मनेपदासाधुत्वशङ्कानुत्थानोपहतैव।

शरणदेवरामनाथादिभि: स्थितेर्गतिश्चिन्तनीया इति न्यायेन संपप्रच्छे इति पदस्य साधुत्वापादनाय कर्त्तरि कर्मव्यतीहारे इति सूत्रं शरणीकृतम्, तत् प्रकरणाद्यनालोचनविजृम्भितमेव। रावणार्जुनीये काव्ये पाणिनिसूत्राणां यथाक्रममुदाहरणानि प्रदर्शितानि। 'न संपप्रच्छे' इति श्लोक: 'समोगम्यृच्छी'तिसूत्रस्योदाहरणप्रदर्शनपर:। "कर्त्तरि कर्मव्यतीहारे" इति सूत्रस्य तूदाहरणम्—

"विपर्ययेणाशु नियोगकारिणस्तदा जना व्यत्यभवन्त सम्भ्रमात्" इति पूर्वमेवोपन्यस्तम् (रावण २।३)। "न संपप्रच्छे गमनाय सत्वरा सखीजनं सन्ददृशे तथापरा" इति पाठ: प्रामादिक एव। न खलु वैयाकरणधुरीणो व्याकरणसूत्राणामेवोदाहरणानि प्रदर्शयन्नीदृशं गरीयांसमपशब्दं प्रयुञ्जीत इति स्वप्नेऽपि सम्भाव्यते। तेन मुद्रितरावणार्जुनीयस्थ: पाठ एव समीचीन इति प्रतिभाति।

इदानीं संपप्रच्छे इत्यत्र सम्प्रसारणस्य समीचीनत्वं विचार्य्यते। यद्यपि "स्याट् व्यपित् किट् वा" इति मुग्धबोधसूत्रेण संयोगादुत्तरस्यापिल्लिट: कित्त्वं विकल्पेन विहितम्, तथापि पाणिनितन्त्रे तादृशसूत्रवार्त्तिकाद्यनुपलम्भात् 'असंयोगाल्लिट् कित्' इति सूत्रेण विस्पष्टमेवासंयोगादुत्तरस्य लिट: कित्त्वविधानात्, रावणार्जुनीयस्य च पाणिनिसूत्रोदाहरणप्रदर्शनार्थमेव प्रवृत्ते:, न संपप्रच्छे इति पदं कथमपि न सङ्गच्छते। न च "अपि माषं मषं कुर्य्याच्छन्दोभङ्गं त्यजेद् गिरम्" इति न्यायेनात्र पकाराकारस्य ह्रस्वत्वसम्पिपादयिषया प्रस्य प्रत्वं कृतम्, "प्रह्रे वा" इति पिङ्गलसूत्रेण—प्रपरेऽपि पकाराकारस्य पाक्षिकह्रस्वत्वात्, 'गृहीतप्रत्युद्गमनीयवस्त्रा', "प्राप्तनाभिह्रदमज्जनमाशु" इत्यादिषु यथा। तेन "संपप्रच्छे" इति पाठ एव समीचीनतया प्रतिभासते।

(८) "विदिभिदिच्छिदेः कुरच्" ( ३।२।१६२ ) इत्यत्र दुर्घट-वृत्तिः—"तथाच संसारबन्धच्छिदुरान् द्विजातीन्" इति व्योषः इति। सुपद्ममकरन्देऽपि "विदिभिदिच्छिदेः कुरः" ( ४।१।७२ ) इत्यत्रैवम्। रावणार्जुनीयस्य चतुर्थसर्गस्योनविंशश्लोके पाठोऽयमुपलभ्यते।

(९) "अनुशतिकादीनां च" ( ७।३।२० ) इत्यत्र दुर्घटवृत्तिः—कथं तर्हि 'व्याप्तमातिशयिकेन रसेन' इति व्योषः। उच्यते सूत्रकारादिमतेन।

मुद्रिते रावणार्जुनीये नैवोपलब्धमेतदस्माभिः। मुद्रिते दुर्घटवृत्तिग्रन्थे व्योषस्थाने घोष इति पाठो वर्त्तते। कदाचित् परमार्थत एवैतदश्वघोषकाव्यगतं स्यात्।

(१०) सुपद्मपरिभाषायां त्रयोदशपरिभाषाव्याख्यानावसरे पद्मनाभभट्टैरुक्तम्—"क्वचिदग्रहणात्—

'मदर्थे हरिवर्य्योऽसौ प्रक्रम्योदधिमागतः' इति ल्यपि किञ्-झलोरपरत्वे क्रमः क्त्वि वेति दीर्घो न स्यात्"।

द्वादशपरिभाषाटीकायां—" 'प्रक्रम्योदधिमागतः' इति व्योषे बाहुल्यात्" इति ग्रन्थकारः। त्रयोदशपरिभाषाटीकायां—प्रक्रम्योदधिमिति व्योषे प्रक्रम्येति ल्यबादेशस्य नोपधत्वाभावात् स्थानिवत्त्वात् ङमन्तस्य न दीर्घ इत्यर्थः।

(११) सुपद्ममकरन्दे ( १।३।२८ )—

' "यथैव रत्नानि नृपस्य भूषणं तथैव तेषामपि भूषणं नृपः" इति व्योषः' इति।

रावणार्जुनीयम् २।६।

(१२) सुपद्ममकरन्दे ( ३।२।३० )—

वसन्तीह पुरा विप्रास्तथावात्सुः पुरामराः।
नागाः पुरा वसन्त्यस्यां रम्येयं सरितां वरा॥

इति मुद्रिते रावणार्जुनीये—"पुरामराः" इत्यत्र "पुरा सुराः" इति, तृतीयचरणे "नागाः पुरावसन्नस्याम्" इति च पाठो दृश्यते। तृतीय-

चरणे अवसन्नित्येव पाठो ग्रन्थकारस्वरससिद्धः। काशिकायामपि "पुरि लुङ् चास्मे" ( ३।२।१२२ ) इत्यत्र "वसन्तीह पुरा छात्राः" इत्युदाहरणमुपन्यस्तम्। एतेन रावणार्जुनीयस्य काशिकातः पूर्ववर्त्तित्वं प्रतीयते। महाभाष्ये तु "रथेनायं पुरा याति" "रथेनायं पुरायासीत्" इति छन्दोबद्धमप्यन्यविधमेवोदाहरणमुपप्रदर्शितम्।

(१३) तत्रैव गमेः—( ३।३।६१) इत्यत्र—समगंस्त इति व्योषः।

रावणार्जुनीये ( १।१३ )—

त्रासनम्रशिरसाशु शत्रुणा यत् पुमान् समगतार्द्रमानसः।
त्यक्तशत्रुजनया जयश्रिया संयुगेषु समगंस्त चास्तभीः॥ इति।

(१४) तत्रैव सम्पृच—( ४।१।६१ ) इति सूत्रे—

सम्पर्किणी नदी राज्ञा संसर्गी सरिता नृपः।
अन्योऽन्यपावनावेतावित्यूचे सारणं शुकः॥ इति।

मुद्रिते रावणार्जुनीये ( ११।४ ) पुनः "सम्पर्की सरितां नृपः" इति पाठ उपलभ्यते, तत्र सम्पर्की इति पदं लेखकप्रमादसूचकमेव। मुद्रितग्रन्थस्य चतुर्थे चरणे "सारणः शुकम्" इति पाठः।

(१५) तत्रैव जल्पभिक्षेत्यादि सूत्रे ( ४।१।६७ )—

"उद्धृतेषु सरोजेषु क्षोभिभिर्भ्राम्यन्ति तृष्णया।
वराकाः शोभना भृङ्गा भिक्षुका इव सर्वतः॥

इति व्योषः" इति।

रावणार्जुनीये ( ११।३४ ) शोभना इत्यत्र शोचना, भिक्षुका इत्यत्र च भिक्षाका इति पाठः। सुपद्ममकरन्दे भिक्षुक इति पाठो लेखकप्रमादतः।

(१६) तत्रैव विदिभिदि—( ४।१।७२ ) सूत्रे—

"अथवा भिदुरा मीनाश्छिदुराः सर्वदेहिनाम्।
नश्वरा सहज जाता जलसंक्षोभपीडिताः॥

इति व्योषः" इति।

रावणार्जुनीये ( ११।४० ) अम्बरा मेदुरा मीनाः, नम्बराः सहजा जाताः इति पाठावुपलभ्येते। तत्र "अम्बरा मेदुरा मीनाः" इति पाठः साधीयान्।

(१७) तत्रैव क्तञ: ( ४।१।८६ ) इत्यत्र—

"संख्याकरो यस्य न बाहुशक्तेर्ऋतेऽपरश्चित्रकरो न यस्मात् इति व्योषः" इति।

(११) तत्रैव—

"स श्लोककारैरभिनूयमानो ममज्ज तत्राम्भसि चाटुकारैः। इति व्योषः।"

रावणार्जुनीये ( १०।१२ )।

(१८) तत्रैव "आत्मोदरेति" ( ४।१।८८ ) सूत्रे "तथाच व्योषः।

सन्त्रासितैनेकफलेग्रहिद्विज: सम्मानितात्मम्भरिराक्षसव्रजः।

कुर्वन् सरिद्वारि सकूलमुद्रुजं सत्त्वो स वेगेन च कूलमुद्वहम्॥"

रावणार्जुनीये ( १०।१६ ) 'सन्त्रासितानेकफलेग्रहिद्विजः' इति 'सत्त्वो प्रवेशेन स कूलमुद्वहः' इति च पाठः।

(२०) तत्रैव धेटो मुष्यादेः ( ४।१।१०१ ) इति सूत्रस्य गणसूत्रव्याख्याने—

"द्रोणम्पचास्तत्र मितम्पचाश्च ये अरुन्तुदाः प्राणभृतां निशाटाः।

विधुन्तुदाश्चापि गृहीतचापाः स्वान्तं प्रभुं ते परिवार्य तस्थुः॥

इति व्योषः" इति। 'ये अरुन्तुदाः' इत्यत्राभिनिहितसन्ध्यभावः स्फुटमेव लेखकप्रमादकृतः। रावणार्जुनीये ( १०।१७ ) 'निशाटाः' इत्यत्र 'निशाभ्यः' 'स्वान्तम्' इत्यत्र च 'स्वानम्' इति पाठः। उभयत्रापि मकरन्दधृत एव पाठः साधीयान् इति प्रतिभाति।

(२१) तत्रैव मेघर्त्ति सूत्रे ( ४।१।१०२ )—

मेघङ्करस्त्वं जलजीविकार्थमृतिङ्करो मुक्तिमुपेयुषाञ्च।
भयङ्करं दक्षिणमाननन्ते क्षेमङ्करं प्राणभृतां तथापि॥

इति व्योषः।

रावणार्जुनीये ( १०।२५ )। (क्रमशः)

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| November, 1931. | १८५३ शकीये कार्त्तिके १४वर्षस्य ७म-संख्या | Vol. XIV, No. 7. |
| --- | --- | --- |

## संस्कृतसाहित्यपरिषदः पञ्चदशवर्षीयकार्य्यविवरणम्

[ निबन्धकः—श्रीअमरेश्वरठाकुरवेदान्तशास्त्री ]

मान्याः सभासदः, अद्य खलु महत् सौभाग्यं संस्कृतसाहित्य-परिषदो यत् पण्डितशार्दूल-महामहोपाध्याय-श्रीमत्कामाख्यानाथ-तर्कवागीशप्रमुखा भवन्तोऽत्र कृपया समागताः। भवद्भ्यो यथा-योग्यं प्रणति-सम्भाषणानि विज्ञापयामः।

माननीयाः सभ्यमहाभागाः, आदाविव तावत् काश्चन शोकवार्त्ता भृशदुःखितेनान्तरात्मना भवद्भ्यो विनिवेद्यन्ते। जानन्त्येव भवन्तो ये तावदासन् मनस्विप्रकाण्डास्तपोविद्यार्ज्जवादिगुणनिवहसम-लङ्कृताः सहजब्राह्मण्यप्रदीप्तमूर्त्तयः पण्डितचूडामणयः सनातनधर्म्मस्य

स्तम्भीभूता वामाचरणन्यायाचार्य्यमहोदया लक्ष्मणशास्त्रिमहोदयाश्च अकाल एव ते शिवभूयमनुप्राप्ताः। येऽप्यासन् स्मार्त्तधुरन्धराश्चण्डी-चरणस्मृतिभूषणमहोदयास्तेऽपि लोकान्तराय प्रस्थिताः। अपरेऽप्य-स्माकं सभ्याः कलिकाताविश्वविद्यालयाध्यापकाः पोष्टग्राजुयेट-विभागस्य मन्त्रिणो गौराङ्गनाथवन्द्योपाध्यायमहोदयास्तथा वदान्याश्च स्वधर्म्मपरायणाश्च विजयनारायणकुण्डुमहोदयास्तथा परिषदोऽकपट-सहायका वि. के. वसुमहोदयास्ते सर्व्वे सममेवाकाण्डे विकरालेन कालेन कवलीकृताः। परिषन्मङ्गलकाङ्क्षिणाम् एतेषां महाभागानां वियोगेन परिषदा महत्येव हानिरनुभूयते। स्वरारूढेभ्य एतेभ्यः श्रद्धासन्ततिं विनिवेद्य पञ्चदशवर्षीयकार्य्यजातमुपस्थापयामः।

कार्य्यजातेषु प्रथममेव समुल्लेखमर्हति विगतवर्षीयवार्षिक-सभा। एषा खलु सर्व्वथा मानार्हाणां श्रीमतां शिवशेखरेश्वरराय-महोदयानाम् आध्यक्ष्येण समपादि। तत्र तावदवसितेष्वानुषङ्गिकेषु कृत्यजातेषु नैयायिककेशरिणां महामहोपाध्याय-राखालदासन्यायरत्न-महोदयानां तैलचित्रं प्रतिष्ठापितमासीत्। अतः परं सभापति-महोदयैः स्वकीयं सारवदभिभाषणं वाचितम्। तदभिभाषणं संस्कृतभाषया विपरिणमय्य परिषत्पत्रिकायां प्रकाशितमिति जानन्त्येव भवन्तः। सभावसाने परिषच्छात्रसमितिसदस्यैर्मृच्छ-कटिकमभिनीतम्। अभिनयं प्रेक्ष्य सामाजिकाः सर्व्वे परामेव मुदमाप्नुवन्। आलोच्ये वर्षे कानिचिद्विशेषाधिवेशनान्यपि परिषदः सञ्जातानि। एकस्मिन् खल्वधिवेशने महामहोपाध्यायाः श्रीमन्तो भागवतकुमारशास्त्रिणो 'भागवतस्य मूलतत्त्वम्', अपरस्मिंश्च श्रीअतुलचन्द्रघटकमहोदयाश्चन्द्रहासमधिकृत्य व्याख्यानं प्रदाय समुपस्थितानां सर्वेषां तृप्तिं जनयामासुः। आसीच्च देशहितेषूत् सर्गीकृतप्राणानां 'कर्पोरेशन' इत्याख्यसभायास्तदानीन्तनप्रधान-पुरुषाणां श्रीमत्सुभाषचन्द्रवसुमहोदयानाम् अन्येषामपि कर्पोरेशन-

सभासदस्यानां समागमेनापरमेकं विशेषाधिवेशनम्। तत्र तावदभिज्ञानशकुन्तलं नाम नाटकं संक्षिप्य परिषत्सदस्यै स्तदभिनयो विहितः। अपरस्मिन् पुनरधिवेशने स्थपतिप्रवराय श्रीमच्छ्रीशचन्द्रचट्टोपाध्यायमहोदयाय 'स्थापत्यविशारद' इत्युपाधिरस्माभिः प्रदत्त आसीत्। आलोच्य एव वर्षे प्राच्यप्रतीच्यदर्शनशास्त्रेषु नितरां निष्णाताः श्रीमन्तः सुरेन्द्रनाथदासगुप्तमहोदया राजकीयसंस्कृतविद्यालयाध्यक्षपदे तथा श्रीयुक्तसुरेन्द्रनाथसेनगुप्तमहोदयाः कलिकाताविश्वविद्यालयाशुतोषाध्यापकपदे नियुक्ता आसन्। परिषत्सदस्यानामेतेषामभ्युदयेन परं प्रमोदमनुभवामो वयम्। एतेषां विद्वद्वराणामभिनन्दनार्थं परिषदो विशेषाधिवेशनद्वयं सञ्जातम्।

विगते संवत्सरे एकादश साधारणाधिवेशनानि संवृत्तानि। तत्र यथारीति प्रबन्धाः पठिताः समालोचिताश्चासन्। एषां प्रबन्धानां अनेक एव परिषत्पत्रिकायां प्रकाशं नीता इति विदितमेव सदस्यमहाभागानाम्। कार्य्यनिर्व्वाहकसमितिरपि नव वारान् मिलित्वा कृत्यसमूहान् निष्पादयामास। प्रायः सर्व्वे एव कार्य्यकारकाः परिषत्कार्य्येष्ववहिता वर्त्तन्ते। एषु पुनरन्यतमसहकारिसम्पादका अक्लिष्टकर्म्माणः श्रीमन्तो रामकृष्णचक्रवर्त्तिनः परिषत्कार्य्येषु निरूढमनःप्राणा इति चेदुच्यते तदपि नाधिकं भवेत्। श्रीमतां साहाय्यकं विना परिषत्कार्य्याणि सुष्ठु चलिष्यन्ति न वा तत्र सर्व्वे एव सन्दिहाना वयम्। ये विद्यया चारित्रेण व्यवहारेण कार्य्यपाटवेन च सर्व्वेष्वेव विभागेषु स्वप्रभावमनुभावयन्तः श्रीमन्तः परिषदमात्मीयामिव कुर्व्वन्तो वर्त्तन्ते ते खलु परिषन्मङ्गलेप्सूनां सर्व्वेषामेव प्रोत्साहनं कृतज्ञताञ्चार्हन्ति।

विगते वर्षे परिषद्विद्यालये षड्विंशतिश्छात्रा अधीतवन्तस्तेषु द्वादश विभिन्नपरीक्षासु समवातरन् सर्व्वे एव च समुत्तीर्णाः सञ्जाताः।

श्रीमद्रारामधनभट्टाचार्य्यौ नाम कश्चित् परिषदन्तेवासी ढाका-सारस्वतसमाजोपाधिपरीक्षायां पाटवं संप्रदर्श्य रौप्यपदकमयं पुरस्कार-मलभतेति परिषदाचार्य्याणां परिषत्प्रणयिनाञ्च महते मोदाय समकल्पत। आहारवासस्थानदानेन शिक्षादानमेव प्राचीना सरणिरित्युपलभ्यत एवास्माभिः। राजकीयसाहाय्यस्य न्यूनता-वशात्तथा देशस्यावस्थाविपर्य्ययाच्च सर्व्वदैवार्थक्लेशमनुभवन्त्यपि परिषद्वित्तेभ्यश्छात्रेभ्यो मासिकीं वृत्तिं प्रदाय तामेव सरणिं कथञ्चित् समनुसृतवती। परिषदाचार्य्या विश्रुतकीर्त्तयः श्रीमन्तः कालीपदतर्काचार्य्यास्तथा नानाशास्त्रनिष्णातमतयः श्रीमन्त उपेन्द्र-मोहनसांख्यतीर्थाश्च विद्यालयरक्षणविधौ प्रायतन्त इति तेऽपि धन्यवादार्हाः। विद्यालयव्ययनिर्व्वाहार्थं विगते वर्षे कर्पोरेशन-सभातो द्विशतमुद्रात्मकं साहाय्यं लब्धमिति तत्कर्त्तृपक्षीयेभ्य आन्तरिकीं कृतज्ञतां ज्ञापयामः।

परिषद्ग्रन्थालयः क्रमशः समृद्धिमाप्नुवन् विदुषामुपयोग-मावहतीत्यस्माकमानन्दाय कल्पते। विगते वर्षे बहवो मुद्रिता ग्रन्थाः क्रीता हस्तलिखिताश्च संगृहीताः। साम्प्रतं ग्रन्थागारे मुद्रित-पुस्तकानां संख्या सार्द्धत्रिसहस्राधिका हस्तलिखितानान्तु किञ्चिदून-सहस्रत्रयी। ग्रन्थसंग्रहार्थमपि कर्पोरेशनसदस्यैः सार्द्धषट्शतमुद्राः प्रदत्ता इति पुनरपि तत्कर्त्तृपक्षीयानभिनन्दामः।

बहुविषयगुम्फिता संस्कृतभाषामयी पत्रिका सुधीप्रवरैः श्रीमत्-क्षितीशचन्द्रचट्टोपाध्यायमहोदयैस्तत्सहकारिभिः श्रीमदुपेन्द्रमोहन-सांख्यतीर्थैश्च सम्पाद्यते। भारतवर्षस्य विभिन्नप्रदेशस्थितानां पण्डित-वर्य्याणां प्रबन्धैर्विभूषितेयं परिषत्पत्रिका यथाकालं प्रकाशं गच्छन्ती पण्डितजनानां मुदं विदधाना वर्त्तते। सुहृदस्त्वस्त्वेय-मचिरमेव गौरवस्य परां काष्ठामाप्स्यतीत्याशास्महे।

हस्तलिखितानि पुस्तकानि संगृह्यैव परिषन्नावसितप्रयोजना

भवति, अप्रकाशितपूर्व्वाणां ग्रन्थानां प्रकाशेऽपि परिषदा यत्नः प्रकाश्यते। जानन्त्येव भवन्तः कीदृशो ग्रन्थस्तावच्छान्दोग्यमन्त्र-भाष्यमिति। अस्योपयोगिता खलु सर्व्वैरेव वैदिकसाहित्यानुशीलन-तत्परैः पण्डितैरङ्गीक्रियते। विगते वर्षे श्रीमद्दुर्गामोहनसांख्य-तीर्थेन टिप्पनीपाठान्तरादिभिर्विस्तृतानुक्रमणिकया संयोज्य सम्पादित-एष ग्रन्थः परिषदा प्रकाशतां नीतः। सम्पादनसौन्दर्य्येण विमुग्ध-हृदयैः पाश्चात्यपण्डितैरस्य भूयसी प्रशंसा कृता। श्रीमत्-कालीपदतर्काचार्य्यसम्पादितस्य भाषारत्नाभिधेयस्य वैशेषिकग्रन्थस्य भूमिका नाद्यापि सम्पूर्णतामाप्ता, अतोऽधुनापि न प्रकाश्यते। मनोदूतनामकं काव्यं फिटसूत्रस्य च बहवोऽंशा अस्माभिरालोच्ये वर्षे प्रकाशिताः।

संस्कृतभाषां प्रति जनानाम् अनुरागसञ्जननं परिषदा कर्त्तव्यत्वेन स्वीकृतम्। रूपकाभिनय एतस्यानुकूल इति परिषत्सदस्यैरन्त-रान्तरा रूपकाभिनयो विधीयते। परिषदा एकविंशतिसंख्याकानि रूपकाण्यभिनीतपूर्व्वाणि। विगते वर्षे निखिलभारतीयप्राच्य-सम्मेलनस्य षष्ठेऽधिवेशने पाटलीपुत्रं प्रत्याहृताः परिषत्सदस्यास्तत्र मुद्राराक्षसस्याभिनयं प्रायुञ्जत। अभिनयं संप्रेक्ष्य भारतवर्षस्य विभिन्नप्रदेशेभ्य आगताः पण्डितवर्य्या अभिनेतृणां विशेषतो गायकप्रवरयोः श्रीमत्सनत्कुमारभट्टाचार्य्यस्य श्रीमद्विष्णुपददत्तस्य च भूयोभूयोऽभिनन्दनं कृतवन्तः।

विगते वर्षे राजकोषात् सहस्रमुद्रात्मकं साहाय्यं लब्धम्।

महाभागाः परिषत्कार्य्यजातं विगतवर्षीयं संक्षेपेण भवत्सविधे समुपस्थापितम्। भारतीयसभ्यतायाः प्रकारः कीदृशो भवेदित्यस्य निर्द्धारणे दैनन्दिनधर्म्माचरणविधौ नैतिकचरित्रादर्शप्रदर्शने जातीय-वैशिष्ट्यसंरक्षणे च संस्कृतभाषायास्तथा संस्कृतशास्त्रस्योपयोगित्व-मस्माभिरङ्गीक्रियते चेत्तदा संस्कृतस्य प्रभावो यथा न लोपमापद्येत

तथैवास्माभिः सर्व्वथा करणीयः। परिषदा एतदर्थं प्रयत्यत इति सुविदितमेव भवताम्। परिषद् भवतामेव सम्पत्, एतां सुदृष्टां कुर्व्वन्तोऽस्याः संरक्षणविधौ प्रयतन्तामिति साञ्जलि प्रार्थयमानोऽहं सर्व्वानेव समुपस्थितान् सदस्यवर्य्यानामन्त्र्य विरमामि।

---

## विद्याप्रस्थानम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—कालीघट्टवास्तव्यः श्रीगुरुपदहालदारः ]

तदुक्तं भगवता पञ्चशिखेन—'स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्षः कुशलस्य नापकर्षायालम्। कस्मात्? कुशलं हि मे बह्वन्यदस्ति यत्रायमावापं गतः स्वर्गेऽप्यपकर्षमल्पं करिष्यती'ति। अस्यैव वाक्यस्य कठिनांशो व्याख्यायते। हिंसाजनितपापेन क्रियाया अपूर्व्वस्य स्वल्प एव सङ्करः सम्बन्धः स्यात्। स च प्रायश्चित्तादिना परिहर्त्तुं शक्यत्वात् सपरिहारः। सुपरिहर इति पाठे तु स्वल्पेनैव प्रायश्चित्तादिना परिहर्त्तुं शक्यत्वात् सुपरिहरः। प्रमादतस्तदभावेऽपि सप्रत्यवमर्षो बहुसुखमध्येऽल्पदुःखत्वात् सहनयोग्यो भोजनान्तरीयकदुःखवत्। अतः कुशलस्य यज्ञादेरपकर्षाय हेयत्वेन नालं समर्थः। कस्मादिति प्रश्ने यजमानस्य पुण्यवत उत्तरं कुशलमिति। कुशलं यज्ञादिक्रियासम्भूतं पुण्यं मे बह्वस्ति यत्रायं सङ्करः स्वर्गे पुण्यफलेऽप्यल्पमपकर्षम् (दुःखम्) भेदं करिष्यति, स्वर्गादल्पमेव दुःखं भविष्यतीति। अतः पुण्यावापगताया अपि हिंसाया अनिष्टहेतुत्वमुपपद्यते। अपि च युधिष्ठिरादीनां प्रायश्चित्तश्रवणात् पुण्यावाप-

गताया हिंसाया अनिष्टहेतुत्वं नानुपपन्नं भवति। यच्च 'वधोऽवध' इति तदपि वधाभासपरमिति बोद्धव्यम्। यदेव विध्यर्थप्रेरणया श्रुतौ यज्ञाङ्गभूतहिंसानामनिष्टानुबन्धित्वानाक्षेप इति, तदेव पशुहिंसाया यागोपकारकत्वान्न तु पशुयागानामनिष्टानुबन्धित्वाभावात्। 'आततायिनमायान्तमि'त्यादिकं नीतिशास्त्रं राजधर्म्मप्रकरणीयत्वेन 'मा हिंस्यात् सर्व्वा भूतानी'त्यध्यात्मशास्त्राद् दुर्बलम्। तदेव भगवान् याज्ञवल्क्यः—अर्थशास्त्रात्तु बलवद्धर्म्मशास्त्रमिति स्थितिरिति। अध्यात्मशास्त्रं तावद् आततायिवधे पापयोनितां स्पष्टमभिधत्ते। तथाहि गीता—

पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः।
तस्मान्नार्हा वयं हन्तुं धार्त्तराष्ट्रान् सवान्धवान्॥ इति।

अत आततायिवधे हन्तुर्न राजदण्डार्हता किन्तु दुरितोत्पत्तिरिति सिद्धान्तः कक्षीकरणीयः।

ननु, अपवादैरुत्सर्गा वाध्यन्तामिति न्यायाद् 'मा हिंस्यात् सर्व्वा भूतानी'ति सामान्यविधि'रग्नीषोमीयं पशुमालभेते'ति विशेषविधिना वाध्यते। यद्येवं भवति, कथं तर्हि वैधहिंसाया अनिष्टानुवन्धित्वम्?

'मा हिंस्यादि'ति निषेधेन हिंसाया अनिष्टसाधनत्वमवगम्यते, न तु यागानामनुपकारित्वम्। 'पशुमालभेते'ति विधिना च हिंसाया यागोपकारित्वमुच्यते, न तु यागानामनिष्टसाधनत्वाभावः। तदेतद् द्वयमेव श्रौतविधिप्रत्ययार्थः। अतो हि पशुसमालम्भन इष्टसाधनत्वं तेनैव न वाध्यते, न च सर्व्वभूतहिंसनाभावे यदनिष्टाननुबन्धित्वं तेन बलवदिष्टसाधनत्वं भवतीति विषयभेदप्रसङ्गात् तत्र कश्चिदपि न विरोधः। तदेव सांख्यतत्वकौमुदा—"न च 'मा हिंस्यात् सर्व्वाभूतानी'ति सामान्यशास्त्रं विशेषशास्त्रेण 'अग्नीषोमीयं पशुमालभेते'त्यनेन वाध्यते। न चेहास्ति कश्चिद् विरोधो भिन्न-

विषयत्वात्। तथाहि 'मा हिंस्यादि'ति निषेधेन हिंसाया अनर्थ-हेतुभावो ज्ञाप्यते, नत्वक्रत्वर्थत्वमपि। 'अग्नीषोमीयं पशुमालभेते'त्यनेन-तु पशुहिंसायाः क्रत्वर्थत्वमुच्यते, न त्वनर्थहेतुत्वाभावस्तथा सति वाक्यभेदप्रसङ्गान्न चानर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिदस्ति विरोधः। हिंसा हि पुरुषस्य दोषमावच्यति क्रतोश्चोपकरिष्यती"ति। अत्र वेदान्तसिद्धान्तस्तु 'अशुद्धमिति चेन्न शब्दादि'ति सूत्रस्य शारीरक-भाष्यादौ द्रष्टव्य। अहिंसामाहात्म्यं प्रख्यापयति भगवान् पतञ्जलि-'रहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्याग' इति।

इदानीं योगाङ्गभूतं यमशब्दवाच्यं सत्यं व्याख्यायते। सत्यं 'यथार्थे वाङ्मनसी' इति भाष्यकृद्व्याख्यानम्। अतएव परत्र स्वबोधसदृशबोधजननाय या वागुच्चारिता सा चेन्न वञ्चिका तर्हि सत्या। यदा तु दृष्टार्थविपरीतबोधने मनसस्तात्पर्य्यं तदा यथार्थापि सा न सत्या। यथा द्रोणाचार्य्येण स्वपुत्त्राश्वत्थाममरण-मायुष्मन् सत्यधनाश्वत्थामा हत इति पृष्टस्य युधिष्ठिरस्य प्रतिवचनं हस्तिनमभिसन्धाय सत्यमश्वत्थामा हत इति। तत्र हस्तिहननविषये वाक्यस्य सत्यत्वेऽपि मनसो न सत्यत्वम्। दृष्टविपरीतद्रोणपुत्त्र-हननबोधने मनसस्तात्पर्य्यात्। या च वागुक्ता भ्रान्ता साऽपि न सत्या। अज्ञाननिमित्तकपापान्तरवद् भ्रान्तिनिमित्तकाऽसत्य-स्यापि पापत्वात्। अपि च सत्यं परापकारफलं सत्याभासं न तु सत्यम्। तथा हि दस्युभिः सार्थगमनं पृष्टस्य सत्यतपसः सार्थगमना-भिधानं न सत्यम्। उक्तं च 'यथार्थकथनं यच्च सर्व्वलोकसुखप्रदम्। तत्सत्यमिति विज्ञेयमसत्यं तद्विपर्य्ययम्॥' इति। एतदुक्तं भवति सत्यं ब्रूयादसत्याच्च निवर्त्तेत, निवृत्तावपि भूतोपघातप्रसङ्गे तदपि ब्रूयादिति। सत्यस्य माहात्म्यं प्रख्यापयति वेदान्तदृष्टिमाश्रित्य भगवान् सनत्कुमारः 'सत्ये लोकाः प्रतिष्ठिता' इति। 'तद् ब्रह्म सत्यमि'ति श्रुतेः। पतञ्जलिस्तु 'सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वमि'ति।

अथ योगाङ्गभूता अस्तेयशब्दादय उपादीयन्ते। अस्तेयं बलाद्रहसि वा परस्वानपहार:। तदेव भाष्यकारपादा अस्तेयं लक्षयितुमभावस्य प्रतियोगिनिरूपणाधीननिरूपणतया प्रथमं प्राहु:—स्तेयमशास्त्रपूर्व्वकं द्रव्याणां परत: स्वीकरणमिति, ततस्तत्प्रतिषेध इति। तत्र योगियाज्ञवल्क्योऽपि—

मनसा कर्म्मणा वाचा परद्रव्येषु निस्पृहा।
अस्तेयमिति संप्रोक्तमृषिभिस्तत्त्वदर्शिभि:॥ इति।

अस्तेयमाहात्म्यं प्रख्यापयति भगवान् पतञ्जलि'रस्तेयप्रतिष्ठायां सर्व्वरत्नोपस्थानमि'ति।

ब्रह्मचर्य्यमुपस्थविषये सर्व्वेन्द्रियोपरम:।

स्मरणं कीर्त्तनं केलि: प्रेक्षणं गुह्यभाषणम्।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिण:।
विपरीतं ब्रह्मचर्य्यमेतदेवाष्टलक्षणम्॥

इत्यादिस्मरणात्। माहात्म्यं च तस्य 'ब्रह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभ' इति। अपरिग्रह: शरीरस्थितिमात्रव्यतिरिक्तभोगसाधनास्वीकार:। भाष्यं तु विषयाणामर्ज्जनरक्षणक्षयसङ्गहिंसादोषदर्शनादस्वीकरणमपरिग्रह:। अत एव विविधदोषदर्शनत: पदार्थानामसंग्रह इत्यभिप्राय:। तन्माहात्म्यं चोक्तम्—'अपरिग्रहस्थैर्य्ये जन्मकथन्तासम्बोध' इति। एते पञ्च यमा हिंसादिनिरासकत्वेन योगस्याङ्गत्वम् भजन्त एव।

शुभवासनायां नियमयन्तीति नियमा:। तत्रैव भगवान् अहिर्बुध्न:—

'सिद्धान्तश्रवणं दानं मतिरीश्वरपूजनम्।
सन्तोषस्तप आस्तिक्यं ह्रीर्जपश्च तथाव्रतम्॥
एते तु नियमा: प्रोक्ता दश योगस्य साधका:।

सिद्धान्तश्रवणं प्रोक्तं वेदान्तश्रवणं बुधैः ॥
दानं न्यायार्ज्जितार्थस्य सत्पात्रे प्रतिपादनम् ।
विहिते कर्म्मणि श्रद्धा मतिरित्यभिधीयते ॥
यथाशक्त्यर्च्चनं भक्त्या विष्णोरीश्वरपूजनम् ।
सन्तोषोऽलमनेनेति प्रीतिर्याद्दच्छिकेन वै ॥
कृच्छ्रचान्द्रायणाद्यैश्च तपोदेहविशोषणम् ।
आस्तिक्यमस्ति वेदैकगम्यं वस्त्विति निश्चयः ॥
निषिद्धकर्म्मकरणे व्रीड़ा ह्रीः प्रोच्यते बुधैः ।
गुरूपदिष्टस्वाध्यायमन्त्राभ्यासो जपः स्मृतः ॥
सदाचार्य्योपदिष्टेषूपायत्नप्रग्रहो व्रतम् ॥ इति ।

सूत्रकारो भगवान् पतञ्जलिस्तु 'शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' इति । यमनियमयोर्मध्ये यमानां निवृत्तिमात्रतया जातिदेशकालसमयैरपरिच्छिन्नानां सार्व्वभौमानां महाव्रतसंज्ञा सूत्रकारेण युक्तमुक्ता, नियमानां तु प्रवृत्तिरूपतया जात्यादिभिश्चतुर्भिर्व्याप्तानामसार्व्वभौमत्वेन नास्ति महाव्रतरूपोऽवान्तरविशेषः ।

बाह्याभ्यन्तरभेदेन शौचस्य द्वैविध्यम् । तत्र बाह्यं शौचं मृज्जलादिना प्रक्षालनं हितमितमेध्याशनं च । आभ्यन्तरं तु शुद्धवासनया मलिनवासनानामपनयनम् । शुद्धवासना शास्त्रसंस्कारसाधनत्वेन मैत्र्यादिचतुष्टयोपलक्षिता योगमलं निवर्त्तयति, धर्म्मं शुक्लमेव जनयति, तत्त्वज्ञानसाधनत्वेन दृश्यस्य मिथ्यात्वं दृग्वस्तुनश्च सत्यत्वं बोधयति, ततः सत्ये दृग्वस्तुनि स्वागोचरत्वं बुद्ध्वा निरिन्धनवह्निवत् स्वयं चोपशाम्यति । मलिनवासनास्तु योगाच्चित्तं विक्षिपन्ति धर्म्मं च शुक्लं भ्रंशयन्ति । ताः सर्व्वा विषयानुरक्ता विषयप्राप्त्या प्राक् सुखरूपेण परिणमन्ते, ततः प्रतिदिनं वर्द्धमानत्वेन स्वविषयाप्राप्तिनिबन्धनदुःखस्यापरिहार्य्यत्वाद् दुःखमेव प्रतिपद्यन्ते ।

मलिनवासनानां त्रैविध्यं लोकवासना शरीरवासना शास्त्रवासना चेति। तत्र कोऽपि यथा न निन्दति, सर्व्वे च यथा प्रशंसन्ति तथैवाहमाचरिष्यामीति लोकवासना। धनजनजीवनपातेनापि सर्व्वान् लोकानाराधयितुं न शक्यमिति व्यर्थप्रयासत्वात् पुरुषप्रयोजनाभावाच्च मालिन्यमस्याः प्रसिद्धम्। शरीरवासना चतुर्व्विधा सम्पद्-भ्रान्तिरात्मत्वभ्रान्तिर्गुणाधानभ्रान्तिर्दोषापनयनभ्रान्तिश्चेति। तत्र सम्पद्-भ्रान्तिः काव्यादिषु प्रसिद्धा। गुणाधानभ्रान्तेरुदाहरणं प्रशंसायां दर्पहेतुत्वादि भवति। दोषापनयनभ्रान्तेरुदाहरणं सामान्यत औषधादिना वृद्धो यथा युवा भवितुमिच्छतीति। शास्त्रवासना त्रिविधा बहुपाठव्यसनं बहुशास्त्रव्यसनं बहुसदनुष्ठानव्यसनं चेति। एतदपि त्रयं ज्ञानोत्पत्तिविरोधित्वेन जिज्ञासोर्मनसि प्रतिभासमानं विवेकिभिर्हेयम्।

सन्तोषः सन्निहितशरीरयात्रानिर्व्वाहमात्रहेतुना परितुष्टिः। तथाहि जाबालदर्शनोपनिषत्—

'यदृच्छालाभतो नित्यं प्रीति र्या जायते नृणाम्।
तत् सन्तोषं विदुः प्राज्ञाः परिज्ञानैकतत्पराः॥ इति।

तदेव भाष्यं 'सन्तोषः सन्निहितसाधनादधिकस्यानुपादित्से'ति। माहात्म्यं च तस्य सूत्रितं 'सन्तोषादनुत्तमसुखलाभ' इति। वेदाचार्य्यो भगवान् मनुरपि तच्च स्मरति—'सन्तोषो हि सुखस्य मूलमि'ति। तथा हि महाभारतम्—

यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥ इति।
या दुस्त्यजा दुर्म्मतिभिर्या न जीर्य्यति जीर्य्यताम्।
तां तृष्णां संत्यजन् प्राज्ञः सुखेनैवाभिपूर्य्यते॥ इति च।

तपःस्वाध्यायौ प्रागेव व्याख्यातौ। ईश्वरप्रनिधानमिह साधननाम्नी भक्तिः पञ्चदशायां यैव प्रेमनाम्नी भक्तिरहैतुकी क्रियायोगे प्रागुप-

वर्णिता। तत्र पूर्व्वा भक्तिः साधननाम्नी कारणमुत्तरस्या आमफलं यथा कारणं पक्कफलस्यैव भवति। कारणत्वं च तस्य स्वादभेदनिबन्धनं लोकबोधार्थं न तु वास्तवम्। तदुक्तम्—

निष्कामा वा सकामा वा भक्तिर्विष्णोः शिवस्य वा।
सप्रेमहृदये जाता मुमुक्षा कारणं हि तत्॥ इति।

एतानि शौचादीनि पञ्च नियमा भवन्ति।

यमनियमप्रसाधनैर्मृदूकृतचित्तस्य योगिनो निरन्तरायम् आसनं निरूपितम्। शयनोत्थानगमनेषु चित्तविक्षेपस्य दुर्व्वारत्वात्। तथा च सूत्रं स्थिरसुखमासनमिति। उपविष्टस्य यादृशेन देहधारणेन चित्तचलनराहित्यलक्षणं स्थैर्य्यं सम्पद्यते तदेव स्थिरमासनम्, यादृशेन च देहस्थापनेन कृतासनस्य शरीरव्यथाऽनुत्पत्तिलक्षणं सुखं सम्पद्यते तदेव सुखमासनम्। तच्च द्विविधं बाह्यं शारीरं चेति। तत्र बाह्यं कुशादिकं 'न यथेष्टासनो भूयात् पूजाकर्म्मणि साधक' इत्येवमादिस्मृतेः। शारीरं तु पद्मवीरादिकं मुख्यं भाष्यटीकादिषु दर्शितम्। यत्किंचनापि तेषामाश्रयणीयम्। तदाह राघवभट्टः—

पद्मस्वस्तिकवीरादिष्वेकासनसमास्थितः।
जपार्च्चनादिकं कुर्य्यादन्यथा निष्फलं भवेत्॥ इति।

यावन्तः प्राणिनस्तावतामुपवेशनेषु संस्थाविशेषाः सर्व्वे एव आसनानि भवन्ति। तदेव भगवान् भाष्यकार आसनभेदं लक्षयति—'क्रौञ्चनिषदनं हस्तिनिषदनमुष्ट्रनिषदनमि'ति। तत्र वार्त्तिककारस्य 'क्रौञ्चनिषदनादीनि क्रौञ्चादीनां निषण्णानां संस्थानदर्शनात् प्रत्येतव्यानी'ति। आसने सिद्धे सति शीतोष्णादिद्वन्द्वैर्न कदापि योगसाधका अभिहन्यन्ते।

आसनानन्तरं श्वासप्रश्वासयोर्गतिविच्छेदरूपः प्राणायामो यतश्चित्तचाञ्चल्येन सह प्राणस्पन्दोऽपि निरुध्यते। स च चतुर्व्विधो बाह्यवृत्तिरन्तर्वृत्तिः स्तम्भवृत्तिस्तुरीयश्चेति। तत्र बाह्यवृत्ती रेचकः,

अन्तर्वृत्तिः पूरकः, तयोरान्तरस्तम्भवृत्तिः कुम्भकस्तृतीयो यत्र कुम्भे जलं निश्चलमिव प्राणाख्यो वायुरवस्थाप्यते। देशेन कालेन संख्यया चोपलक्षितः स दीर्घसूक्ष्मसंज्ञो भवति। यथा घनीभूत-तूलपिण्डः प्रसार्य्यमाणो दीर्घः सूक्ष्मश्च भवति, तथा प्राणा अपि देशकालसंख्याभिरभ्यस्यमाना दुर्लक्ष्यतया दीर्घा विरलतया च सूक्ष्माः संपद्यन्ते। तथाहि सूत्रं 'बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्म' इति। यदा पूर्व्वपूर्व्वभूमिकाजयेन रेचक-पूरकावनादृत्य केवलकुम्भक उत्पद्यते, तदा स तुरीयः श्वासप्रश्वासयो-र्गतिविच्छेदरूपो भवति। तदुक्तं 'बाह्याभ्यन्तरविषयानपेक्षो चतुर्थ' इति। वशिष्ठश्च तन्माहात्म्यं प्रख्यापयति—

केवले कुम्भके सिद्धे रेचपूरकवर्ज्जिते।
न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते॥ इति।

पतञ्जलिरपि प्राणायामस्य प्रकारतामभिधाय तत्फलं लक्षयति—'ततः क्षीयते प्रकाशावरणमि'ति। अन्यत् सर्व्वं व्यक्तमाकरे।

अथ योगाङ्गभूतः प्रत्याहारो व्याख्यायते। शब्दस्पर्शरूपरसगन्धेभ्य इन्द्रियाणि प्रतीपमाह्रियन्ते चेतसीति प्रत्याहारः। श्रुतयश्च तेषामाहरणं प्रातिलोम्येन समुदाहरन्ति 'यच्छेद्वाङ्मनसी प्राज्ञ' इत्येवमाद्याः। स च द्विविधो भवति बाह्य आन्तरश्चेति।

प्राणजयानन्तरं यस्मिन् कस्मिंश्चिद्विषये स्थूले वा सूक्ष्मे वा चक्षुराद्यन्यतमद्वारा योगिनश्चित्तं निविष्टं भवति। तत इन्द्रियगणो यदा स्वं स्वं विषयं न गृह्णाति तदाऽयं बाह्यप्रत्याहारः, यदा तु चित्तं स्थिराभ्यासेन तत्त्वं निविशते तदाऽयमान्तरप्रत्याहारः। अतो बाह्यान्तरयोस्तुल्यफलत्वमभिलक्ष्य भगवान् पतञ्जलिरसूत्रयत्—'स्ववि-षयासम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहार' इति। अस्य कठिनांशो व्याख्यायते। चक्षुरादीनामिन्द्रियाणां स्वविषयो-रूपादिस्तेन सम्प्रयोग आभिमुख्येन वर्त्तनं तदभावः स्वविषयासंप्रयोग-

स्तस्मिन् सति श्रोत्रादीनि चित्तस्वरूपमनुकुर्व्वन्तीवावतिष्ठन्त इति यत् स प्रत्याहारः। कथं पुनरिन्द्रियाणां चित्तस्वरूपानुकार इवेति? अयमाशयः। चित्तस्य सर्व्वेन्द्रियतत्त्वाभिमुख्यमस्ति, न तु विषयावगाहिनामिन्द्रियाणाम्। तथाहि ध्यानकाले चाक्षुषादितुल्या वृत्तिश्चित्तस्यैव भवति, न तु चक्षुरादीनाम्। अतस्तेषां तदतिरिक्त-वृत्त्यभावमात्रादिवशब्दः प्रयुक्तः। महर्षिरपि तमेव दार्ष्टान्तिके योजयति—यथा मधुकरराजमुत्पतन्तं मक्षिका अनूत्पतन्ति निविशमानमनुनिविशन्ते, तथा चित्तस्य विषयाभिमुख्ये तान्यपि विषयेषूत्पतन्ति तस्य निरोधे च निरुद्धानीति।

अतः प्रत्याहार इन्द्रियधर्म्मविशेषः। तस्यापि संवेगनिरोध-मन्तरेण संयमे योगिनामनाश्वासो भवति। तथाहि नारदीये—

विषयेषु प्रसक्तानि चेन्द्रियाणि मनीश्वराः।
समाहृत्य निगृह्णाति प्रत्याहारस्तु स स्मृतः॥
अनिर्जित्येन्द्रियग्रामं यस्तु ध्यानपरो भवेत्।
मूढात्मानं च तं विद्याद् ध्यानं तस्य न सिध्यति॥ इति

प्रत्याहारेणेन्द्रियाणां परमो जयो भवति। तथाहि सूत्रं 'ततः परमा वश्यतेन्द्रियाणा'मिति। 'परमा वश्यता' चञ्चलानामिन्द्रियाणां निश्चलता। परमजयमिन्द्रियाणामधिकृत्य शास्त्रकारैर्विविधा मतभेदा उपन्यस्ताः। तत्र शब्दादिष्वव्यसनमिन्द्रियजयः परम इति केचित्। इन्द्रियविषययोः संप्रयोगः स्वेच्छया कस्यापि तन्त्रत्वं विनैवेत्येष इन्द्रियजयः परम इत्यन्ये। आभिमानिकसुखदुःखशून्यो विषयभोगः शब्दादिज्ञानरूप इन्द्रियजयः परम इति परे। रावणेन स्वाभिमुख्यं नीयमानाया अपि सीतायाः पतिव्रतत्वेन तस्मिन्नप्रतिपत्तिवत् स्वविषयैराभिमुख्यं नीयमानानामपीन्द्रियाणां तत्त्वव्रतत्वेन विषये-ष्वत्यन्तमप्रतिपत्तिः परमो जय इन्द्रियाणामिति भगवान् जैगीषव्यः। एतेषां मतानामुत्तरोत्तरमुत्कर्षेऽपि सर्वत्र इन्द्रियवृत्तिनिरोधाभावात्

कस्यापि परमत्वं न प्रतीयते। परमत्वाभावेन च सौभर्य्यादीनामपि योगभ्रंशः श्रूयते। प्रत्याहारेण तु भगवता पतञ्जलिना यो जय इन्द्रियाणामुक्तः स परम एव भवति। विषयशूराणामिन्द्रियाणां विषयास्कन्दने प्रसराभावात्।

इत्थं साधनपादे समाधिसिद्धर्थं श्रद्धावतां मध्यमाधिकारिणां क्रियायोगं तथा चित्तशुद्धर्थं मध्यस्थानां मन्दाधिकारिणामष्टौ योगसाधनान्यभिधाय तेषां यमादिपञ्चकं बहिरङ्गं निरूपितम्। सम्प्रति तावद्विभूतिपादे धारणादित्रयमन्तरङ्गं तदवान्तरफलजातं च निरूप्यते। तदेष श्लोको भवति—

अत्रान्तरङ्गाण्यङ्गानि परिणामाः प्रकीर्त्तिताः।
संयमाद् भूतसंयोगस्तासु ज्ञानं विवेकजम्॥ इति।

धारणादित्रयं यदा सर्वत्र एकविषयं भवति, तदा प्रातिस्विकोच्चारणसौकर्य्यात् त्रयस्य तान्त्रिकी संज्ञा संयम इति। तत्र धारणाध्यानसमाधीनां कार्य्यकारणभावेन नियतपौर्वापर्य्यात् प्रथमं धारणैव व्याख्यायते। भगवान् सूत्रकारोऽपि सह विभूतिभिरन्तरङ्गत्रयमाचक्षाणः प्रथमं धारणामलक्षयत्।

प्रत्याहारपरिपाकेण वशीकृतचित्तस्य धारणा समुदिता भवति। 'प्रत्याहारद्वादशभिर्धारणा परिकीर्त्तिते'ति स्मृतिः। सा च सूत्रिता 'देशबन्धश्चित्तस्य धारणे'ति। तदेव दक्षिणामूर्त्तिस्तोत्रवार्त्तिके ब्रह्मवित्तमः सुरेश्वराचार्य्य आह—'आधारे क्वापि मनसः स्थापनं धारणोच्यते' इति। योगियाज्ञवल्क्यस्तु—

यमादिगुणयुक्तस्य मनसः स्थितिरात्मनि।
धारणेत्युच्यते सद्भिः शास्त्रतात्पर्य्यवेदिभिः॥ इति।

( क्रमशः )

फरिदपुर-कोटालिपाड़-वास्तव्यस्य महामहोपाध्यायरामनाथ-
सिद्धान्तपञ्चाननस्योनविंशवार्षिकस्मृतिसभायाः

## सभापतेरभिभाषणाङ्गश्लोकाः ।

[ श्रीश्रीरामशास्त्री ]

वाग्व्यै श्रीपादुकारूप-परिषत्पतये नमः ।
अन्येभ्यश्चापि सभ्येभ्यो नम आशीर्यथायथम् ॥
आलिङ्गन-नमस्काराद् विजयाजयघोषणम् ।
शाश्वतं बन्धुवर्गेषु पारस्परिकमुच्यते ॥
अतः प्रगृह्यतामस्य सादरं मे नमस्क्रिया ।
आलिङ्गनन्तु जीवानां नित्यमेकात्मभावतः ॥
वैदिकानां वरेण्यस्य पण्डितप्रवरस्य च ।
महामहेतिपूर्व्वस्योपाध्यायस्य महात्मनः ॥
आकाशस्येव सिद्धस्य महनीयगुणस्य च ।
ब्रह्मणः स्वर्गतस्येव भातीयं वार्षिकी सभा ॥
अत्र यो मादृशो मर्त्यो वराकः कृपया हि वः ।
स्थानं प्रापत् सुधीजुष्टं तुष्टिर्मे महती ततः ॥
सिद्धान्तवंशस्य किलावतंस सिद्धान्तपञ्चानन रामनाथ ।
न जातु पञ्चानन ईश अग्रयान् गुणान् समग्रान् तव वर्णितुं वा ॥
तथापि ते यशोहंसेनाक्षिप्तं मे मनःसरः ।
चित्तवारि ततो मेऽद्य नितरां चपलायते ॥
अधीत्य कालेन समस्तशास्त्रं विशेषतो न्यायमनन्यदुर्लभम् ।
प्रदाय शिष्येभ्य उपात्तयत्नो विस्तारयामास सहस्रशो यः ॥
विजित्य च नवद्वीपं विद्यया शिवलब्धया ।
आरोपितो यशस्तम्भो वङ्गाङ्गेऽत्यय्य उत्तमः ॥
तपोजपादिसाध्येषु न्यस्तधीः सुकविः कविः ।
विषये विगतश्रद्धः श्रद्दधानः सनातनः ॥
आर्षप्रभावयुक्ताय शिवभक्ताय भक्तितः ।

# कालसिद्धान्तदर्शिनी।

( पूर्व्वानुवृत्ता )

[ निबन्धकः—श्रीहाराणचन्द्रशास्त्री ]

इति मन्त्रेऽपि भूतभौतिकानामेव सृष्टिः प्रतिपादिता। तथाच वेदान्तेषु क्वचिदपि कालसृष्ट्यदर्शनात्तस्याकाशादिवद् व्यावहारिक्यपि पृथक् सत्ता दुर्लभा। अत एव सिद्धान्तबिन्दावष्टमश्लोकव्याख्यानावसरे प्रतिपादितम्—"दिक्कालौ त्वप्रामाणिकत्वान्नोक्तौ" इति।

अद्वैतसिद्धान्ते कालपदार्थस्यानङ्गीकारे कालव्यवहारः कथंकारमुपपद्यतां कथं वा पूर्वोक्तो वेदान्तपरिभाषाग्रन्थः संगच्छतामिति चिन्तायां तत्रोपपत्तिः कृता श्रीमधुसूदनसरस्वतीयतिवरैरेव सिद्धान्तबिन्दावष्टमश्लोकव्याख्यायाम्—

"कालस्तु अविद्यैव, तस्या एव सर्वाधारत्वात्।" इति।

श्रीगौडब्रह्मानन्दस्वामिपादैर्न्यायरत्नावल्यामधिकं निरूपितम्—

"ननु नेदं युक्तम्, प्रतिबिम्बत्वोपहितं जीवं प्रत्यविद्याया आधारत्वेऽपीशं प्रति तथात्वे मानाभावः, शुद्धं प्रति तु सुतराम्, तस्यैव सर्व्वाधारत्वात्। तत्राह—'तस्या एवे'ति—'सर्वाधारत्वात्' कालिकसम्बन्धेन स्वेतरसर्वाधारत्वात्। ईशादिकमपि तत्सम्बन्धेन तद्वृत्ति, शुद्धचितस्तद्वृत्तित्वाभावेऽपि न क्षतिः। "यः कालकालो गुणी सर्वविद्यः" [ श्वेताश्व० उ०६।१६ ] इत्यादिश्रुतिषु ( शुद्धचितः ) सर्वदृश्याधारकालाधारत्वात्, "चक्षुषश्चक्षुः" ( बृ० उ०४।४।१८ ) इत्यादिश्रुतिषु दृश्यभासकचक्षुरादिभासकत्वात्।" "अयं च साभासाविद्यारूपः"।

एवं च शुद्धब्रह्मातिरिक्तानां परमेश्वरादिसर्वपदार्थानामाधारः कालः स चाविद्यारूपोऽपि न शुद्धाविद्यास्वरूपः किन्तु चैतन्याभासयुक्ताविद्यारूपः। इयं च साभासाविद्या परमेशोपाधिः, अविद्यागता-

भासाविविक्तं चैतन्यं च परमेश्वर इत्यपि प्रतिपादितमत्रैव न्यायरत्नावल्याम्।*

"वस्तुतस्तु महाकाले मानाभावः, इदानीमिदमित्यादिबुद्धेर्जन्यमात्ररूपखण्डकालमात्रविषयकत्वमेव।" (न्यायरत्नावली)।

तथा चाद्वैतवादिमते साभासाविद्याया अपि कालत्वं नाङ्गीक्रियते, कालव्यवहारस्य कालोपाधिभूतैर्जन्यपदार्थैरेव निर्वाहादिति श्रीब्रह्मानन्दाभिप्रायः। इदमत्रावधेयम्—"तद्धेदं तर्ह्यव्याकृतमासीत्" (बृ० उ० १।४।७) इति प्रलये कालसत्ताश्रवणात्तत्र च जन्योपाधीनामसत्त्वादविद्ययैव कालव्यवहारस्योपपादनीयतया पूर्वोक्तं श्रीमधुसूदनमतमेव समीचीनम्। पूर्वोक्तो वेदान्तपरिभाषाग्रन्थस्तु कालसत्तामभ्युपेत्य नेतव्यः। परिभाषाकृद्भिरपि कालाभावमभिप्रेत्य धारावाहिकबुद्धिस्थले पर्य्यवसाने एकामेवान्तःकरणवृत्तिमङ्गीकृत्याव्याप्तिदोषोद्धारः कृतः। तत्रत्यटीकाकाराणां प्रकारान्तरेण ग्रन्थयोजनं तु न युक्तमिति ध्येयं सुधियाम्।

बौद्धवेदान्तिनोर्मते कालो न पारमार्थिकः किन्तु व्यावहारिक इत्यन्यत्राप्युक्तम्—

"अथ वेदान्तिसौगतदृशा व्यवहारनिबन्धन एव कालः, न पारमार्थिक इत्युच्यते। यदाहुः—

"केचिद्बुद्ध्यनुसन्धानपूर्वकत्वं प्रचक्षते।" [ एतद्वेदान्तिमतम् ]
ज्ञानानुगतशक्तिर्वा बाह्येनासत्यतः स्थितः॥ [ एतद्बौद्धमतम् ]
कालात्मानमनाश्रित्य व्यवहारो न शक्यते।" इति।

---

* "अविद्यागताभासाविविक्तचित एवेश्वरत्वस्योक्तत्वात् साभासाविद्यायामीश्वरोपाधित्वम्।"—न्यायरत्नावली।

"किञ्च सिद्धान्ते धारावाहिकबुद्धिस्थले न ज्ञानभेदः, किन्तु यावद् घटस्फुरणं तावद् घटाकारान्तःकरणवृत्तिरेकैव न तु नाना।"—

वेदान्तपरिभाषा—प्रत्यक्षपरिच्छेदः।

श्रीमन्नरेन्द्रवृत्तिदीपिका—१०म प्रकरणम्—१४कारिका।

एतन्मतखण्डनावसरे श्रीमृगेन्द्रवृत्तिदीपिकायामुक्तम्—

"द्विचन्द्रादिवदविद्यारूपत्वेनासत्यत्वात्" इति।

एतेनापि कालस्य काल्पनिकत्वं व्यज्यते।

वैशेषिकमतम्। वैशेषिकतन्त्रे कालस्य द्रव्यत्वं विभुत्वमेकत्वं नित्यत्वमुपाधिभेदेन चैकस्यापि तस्य नानात्वव्यवहार* इति सिद्धान्तितम्। कालस्तु वैशेषिकराद्धान्ते न प्रत्यक्षः; अत एव तत्साधकमनुमानमुपन्यस्तं † पुरातनैः काणादतन्त्रपरिशीलननिपुणैः। "तस्य गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागाः।" (प्रशस्तपादभाष्यम्—द्रव्यग्रन्थः) "सर्वोत्पत्तिनिमित्तं जगदाधारश्च कालः।" (काणादसिद्धान्तचन्द्रिका—१०पृष्ठे)

---

* "काललिङ्गानां परापरादिप्रत्ययानामविशेषाद्भेदाप्रतिपादकत्वादञ्जसा मुख्यया वृत्त्या कालस्यैकत्वेऽपि सिद्धे नानात्वोपचारान्नानात्वव्यपदेशः।" इति न्यायकन्दली। "काललिङ्गाविशेषादञ्जसैकत्वेऽपि" इत्यादिप्रशस्तपादभाष्यव्याख्यानमेतत्।

"ननु कालस्य भूतभविष्यद्वर्त्तमानभेदेन बहुत्वात् कुत एकत्वमिति चेत्, न; उपाधिभेदेन भेदप्रत्ययात्। कालोपाधयो रविक्रियादिरूपा भिन्ना एव।" इति तर्कामृतम्।

† "स्थविरादौ परत्वं तपनपरिस्पन्दप्रकर्षबुद्धिजन्यं तदनुविधायित्वात् पटकुविन्दवत्। ते च तपनपरिस्पन्दाः स्थविरशरीरप्रत्यासत्तिमपेक्षन्ते, स्वभावतोऽप्रत्यासन्नत्वे सति तदवच्छेदकत्वात् पटावच्छेदकमञ्जारञ्जनरागवत्। सा च प्रत्यासत्तिर्द्रव्यकृता प्रकारान्तरासम्भवे सति प्रत्यासत्तित्वादेव, पटे मञ्जारञ्जनप्रत्यासत्तिवत्। तच्च द्रव्यमितरेभ्यो भिद्यते विशिष्टपरत्वाद्यनुमेयत्वात्।" इति किरणावली। "परत्वजनकं बहुतरविक्रियाविशिष्टशरीरज्ञानमिदं परम्परासम्बन्धघटकसापेक्षं, साक्षात्सम्बन्धाभावे सति विशिष्टज्ञानत्वात्, लोहितस्फटिक इति प्रत्ययवत्। परम्परासम्बन्धश्च स्वसमवायिसंयुक्तसंयोगः। तेन सम्बन्धघटकः कालः सिध्यति।" इति तर्कामृतम्।

वैशेषिकसिद्धान्तसम्मता एव पदार्था नैयायिकानामनुमताः। अत एव न्यायसिद्धान्तमुक्तावल्यां द्वितीयकारिकाव्याख्याने वैशेषिकतन्त्रसम्मतान् सप्त पदार्थानुपक्रम्य प्रतिपादितम्—"एते च पदार्था वैशेषिके प्रसिद्धाः, नैयायिकानामप्यविरुद्धाः, प्रतिपादितं चैवमेव भाष्ये" इति।

नैयायिकमतम्।

"दिक्कालयोरपि परत्वापरत्वानुमेयत्वेन सिद्धावेकत्वसिद्धिः। तथाहि तरणिपरिस्पन्दलक्षणाहोरात्राद्यल्पबहुत्वाभ्यां विशिष्टे पिण्डे परापरबुद्धिर्जायते, तरणिपरिस्पन्दस्य च सूर्य्यसमवेतत्वेन स्वतः पिण्डसम्बन्धाभावात्। सूर्य्यस्य च मूर्त्तत्वेनाश्रयद्वाराऽपि सम्बन्धाभावात्। न च पृथिव्यादीनां तत्सम्बन्धघटकता मूर्त्तत्वात्। आत्माकाशयोश्च विशेषगुणवत्त्वेन घटादिवत्तदघटकत्वात्। ततस्तरणिपरिस्पन्दपिण्डसम्बन्धघटकतया सिद्धं यद् व्यापकं द्रव्यं स एव कालः। पिण्डस्य तरणिपरिस्पन्देन (संयुक्त) संयुक्त-समवायलक्षणः सम्बन्धः। सप्तपदार्थी-मितभाषिणी-टीकायाः (Vizianagram Sanskrit Series) २७ पृष्ठे।

तत्रत्यदिनकरीयटीकायामपि निरूपितम्,—"नैयायिकानामपि मते सप्त पदार्था इत्यविरुद्धम्, षोडशपदार्थानां* सप्तपदार्थेष्वन्तर्भूतत्वात्" इति। एवं च कालविषये वैशेषिकसिद्धान्तेनैव नैयायिकसिद्धान्तो व्याख्यातो वेदितव्यः।

न्यायमञ्जरीग्रन्थे जयन्तभट्टप्रणीते १३८ पृष्ठे ( Vizianagram Sanskrit Series )—

"दृष्टः परापरत्वस्य दिक्कृतस्य विपर्य्ययः।
युवस्थविरयोः सोऽपि विना कालं न सिद्ध्यति॥"

---

* "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वनिर्णयान्निःश्रेयसाधिगमः" (१।१।२) इति गौतमसूत्रोद्दिष्टानां षोडशानां पदार्थानां काणादतन्त्रसिद्धेषु सप्तपदार्थेष्वन्तर्भावात्। स चायमन्तर्भावप्रकारस्तत्रैव निरूपित इति व्यक्तं विदुषाम्।

इत्यादिना परत्वापरत्वाभ्यां कालकृताभ्यां कालोऽनुमीयत इत्युपपाद्य तस्यैकत्वं निरवयवत्वं विभुत्वं द्रव्यत्वं नित्यत्वं च समर्थ्य क्रियारूपोपाधिवशादेकस्यापि कालस्य वर्त्तमानादिभेदव्यपदेश इति निरूपितम्। उपसंहारे च

"समानतन्त्रे दिक्कालौ वैतत्येन विचिन्तितौ।
तन्नेह लिख्यते लोके द्वेष्या हि बहुभाषिणः॥" [१४१पृष्ठे]

इत्युक्त्वा वैशेषिकतन्त्रसिद्धान्त एव कालविषये नैयायिकानामभिमत इति प्रत्यपादि। परन्तु सर्वान्ते—

"सिद्धः कालश्चाक्षुषो लैङ्गिको वा
तन्नानात्वं सिद्धमौपाधिकं च।" [ न्यायमञ्जर्य्याम् १४७ पृष्ठे]

इत्यभिधानान्मीमांसकपक्षपातिनां जरन्नैयायिकजयन्तभट्टानां कालस्य प्रत्यक्षत्वेनातीव विमतिरिति प्रतीयते।

नव्यनैयायिकप्रवरा दीधितिकारा रघुनाथशिरोमणिचरणास्तु स्वयं नैयायिका अपि चिरन्तननैयायिकसिद्धान्तमसमञ्जसं मन्यमानाः

दीधितिकारमतम्

कालविषयेऽभिनवं सिद्धान्तमुपन्यास्थन् अतिरिक्तकालवादिभिः कालोपाधित्वेन स्वीकृतैरेवोपाधिभिरवच्छिन्नः परमेश्वरः कालव्यवहारविषयो न तु परमेश्वरातिरिक्तः कालोऽङ्गीकर्त्तव्यः, प्रमाणाभावात्। अथवा क्षणा एवातिरिक्ता इदानीमित्यादिव्यवहारविषयाः, विभागप्रागभावावच्छिन्नकर्म्मणः क्षणत्वासम्भवात्; * * * * एवं चोपाधीनामतिरिक्तानां क्षणिकपदार्थरूपाणां क्षणानामवश्याभ्युपेयतया तैरेव तादृशाः सर्वे व्यवहारा उपपादनीयाः किमतिरिक्तेन कालेन।" ( जयनारायणभट्टाचार्य्यकृते शास्त्रार्थसंग्रहे ३८३ पृष्ठे )। एतत्सर्वं पदार्थतत्त्वनिरूपणे ( काशीमुद्रिते २-३-५८-५९-६० पृष्ठेषु ) स्पष्टम्।

परन्त्विमं सिद्धान्तमर्वाचीना नैयायिका नाङ्गीचक्रुः। खण्डितश्चैतन्मतं रामभद्रसार्वभौमविरचितायां पदार्थतत्त्वनिरूपणटीकायां

"वस्तुतस्तु 'प्राच्यां दिशि घटः' 'एतस्मिन् काले घटः' इत्यादिप्रतीतयो विलक्षणविशेषणतावच्छरूपदिक्त्वकालत्वे उपाधी अवगाहन्त" इत्यादिना। न्यायसिद्धान्तमुक्तावलीव्याख्यायां दिनकरभट्टेनापि तृतीयकारिकाव्याख्यानावसरे कालस्यातिरिक्तत्वं समर्थितम्।

क्षणात्मकः कालः स च परमसूक्ष्मत्वादस्मदादीनामिन्द्रियागोचरोऽपि योगिभिर्योगजप्रत्यक्षेण गृह्यते इति महाभाष्यकारमतं कैयटव्याख्यानुसारेण पर्य्यवस्यति। तदुक्तं "वर्त्तमाने लट्" ( ३।२।१२३ ) इति सूत्रशेषे महाभाष्ये—

"अस्ति वर्त्तमानः कालः। आदित्यगतिवन्नोपलभ्यत इति।"

व्याकरणमहाभाष्यकारमतम्।

अत्र "प्रत्यक्षेणेति शेषः" इति महाभाष्यप्रदीपोद्योतः।

"परोक्षे लिट्" ( ३।२।११५ ) इतिसूत्रे महाभाष्यप्रदीपे कैयटेन कालस्य परोक्षत्वोपपादनायाभिहितम्—

"यथा कालस्य नित्यत्वपक्ष उपाधिभेदाद्भूतादिव्यपदेशस्तथा परोक्षत्वमपि, अनित्यक्रियारूपकालपक्षे तु स्वत एव परोक्षत्वम्।"

अत्र क्रियाया अप्रत्यक्षत्वाभिप्रायेण नित्यकालपक्षे क्रियोपाधिकस्य तस्योपाधिवशादप्रत्यक्षत्वमुक्तम्। "वर्त्तमाने लट्" (३।२।१२३) इति सूत्रान्ते च कैयटेनोक्तम्—

"अनेकक्षणसमूहात्मकस्य धातुवाच्यस्यार्थस्य क्रियारूपस्य" इति।

एवं च क्रियारूप एव क्षणः कालः स च परोक्ष एवेति भाष्यसिद्धान्तत्वेन कैयटोपाध्यायेनाभिप्रेयते।

"त्रिभावा वेदयन्ते" (३।२।१२३) इति भाष्यांशव्याख्यानावसरे "त्रिषु कालेषु भावो भावना येषां ते त्रिभावा योगिनो ये भावनावशेन त्रीनपि कालान् योगिप्रत्यक्षेण विदन्ति।" इति कैयटोपाध्यायोक्त्या कालस्य भाष्यमते योगिप्रत्यक्षगम्यत्वं कैयटोपाध्यायेनाभ्युपेयत

इति प्रतीयते। एवञ्च कैयटव्याख्यानुसारेण कालस्य लौकिकप्रत्यक्षा-वेद्यता महाभाष्याच्चरान्निःसरति।

अपरे च वैयाकरणा ब्रह्मैव कालव्यवहारे कारणमिति मन्यन्ते। तथाहि लघुमञ्जूषायां स्फोटनिरूपणे प्रसङ्गेनोद्धृता भर्त्तृहरेः कारिका—

लघुमञ्जूषामतम्।
"कालात् क्रिया विभज्यन्त आकाशात् सर्वमूर्त्तयः।
एतावानेव भेदोऽयमभेदोपनिबन्धनः॥"

इति। अत्र नागेशभट्टः—"आकाशस्याधारत्वं सिद्धस्वभाववस्तु-विषयम्। साध्यस्वभावक्रियाविषयन्तु कालस्याधारत्वमित्याह—कालादिति। जन्मस्थितिनिरोधेषूपकुर्वन् क्रियाधारः कालः।" इति।

एतेनैतन्मते कालस्य साक्षात् क्रियाधारत्वात् क्रियाधारत्वं मुख्यम्, "इदानीं घटः" इत्यादौ तु प्रतीयमानं द्रव्याधारत्वं क्रियाद्वारकपरम्परयेति सूचितम्।

इतोऽग्रे कालाकाशयोर्भेदो व्यावहारिक एवेत्युक्त्वा "अभेदोपनिबन्धन" इति पूर्वोक्तकारिकांशो व्याख्यातः ;—

भेदरहितं यद् ब्रह्म तदुपनिबन्धनं वस्तुभूतं यस्य स इत्यर्थः। ईश्वर एव तत्तदाधारत्वविशिष्टं तत्तत्संज्ञां लभत इति तात्पर्य्यम्। 'अखण्डः कालः' इति मते तस्येश्वरातिरिक्तत्वखण्डनमिदं बोध्यम्।" इति।

अनेन हि मञ्जूषाग्रन्थेन 'अखण्डः कालः' इति पक्षोऽपि केषाञ्चिद्वैयाकरणानां सम्मतः, स च परमेश्वरादनतिरिक्त इति पर्य्यवसितम्।

अद्वैतसिद्धिलघुचन्द्रिकायां प्रथमपरिच्छेदे परिच्छिन्नत्वहेतूपपत्ति-प्रस्तावे—

"जातीनां सद्रूपत्वमविद्याशक्तिविशेषरूपत्वं वेति पक्षद्वयमस्मदीयैः कैयटादिभिश्चाचार्य्यैरुक्तम्" इति श्रीगौडब्रह्मानन्दसरस्वतीलेखदर्शनेन यथा जातिविषये पक्षद्वयं प्रामाणिकत्वेनाभ्युपेयते तथाऽत्रापि काल-

विषये पक्षद्वये प्रामाणिकानां सम्मतिदर्शनेन पक्षद्वयमपि साधुत्वेनाध्यवसीयते।

ननु वस्तुस्वरूपे विकल्पासम्भवात्कथमत्र पक्षद्वयस्य साधुत्वमभिधीयते इति चेत्, वैयाकरणानां ब्रह्माद्वैतवादिनां शङ्करभगवत्पादानुयायिनां चोभयेषामपि सिद्धान्ते ब्रह्मातिरिक्तसर्ववस्तूनां वस्तुतोऽसत्त्वेन कल्पितवस्तुसमाश्रयणेन कल्पिता व्यवहारा निर्वाह्याः, व्यवहारनिर्वाहश्च यथाकथञ्चिदुभयथाऽपि सम्भवतीति मत्वा यथाकथञ्चिद्व्यवहारोपपादनायोभयपक्षोपन्यासः कृतः। न चात्र कस्यापि पक्षस्य पारमार्थिकत्वे तात्पर्य्यमित्यविरोधः।

वाक्यपदीये ब्रह्मकाण्डे—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
वाक्यपदीयमतम्। विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥१॥
एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्त्तते ॥२॥

इति कारिकाभ्यामेकमद्वितीयं नित्यं शब्दरूपं ब्रह्म विचित्रशक्तिसहकारिणा प्रपञ्चरूपेण विवर्त्तते, शक्तयश्च ब्रह्मणः परमार्थतोऽभिन्ना इति प्रतिपाद्य—

अध्याहृताः कला यस्य कालशक्तिमुपाश्रिताः।
जन्मादयो विकाराः षड् भावभेदस्य योनयः ॥३

इति तृतीयकारिकया ब्रह्माभिन्नत्वेन नित्यानां प्रपञ्चकल्पकशक्तीनां कालरूपा ब्रह्मशक्तिर्नियामिका, तया कालरूपया ब्रह्मशक्त्या प्रतिबद्धा इतरशक्तयः कार्य्यं नोपजनयन्ति, तयाऽभ्यनुज्ञाताश्च कार्य्यमुत्पादयन्तीति प्रतिपादितम्।

( क्रमशः )

———

संस्कृतसाहित्यपरिषदश्चतुर्दशवर्षीयमहोत्सवे

# सभापतेरभिभाषणम्

[ निबन्धकः—म. म. श्रीकामाख्यानाथतर्कवागीशः ]

अद्य संस्कृतसाहित्यपरिषदो वार्षिकमधिवेशनम्। अस्मिन्नधिवेशने अधिवेशनस्थानं विद्वत्प्रियमहात्मभिः सभ्यवृन्दैः समलङ्कृतम्। अधिवेशने सभापतेरासनम् अयोग्येनापि परिगृहीतवता मया सभापतिवक्तव्यं संक्षेपेण किञ्चिदुच्यते, तच्छ्रुतिकठोरमपि परिषदः सभ्यवृन्दैः श्रोतव्यम्। संस्कृतसाहित्यपरिषद् इत्याख्या अन्वर्था बभूव, यत उक्ताख्यान्तर्गतं पदत्रयं वर्त्तते, प्रथमं संस्कृतपदं व्याकरणलक्षणाधीनसाधनयुक्तपदं तस्यार्थः, द्वितीयं साहित्यपदं कुत्रचित् तस्य मेलनम् अर्थः, कुत्रचित् तुल्यवदेकक्रियान्वयित्वम् अर्थः, जगदीशमते बुद्धिविशेषविषयत्वम् अर्थः, अत्र च गद्यपद्यात्मकं काव्यम् अर्थः, काव्यञ्च रसात्मकं वाक्यं, वाक्यञ्च साकाङ्क्षपदसमूहः, पदत्वञ्च अर्थवत्त्वम् अर्थात् वाचकत्वम्, परिषदिति तृतीयं पदम्, परि सीदन्ति अस्याम् इति व्युत्पत्त्या परिषत्पदस्य अर्थः सभा तथाच साहित्यस्य साहित्यसेविनः परिषत् साहित्यपरिषत्, वाचकपदसमूहघटितरसात्मकवाक्यसेविनां सभा साहित्यपरिषत्पदतः प्रतीयते, न त्वपभ्रंशवङ्गभाषादिघटकपदसमूहघटितरसात्मकवाक्यसेविनां सभा साहित्यपरिषत्पदेनाभिधीयते, अतः संस्कृतसाहित्यपरिषत् इत्यत्र संस्कृतपदम् इतराव्यावर्त्तकमप्यधिकविकाशकतया सार्थकम्, इतराव्यावर्त्तकस्याप्यधिकविकाशकतया सार्थकत्वं हेत्वाभासविवृतौ गदाधरभट्टाचार्य्येण समर्थितम्। संस्कृतभाषाव्यतिरिक्तभाषान्तर्गतापभ्रंशपदानां न वाचकत्वं, शास्त्रभ्रमात् तैः पदैरर्थबोधो भवति, न हि भ्रमाद् वस्तुसिद्धिः इति नियमात् भ्रमसङ्कुलपदघटितवाक्यानां न काव्यत्वं न वा तादृशवाक्यरचयितॄणां

कवित्वम्। उक्तवाक्यानां काव्याभासत्वम्, उक्तवाक्यरचयितॄणाम् आभासीभूतकवित्वं न तु तात्त्विककवित्वम्, तथापि इदानीन्तन-कालमाहात्म्येन पद्मरागादिमणिस्थाने काचमणेः सन्निवेश इव, वट-वृक्षादिस्थाने एरण्डवृक्षसन्निवेश इव, प्रकृतकाव्यस्थाने काव्यलक्ष-णाक्रान्तानाम् अपभ्रंशपदघटितकाव्याभासानां प्रकृतकविस्थान आभासीभूतकवीनाम् अर्थादपभ्रंशपदैः काव्यरचयितॄणां सन्निवेशो भवति। तत्राभासीभूतकवीनां मध्ये कश्चित् कविरत्नोपाधिना कश्चित् कविसागरोपाधिना कश्चिच्च कविसम्राडुपाधिना च भूषितः प्रकृत-कविस्थानमधिरोहति स्म। संस्कृतशास्त्रपारदर्शिनो ये प्राक्तना विद्वांस-स्तेषां तर्करत्न-विद्यारत्नविद्यासागराद्युपाधयो व्याधित्वेन परिणता बभूवुः। आभासीभूतकविभिस्तेषां स्थानाधिकारात् ते स्थानभ्रष्टाः मन्ये इतस्ततः परिभ्रमन्ति इत्यपेक्षया किं दुःखबाहुल्यं भवितु-मर्हति।

अनेकेषां महात्मनाम् एषा धारणा—अपभ्रंशपदघटितकाव्यं श्रुतिमधुरं संस्कृतपदघटितकाव्यं श्रुतिकठोरमिति, परन्तु सा धारणा भ्रममूलिकैव। तत्संशोधनार्थं कतिचित् संस्कृतगद्य-पद्यांशान्, कतिचित् प्राकृतगद्यांशान्, कतिचिदपभ्रंशपदघटितगद्यपद्यांशांश्च महात्मभिराकलय्य उभयोर्माधुर्यवैषम्यं समनुभूयताम्। संस्कृत-साहित्यपरिषन्मासिकप्रबन्धप्रकाशेन विद्यार्थिनो बहुतरशास्त्रसंवादं बहुतरशास्त्रसिद्धान्तञ्चानायासेन परिज्ञातुं लब्धसामर्थ्या बभूवुः, अत स्तेषां महानुपकारोऽनेन साधितः, तस्मादुक्तपरिषद् यथोत्तरोत्तरं महोन्नतिसोपानमधिरोहति तथा महात्मभिर्यतितव्यमित्यलमधिकेन।

---

## निःसारं जगत्

[ निबन्धकः—श्रीरघुवीरनारायणशर्मा ]

तारकागणैरभिवन्दितः कुमुदिनीनायकश्चन्द्रो निजनैशिकीं परिचर्य्यां समारब्धुमधुनैव व्योम्न्यासीनः सुधांशुजालैरखिलमेतज्जगदुद्भासयत्, सुखकर-करचय-शीतलीकृतमन्दानिलः कुसुमित-वाटिकां गतां सौरभसम्भृतां पुष्पकलिकां मन्दं मन्दं परिचाल्य समावहच्च। सुरभीणि सुमनोरजांसि दीन-पान्थ-मनोविभवान् समाहृत्य वाटिकान्तिकं कक्षं सुरमणीय-गवाक्षजालैः समभिगम्य निद्रापरतन्त्रीकृतात्मज्ञानं षोडशिकं कञ्चनातिरमणीयवपुषं युवानं शीतलं समपादयत्। विहित-विबुधप्रिय-बालविधु-विविधविहारमदो विकच-विमल-बालकुमुदिनी-रस-रञ्जित-मधुकर-प्रियमानस-हारि सरः श्रुति-सुखकर-मञ्जुल-कलरवेण वेणुशब्दकर्षितैणकुणकमिव समुत्कण्ठितमकरोच्चेतः। निशीथ-नितान्त-नीरवता निखिल-निर्जन-वन-परिव्याप्ता निशानवगाह्यमानं नैस्तब्ध्यम् न्यवेदयत्। एतस्मिन्नेव सुरमणीये क्षणे रजनी-निस्तब्धतां संविदार्य्य संसार-शोक-शकलीकृत-हृदयायाः कस्याश्चिद्युवत्याः करुणक्रन्दनं कर्ण-कुहरं प्रविश्य प्रशान्त-हृदयाम्बुधिं विमथ्य चेतनाविहीनमकरोत्तं विमलवपुषं युवानम्। सहसैवोत्थायोन्मत्त इव क्रन्दनाभिमुखस्तत्कारणानुसन्धानसंलग्नमनाश्चन्द्रिकाप्रदर्शितोद्यानमार्गः प्रस्थितोऽसौ युवा। समागत्य च तत्रापश्यत् ललनाकुलललामभूतां शोकसन्तप्तां काञ्चन युवतीम्। समवलोक्य तु ताम् विस्मयोत्फुल्ललोचनः स्तब्धीभूतश्चित्रार्पित इव तूष्णीमतिष्ठत्। रमण्यपि निशीथत्वाद्विमुक्तजनसंघं काननं विज्ञाय समागता, अवलोक्यातर्कितोपनतं युवानं तम् आश्चर्य्याम्बुधौ निमग्नोऽभवत्। क्रन्दनं तस्या वलुप्तम् मुखमण्डलं नूतनां कान्तिं समधत्त।

अथ निजजनकनयनानन्दकरो जननी-हृदय-प्रगाढाम्बुधेः पूर्णचन्द्रो जन-मनोरञ्जकः सुकोमल-कुसुम-कलिकोपचितकलेवरोऽयं युवा सुनिस्तब्धायामस्यां रजन्यां किमभिप्रेत्यागच्छतीत्यनेका विचारणा युवत्यास्तस्या मानसमन्दिरमध्यकुर्वन्। त्रिचतुरपदानि गत्वा साप्रच्छत् तम् नवयौवनभारनतम्—को भवान्? निस्तब्धायामस्यां रजन्यां कथमेकाकी वनान्तराले निर्भीकः परिभ्रमति? अत्र न कोऽपि भवदागमनहेतुरनुमीयते मया। अपि भवान् मम मानस-शङ्कां निवारयितुं निजागमनहेतुकथनरूपमनुग्रहं सम्पादयिष्यति? अवलोक्य भवन्तं समुदभून्मम चेतस्यानन्दसन्दोहः परन्तु सहसैव विविधविचारणावल्यकरोन्ममचेत आन्दोलितम्।' श्रुत्वा श्रुति-मधुरां हृदय-सहज-भाव-भारनतां वाणीमुवाच स पुरुषः—'देवि! अस्मरह-मीश्वरसृष्टजन्तूनामेकः क्षुद्रतमः। अधुनैव प्रगाढनिद्रावशीकृतस्य मे कर्ण-कुहरे समागतं किमपि दीन-क्रन्दनम्। शुश्रुवांस्तद्विह्वलीकृतचेता अहम् आगच्छाम्यत्र। कथयिष्यति भगवति! किमासीत्तत् क्रन्दनम्, समागते मय्यत्र कुत्र विलीनमभवत्?" "मयैवाक्रन्दितम्" इत्युक्तं तया रमण्या। "दृष्ट्वा त्वां मम सहसा विलुप्तम् आक्रन्दनम्, चेतःप्रमादश्च मे प्रतिनिवृत्ता। संसारोऽयं सुदुस्तरः। ऊर्म्मिमये विक्षुब्धेऽस्मिन् भवाम्बुधौ जीवन-नौका-समारूढा दुःखमकरेणाक्रान्ताहम्। मन्ये, सहायस्त्वं मे समुपस्थितोऽधुना। संसारसागरान्मामुद्धृत्य कमपि पन्थानं प्रदर्शय, येन सुखमयं जीवनं यापयेयम्।" श्रुत्वैतदमृतवचनं स स्नेहार्द्रचित्तः सुरमणीये स्थाने समानीय 'ईश्वर-श्रीपादयोः पाथोज-मकरन्द-मत्तमधुप इव समालीना भव' इति शिक्षां विधाय पुनरभिवाद्य च तां निजभवनं समाजगाम। रमण्याऽपि परित्यक्तं राजभवनमङ्गीकृतश्च वनवासः। तत्रैव हरिराराधितस्तया। 'निःसारमेतज्जगत्' इत्येवानुभूतमनया।

---

## कुलार्णवतन्त्रस्य सम्प्रदायविशेषः*

[ निबन्धकः—श्रीचिन्ताहरणकाव्यतीर्थः एम्-ए ]

नाविदितमेतदागमशास्त्रालोचकानां यत् सम्प्रदायभेदाः समुपलभ्यन्ते कियतामागमग्रन्थानाम्। न च निर्णीतपूर्वः समालोचितपूर्वो वायं विषयः किंनिबन्धनोऽयं सम्प्रदायभेद इति। न हि ग्रन्थविशेषस्य सर्वेऽपि सम्प्रदायास्तुल्यमेव परिचिताः। सम्प्रदायविशेषाणां प्रचरद्रूपत्वं सम्प्रदायविशेषाणाञ्चाप्रचरद्रूपत्वमालोचयद्भिर्मनीषिभिरप्रचरतामल्पप्रचारवतां वा सम्प्रदायानामर्वाचीनत्वं कृतिमत्वं कूटरूपत्वं चाश्रीयते। परं न सर्वत्र प्रचारस्यैवाकृत्रिमत्वप्रमाणरूपेणोपन्यासो युज्यतेतराम्। कृत्रिमत्वाकृत्रिमत्वरूपैककोटिकनिर्णये सर्वथा सम्यगालोचनमेवापेक्षणीयम्। एवञ्चाप्रचरद्रूपाणां प्रायेणाविदितस्वरूपाणां सम्प्रदायभेदानां वा विवरणं संग्रहीतव्यं येनैषां प्रकृतस्वरूपनिरूपणे सौकर्य्यं भवेत्।

एतदालोचयन्तो वयमद्य परिषदो हस्तलिखितग्रन्थशालायां समाहृतानां कुलार्णवग्रन्थानाम् एकस्य विवरणमाकलयितुं कृतोद्योगा वर्त्तामहे। अनन्तरनिरूपितोऽयं कुलार्णवग्रन्थ आर्थार-एभेलन—रसिकचन्द्रचट्टोपाध्यायादिभिः प्रचारं गमितेन कुलार्णवग्रन्थेनासंवदन् नाममात्रसादृश्येऽपि सर्व्वथा पृथग्ग्रन्थ इवाभाति।

ज्ञानानन्दपरमहंसविरचिते कौलावलीनिर्णये ग्रन्थादौ निरूपितेष्वाकरभूतग्रन्थनामसु कुलार्णवतन्त्रस्य द्विरुल्लेखात् कुलार्णवग्रन्थस्यापि सम्प्रदायभेदवत्त्वं सर्व्वतो नाज्ञातपूर्व्वं प्राक्तनाचार्याणाम् इति प्रतिभाति।

कुलार्णवान्तर्भूतत्वरूपेण निरूपिता ईशानसंहिता-कालिकासहस्र-

---

* परिषदो मासिकाधिवेशने वाचितोऽयं निबन्धः।

नामगणपतिपञ्चाङ्ग-गणेशस्तव-चक्रभेदनिर्णयदुर्गाद्यकारादिसहस्रनाम-स्तोत्रदेवीस्वरूपस्तुति-शाक्तक्रमश्यामाकवचादिप्रचरत्कुलार्णवानुपलब्ध-विषयात्मकाः Catalogus Catalogorum इति ग्रन्थस्थ्यासमुल्लिखिता ग्रन्था अपि कुलार्णवसम्प्रदायभेदवत्त्वे प्रमाणम्। बङ्गीयसाहित्य-परिषदो ग्रन्थशालायामष्टादशोल्लासात्मकस्य चतुर्विंशत्यधिकनव-शतसंख्यकस्य कुलार्णवस्य हस्ताङ्कितग्रन्थोऽपोममेवार्थं दृढयति।

अस्तु, संस्कृतसाहित्यपरिषत्कुलार्णवग्रन्थविवरणाकलनरूपं प्रकृत-मनुसरामः। ग्रन्थोऽयं द्वादशोल्लासात्मकः। तत्रैतेषु द्वादशसूल्लासेषु निरूपिता विषया यथाक्रमं कुलाचारमाहात्म्यम्, पञ्चतत्त्वनिर्णयः, कुलपूजाविधानकुलद्रव्यसंस्कारौ, चक्रपूजा, चक्रभेदः, योनिपूजा, योनिमन्त्रोद्धारः, योनिपीठार्च्चनम्, रहस्यपूजा, विशेषदिवसार्च्चनम्, कुलद्रव्यपाकः, योनिकवच-योनिस्तवौ इति।

ग्रन्थारम्भोपसंहारसन्दर्भौ चात्र विस्तरत उद्भ्रियेते।

आरम्भः—

श्रीदेव्युवाच।

कुलेश श्रोतुमिच्छामि सर्व्वजीवदयानिधे।
कुलधर्म्मस्त्वया देव सूचितो न प्रकाशितः॥
तस्य धर्म्मस्य माहात्म्यं सर्व्वधर्म्मोत्तमस्य च।
वद मे परमेशान यदि तेऽस्ति कृपा मयि॥

श्रीशिव उ[वा]च॥

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
तस्य श्रवणमात्रेण निष्पापं जायते नरः॥
ब्रह्मविष्णु-इन्द्रादीनां न मया कथितं पुरा।
कथयामि तव स्नेहात् शृणुस्वैकाग्रचेतसा॥
पारंपर्य्याक्रमायातं पञ्चवक्त्रेषु संस्थितम्।
अकथ्यं परमेशानि तथापि कथयामि ते॥

त्वयापि गोपितव्यं हि न देयं यस्य कस्यचित् ।
देयं शिष्याय भक्ताय चान्यथा पतनं भवेत् ॥
सर्व्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम् ।
वैष्णवादुत्तमं शैवं शैवाद्दक्षिणमुत्तमम् ॥
दक्षिणादुत्तमं वामो वामात् सिद्धान्तमुत्तमम् ।
सिद्धान्तादुत्तमं कौलं कौलात् परतरं न हि ॥

उपसंहारश्च—

इति ते कथितं देवि सर्व्वसिद्धिप्रदायकम् ।
स्तोत्रं योनेर्मर्म्माणि प्रकाशयति ते प्रिये ॥
यः पठेत् प्रातरुत्थाय गाणपत्यं लभेन्नरः ।
रात्रौ कान्तासमायोगे कौलिकः कुलसुन्दरि ॥
तस्यासाध्यानि कर्म्माणि शान्त्यादीनि कुलेश्वरि ।
नास्ति नास्ति पुनर्नास्ति नास्त्येव भुवनत्रये ।
पूजाकाले पठेद् यस्तु कोटिपूजाफलं लभेत् ।
स्तवेनानेन संस्तुत्य साधकः किं न साधयेत् ।
सालङ्कृतां स्वकान्ताञ्च नानाभरणभूषिताम् ।
पट्टवस्त्रपरीधानां कृत्वा सम्पूज्य साधकः ।
भोजयित्वा ततो देवि स्वयं भुञ्जीत तत्परम् ।
तत्त्वेन तोषयित्वा च क्रोडे कृत्वा स्वयोषिताम् ।
रात्रौ यदि पठेत् स्तोत्रं सा दुर्गा स सदाशिवः ।
भवत्येव न सन्देहो मम वक्त्राद् विनिर्गतः ।
येन दत्तं महास्तोत्रं स एव सद्गुरुः स्मृतः ।
तस्यैव यदि भक्तिः स्यात् सतके (?) जगदीश्वरः ।
नमस्ते स्तवराजोयं नमस्ते स्वप्रकाशिने ।
यत्रास्ते स्तवराजोयं तत्रास्ते श्रीसदाशिवः ॥ * ॥

इति योनिस्तोत्रं समाप्तम् ॥ * ॥

पुष्पिका च—

इति कुलार्णवे कुलाचाररहस्ये द्वादशः पटलः ॥ * ॥

श्रीशिवचरणे मम भक्तिरस्तु ॥

श्रीहरिः शरणं ॥ ० ॥

श्रीदुर्गा शरणं ॥ ० ॥

श्रीदुर्गा दुर्गा दुर्गा दुर्गा दुर्गा दुर्गा दुर्गा ॥ ० ॥

विशेषदिवसार्चनमिति विषयनामसाम्येप्येतत्कुलार्णवग्रन्थदशमपटलेन प्रचरत्कुलार्णवदशमोल्लासस्य संवादो विशेषेण नास्त्येव, आदिमेषु कतिपयश्लोकेष्वेव सादृश्योपलम्भात्। नात्र च नामसदृशविषयस्यालोचनं प्रवृत्तमुपलक्ष्यते। तथा चात्र मद्यादिपञ्चद्रव्याणि, स्वयम्भुकुसुमम्, [भगलिङ्गामृतञ्चेति सप्ततत्त्वान्युल्लिख्य सुरोत्पत्तिवर्णनमूलाख्यायिका विनिबद्धा। तथाहि—समुद्रमन्थनवेलायां रूपवत्कन्यकावेशधारिणी सञ्जाता सुरादेवी विष्णुप्रभृतिभिरत्यर्थं काम्यमाना द्रवरूपत्वं प्राप्ता ब्रह्मादिदेवगणैः स्वस्वभाण्डेषु परिगृहीतेति। कीर्त्तितं चात्र सुरामाहात्म्यम्—

मादकं वस्तु सकलं योगमार्गप्रकाशकम्।

गुप्तभावे स्थितं ब्रह्म मादके परमेश्वरि॥

काष्ठमध्ये यथा वह्निः पयोमध्ये घृतं यथा।

तद्वेव परमेशानि मादके ब्रह्म निश्चितम्॥ इत्यादिना।

एतद्ग्रन्थवचनान्यन्तरान्तरा ग्रन्थान्तरेष्वप्युपलभ्यन्ते। तथाच—

नग्नां परलतां पश्यन्नयुतं यस्तु मानवः।

प्रजपेत् स भवेत् सद्यो विद्यायाः वल्लभः स्वयम्॥ (३८क)

महाचीनद्रुमलतावेष्टनेन च यत् फलम्।

तस्यापि षोडशांशेन कलां नार्हन्ति ते शवाः।

शवासनाधिकफलं लतागेहप्रवेशनम्॥ (४०क)

इति नवमपटलीयवचनद्वितयं परिषत्प्रचारितकालीतन्त्रचतुर्थ-

पटले पञ्चमषष्ठश्लोकरूपेण तथाष्टादशोनविंशश्लोकरूपेण चोपलभ्यते। एवं च—

पर्वते हस्तमारोप्य स्थिरधीर्यतमानसः।
अभीष्टसिद्धिमाप्नोति सत्यमेव न संशयः॥ (३८ख)

कुलार्णवयोत्वेन कौलावलीनिर्णयनवमोल्लासोद्धृतानामेकत्रिंशादि-संख्यकानां श्लोकानां कुलार्णवपुस्तकेष्वनुपलब्धत्वेऽपि कौलावल्यां नवमोल्लासे एवोद्धृतसप्तत्रिंशदधिकशततमश्लोकः—

उत्तमा तत्त्वचिन्ता च पूजाजपादि मध्यमा।
शास्त्रचिन्ताधमा ज्ञेया लोकचिन्ताधमाधमा॥

इति कुलार्णवस्य परिषत्पुस्तके द्विचत्वारिंशत्तमपत्रपूर्वार्द्धे समुपलभ्यते।

कृष्णानन्दकृततन्त्रसारे कुलार्णवीयत्वेनोद्धृतानि पुरश्चरणवर्ज्य-वस्तुनिरूपण-जपफलनिर्देशविषयकवचनद्वितयम्—

यस्यान्नपानपुष्टाङ्गः कुरुते धर्म्मसञ्चयम्।
अन्नदातुः फलं चार्द्धं कर्त्तुश्चार्द्धं न संशयः॥
तस्मात् सर्वप्रयत्नेन परान्नं वर्जयेत् सुधीः॥ इति।
मनोऽन्यत्र शिवोऽन्यत्र शक्तिरन्यत्र मारुतः।
न सिध्यति वरारोहे कल्पकोटिशतैरपि॥

इति च एभेलनप्रचारितकुलार्णवग्रन्थे पञ्चदशोल्लासे पञ्चसप्ततितम-श्लोकरूपेण एकाधिकशततमश्लोकरूपेण च उपलभ्यते।

परं तत्रैव दीक्षापक्षनिर्णय-दीक्षाहीननिन्दादिविषयकाणि कुलार्णवीयत्वेन निर्दिष्टानि वचनानि तु नोपलभ्यन्ते कस्मिन्नपि प्रचारित-कुलार्णवग्रन्थे परिषत्पुस्तके च। न ज्ञायते किमेतानि सम्प्रदायान्तराद् गृहीतानि न वेति। तानि च वचनानि—

सप्तमी रविवारे च सोमे दर्शस्तथैव च।
चतुर्थी कुजवारे च अष्टमी च बृहस्पतौ॥

देवपर्वसमा ज्ञेया तासु दीक्षां समाचरेत् ॥ इति ।
दीक्षाहीनान् पशून् यस्तु भोजयेद् वा स्वमन्दिरे ।
स याति परमेशानि नरकानेकविंशतिम् ॥ इति च ।

परिषत्पुस्तके च एकादशोल्लासे सुरादीनां निर्वचनप्रकारप्रदर्शनावसरेऽभिहितम्—

सुरत्वं भोगमात्रेण तेन सुरा सुरेश्वरि ।
धर्मार्थकाममोक्षाणां विषयाणाञ्च पार्वति ।
सर्वेषां कारणं यस्मात् तस्मात् कारणमुच्यते ॥ इति (४५कपत्रे)

अत्र च रहस्यपूजादिकमधिकृत्य यादृशानामनुष्ठानानामुपदेशः कृतस्तेनायं सम्प्रदायस्तरुणाः प्रत्यक्षयोनिपूजननिरतोत्तरकौलिकानां लक्ष्मीधरादिनिर्दिष्टानामिति प्रतीयते। एभिलनादिप्रचारितग्रन्थस्तु पञ्चमोल्लासे (१०७-११२ तमे श्लोके) पञ्चमकाराणां रहस्यार्थमनुसन्दधत् पूर्वकौलानां सम्प्रदायान्तराणां वा ग्रन्थो भवेदिति प्रतिभाति नः। अत्र च विशेषज्ञानां सम्मतिमपेक्षमाणा वर्त्तामहे इति शम्।

---

## संस्कृतसाहित्यपरिषदः पञ्चदशवर्षीयमधिवेशनम्

परिनिष्ठितं परिषदः पञ्चदशवर्षीयमधिवेशनमतीते सौराश्विनस्य द्वादशदिवसे। अत्र च भगवदनुकम्पाया अनुपदं तेषामेव परिषत्-संदस्यानां महानुत्साहो हेतुतामध्यास्ते येऽविगणय्य कायक्लेशम् अप्रमाणीकृत्य समयातिक्रममनवधार्य चाशङ्कनीयामवधीरणामनारतमुपस्थाय समनुशीलितैरभिनयैरनुष्ठितैः कर्मभिश्चाधिवेशनमिदं सुसम्पादमुपपादयन्। अतस्तेभ्यः समं भवद्भिर्यथाकालमिहागत्य महोत्सवं साङ्गं विदधानैर्धन्यवादमादौ वितरामः।

प्रारिप्सिते सभाकर्म्मणि प्रथमतस्तावद् यथापूर्व्वं परिषदं प्रति दयमानेन स्निह्यता भक्तिप्रह्वेण वा श्रीमता विष्णुपददत्तमहोदयेन यथारीत्युद्बोधनसङ्गीतमुपगायावर्जितेषु सभ्यमानसेषु कविराजशिरोमणेः श्रीमतः श्यामादासवाचस्पतिमहोदयस्य प्रस्तावेन म. म. श्रीयुक्तदुर्गाचरणसाङ्ख्यवेदान्ततीर्थमहोदयस्य म.म. श्रीयुक्तशितिकण्ठ-वाचस्पतिमहोदयस्य चानुमोदनेन सर्व्वसदस्यसम्मत्या च—जन्मान्तरमिव शिरोमणेरुदन्वान् इव विद्वत्ताया यशोभारभरितभारतभूस्तत्र-भवान् महामहोपाध्यायपदलाञ्छनः कामाख्यानाथतर्कवागीशमहोदयः सदयं सभापतिपदमलमकार्षीत्। पाण्डित्यानुरूपां विनयङ्गिमुपदर्शयता तेनादौ तथाविधायां विद्वद्वरिष्ठायां सभायामात्मनः साभापत्येन जिह्मियतेव स्वल्पेन वचसा स्वाहङ्कारः पर्य्यहारि।

ततश्चैकतरेण सम्पादकेन श्रीमतामरेश्वरठाकुरवेदान्तशास्त्रिमहोदयेन परिषदो विगतवर्षीयकार्य्यविवरणं संस्कृतभाषामयं वाचितमभूत्। तदेतद्दिदृक्षुभिरेतत्पत्रिकायाः प्रथमांशे द्रष्टव्यम्। समनन्तरञ्चान्यतरेण सम्पादकेन श्रीमता सत्येन्द्रनाथवसुजमहोदयेन साधारणगोचरीकरणार्थं [सहकारिसम्पादकान्यतमेन श्रीमता दीनबन्धुसाहित्यशास्त्रिमहोदयेन सङ्कलितं वङ्गभाषामयं विवरणमादर्शीकृत्य] काचन वाग्मिता वङ्गभाषामयी प्राकाशि, यथा संस्कृतानभिज्ञा अपि समवेताः सदस्याः परिषदः कृत्यजातानामान्तरज्ञा भवेयुः।

अनेन च परिषदः पञ्चदशवर्षीयाधिवेशनेन समम् अस्या एव परिषदश्छात्रसमितेस्तृतीयवर्षीयमधिवेशनं तत्प्रयुक्तयान्तर्भुक्तिमन्वभवत्। तस्याश्छात्रसमितेर्द्वितीयवर्षीयकार्य्यविवरणं परिषच्छात्रेण निरामयचिरायुष्मता श्रीमता रोहिणीकुमारचतुर्धुरीणेनोच्चैर्भङ्गीविशेषेण च तथा स्पष्टं वाचितं यथा महतोऽपि तस्यास्थानमण्डपस्या-प्रान्तादा पार्श्वत आचोर्द्ध्वतः कुतोऽपि श्रावकाणां श्रुतिसौकर्य्यं न व्याहन्यत। तदिदं कार्य्यविवरणं पृथङ्मुद्रितस्य परिषदः पञ्चदश-

वर्षीयकार्य्यविवरणस्यान्ततो वङ्गभाषया मुद्रितं जिज्ञासुभिरवलोकनीयम् ।

अस्ति चायं चिरागतः समुदाचारविशेषः परिषदः—यदत्र वार्षिकाधिवेशनदिवसे कस्यचन विश्रुतयशसः परासोस्तैलचित्रमाहृत्य-पाकरणेन सर्व्वार्घ्यर्च्चं करणीयमिति। तन्नियमानुगत्या चेतःपूर्व्वं परिषदा स्थिरीकृतं यदचिरं शिवभूयमुपेतस्य महामहोपाध्याय-पदलाञ्छनस्य तत्रभवतो वामाचरणन्यायाचार्य्यमहोदयस्य तैलचित्रं निर्म्माय निरावरणं कर्त्तव्यम्। [ इतः पूर्व्वं परिषदानुष्ठितायां तत्रभवतः शोकसभायां कविराजशिरोमणेः श्रीमतः श्यामादास-वाचस्पतिमहोदयस्य योग्यतमेन तनयेन श्रीमता विमलाचरणतर्कतीर्थ-महोदयेन तत्रभवतस्तैलचित्रं स्वव्ययेनाङ्कयित्वा परिषदे प्रतिश्रुतम्। परं केनचिद्वैगुण्यविशेषेण तदिदं तैलचित्रं पयश्चित्रात्मना परिणत-मिति नाप्रत्यक्षमासीत्तत्सभासदाम्।]

ततश्च प्राप्ते चित्रावरणोन्मोचनावसरे महामहोपाध्यायेन श्रीमता-शितिकण्ठवाचस्पतिमहोदयेन सदस्यानां सुश्रेयया वङ्गभाषया तत्र-भवतो न्यायाचार्य्य-महोदयस्यानितरसाधारणान् गुणानुल्लिख्य महती वाग्मिता प्रकाशिता। समनन्तरं वर्णाश्रमस्वराज्यसङ्घाभिधसदसः सम्पादकेन तत्रभवतो न्यायाचार्य्यमहोदयस्य शिष्यचरेण देवनायका-चार्य्यमहोदयेन हिन्दीभाषया स्वहृदयं तथा प्राकाश्यं नीतं यथा सर्व्व एव समेताः सभासदः परेण प्रशंसावादेन तत्रभवन्तं समयोजयन्। ततश्च महामहोपाध्यायेन अनन्तकृष्णशास्त्रिमहोदयेन कविराज-शिरोमणिना श्यामादासवाचस्पतिमहोदयेन च तस्यैव परासोः प्रशस्तिवादाः समुदघुष्यन्त। एवञ्च तैस्तैर्वाग्मिभिर्गुणानामुद्-घाटनेनौत्सुक्यमापादितानि सभ्यमनांसि तत्रभवान् सभापति-स्तत्तद्गुणाधारभूतस्य भूतपतिभूयमनुभवतस्तत्रभवतश्चित्रावरण-मुन्मोच्यारञ्जयदितीदमादिपर्व्व व्याख्यातम्।

सभापतेरभिभाषणमात्रमस्माभिर्मध्यपर्व्वत्वेनाध्यवसातुमिष्यते। नवतिपरस्यापि नवीनप्रायस्य शरीरसंस्थानविशेषेणानभिव्यक्तजरालक्षणस्य विदुषोऽपि बालकस्येवागम्भीरप्रकृतेस्तत्रभवतः सभापतेः स्वल्पकायमभिभाषणं श्रवणाञ्जलिपुटेन पेपीयमानाः सभासदश्चित्रार्पिता इवावतस्थिरे। यद्यपि वयोबाहुल्येन क्षीणप्रायस्तत्रभवतः कण्ठः सर्व्वेषां सभासदां कर्णकुहरं नैवापूरयत्तथाप्यादरबहुमानाभ्यां स्तब्धीभूताः सभ्यव्राताः श्वासप्रश्वासावप्यवरुध्य ध्याननिश्चला इवासन् इत्यहो महानुभावता तत्रभवतामित्यास्तां मध्यमं पर्व्व।

चरमं परमञ्चाभिनयपर्व्व। यत्र सभासदः क्षणं बाष्पान्वितचक्षुषः क्षणं शौर्य्यस्फीतवक्षसः, क्षणं विषयप्रत्याहृतचेतस्तया शून्यघटितदृशः क्षणं विषयसन्निधानेनोद्भूतभोगतृषः क्षणञ्च हास्योद्रेकविद्रुततयासनसन्निहितभूमिस्पृशश्च तेषु तेषु रसेषु समजायन्त।

परिषत्सदस्यानां छात्रसमितिसदस्यसहायानामत्राभिनये नाभिनवं किमपि वक्तव्यमस्त्यस्माकम्। निपुणाः परिषत्सदस्या नाट्यकलायां, सामाजिकाः संस्कृतभाषाभिज्ञा महामहोपाध्यायप्रचुराः, अभिनेयञ्च भगवद्गुणानुवादमधुरं 'बालचरित'नामकं नाटकमित्यहो श्रीहर्षस्येव हर्षकारणं परिषद्भाग्योपचयात् समुदितमिति परं प्रमोदस्थानमस्माकम्।

कश्चन दर्शकः।

---

## संस्कृतसाहित्यपरिषद: १३३८ब-ङ्गाब्दीय-कार्य्यपरिचालका:

सभापति:

महामहोपाध्याय-श्रीयुक्त-दुर्गाचरण-सांख्य-वेदान्ततीर्थ:

सहकारिसभापतय:

१। महामहोपाध्याय-श्रीयुक्त-भागवतकुमार-गोस्वामी शास्त्री एम. ए., पि-एइच. डि.

२। महामहोपाध्याय-श्रीयुक्त-अनन्तकृष्णशास्त्री

३। महामहोपाध्यायश्रीयुक्तशितिकण्ठवाचस्पति:

४। पण्डित: श्रीयुक्तद्वारिकानाथन्यायशास्त्री

५। कविराज-शिरोमणि: श्रीयुक्तश्यामादासवाचस्पतिश्च

सम्पादकौ

१। श्रीयुक्त अमरेश्वर ठाकुर, वेदान्तशास्त्री, एम.ए.,पि-एइच. डि

२। श्रीयुक्त सत्येन्द्रनाथवसु: एम. ए., वि. एल.

सहकारि-सम्पादका:

१। पण्डित श्रीयुक्त दीनबन्धुसाहित्यशास्त्री

२। " " वामाचरणकाव्यतीर्थ:

३। " " चिन्ताहरणचक्रवर्त्ती काव्यतीर्थ: एम. ए.

४। " " रामकृष्णचक्रवर्त्ती, एम. ए.

५। " " अशोकनाथभट्टाचार्य्यवेदान्ततीर्थ: एम. ए.

कार्य्यनिर्व्वाहक समितेरपरे सदस्याः

१। पण्डितश्रीयुक्तजगदीशचन्द्रवेदव्यासः
२। „ जगन्मोहनज्योतिर्व्विनोदः
३। „ वामापदविद्यारत्नः
४। „ दक्षिणाचरणभट्टाचार्य्यः एम. ए
५। „ कुञ्जविहारी तर्कतीर्थः
६। „ जानकीनाथसाहित्यशास्त्री
७। „ नगेन्द्रनाथठाकुरसिद्धान्तरत्नः
८। „ कालीपदतर्काचार्य्यः
९। „ योगेन्द्रमोहनविद्यारत्नः
१०। „ श्रीधरव्याकरणतीर्थः
११। „ सीतानाथसिद्धान्तवागीशः
१२। „ दक्षिणाचरणभट्टाचार्य्यः
१३। कविराजः श्रीयुक्तवसन्तकुमाररायविद्यारत्नः
१४। पण्डितः श्रीयुक्तकृष्णचन्द्रस्मृतितीर्थः
१५। „ „ राधारमणविद्याभूषणः
१६। „ „ भुवनमोहनसांख्यतीर्थः
१७। „ „ प्रभातचन्द्रकाव्यतीर्थः एम.ए., पि-एइच्,डि
१८। „ „ दक्षिणारञ्जनशास्त्री, एम. ए.
१९। श्रीयुक्तयतीन्द्रनाथवसुः एम. ए., एम. एल. सि.
२०। डाक्तार श्रीयुक्तकृष्णगोपालभट्टाचार्य्यः एम. वि.
२१। श्रीयुक्तराजेन्द्रनारायणवन्द्योपाध्यायः वि. एल.
२२। पण्डितश्रीयुक्तदुर्गामोहनकाव्य-सांख्य-पुराणतीर्थः एम. ए.
२३। „ कालीपदव्याकरणतीर्थः
२४। „ क्षितीशचन्द्रचट्टोपाध्यायः एम. ए.
२५। „ सुनीतिकुमारचट्टोपाध्यायः एम. ए., डि. लिट्

२६। श्रीयुक्तभूपतिरायचतुर्धुरीण-काव्यतीर्थः
२७। पण्डितश्रीयुक्त चिन्तामणिकाव्यतीर्थः
२८। श्रीयुक्तहेमेन्द्रलालचतुर्धुरीणः
२९। पण्डितश्रीयुक्तवनमाली वेदान्ततीर्थः एम. ए.
३०। श्रीयुक्तक्षितीशचन्द्र चक्रवर्त्ती, एम. ए., बि. एल.
३१। पण्डितश्रीयुक्तरसमयचट्टोपाध्यायः एम. ए.
३२। ,, ,, उपेन्द्रमोहनसांख्यतीर्थः

---

## पत्रिका-सम्पादकः

पण्डितश्रीयुक्तक्षितीशचन्द्रचट्टोपाध्यायः एम. ए.

पत्रिका-सहकारि-सम्पादकः

पण्डितश्रीयुक्तउपेन्द्रमोहनसांख्यतीर्थः

ग्रन्थाध्यक्षाः

पण्डित श्रीयुक्तजानकीनाथसाहित्यशास्त्री
,, ,, वामाचरणकाव्यतीर्थः
,, ,, चिन्ताहरणकाव्यतीर्थः एम. ए.
,, ,, अशोकनाथवेदान्ततीर्थः एम. ए.

आचार्य्यौ

पण्डितश्रीयुक्तसीतानाथसिद्धान्तवागीशः
,, ,, उपेन्द्रमोहनसांख्यतीर्थश्च

नाट्य-सम्पादकौ

पण्डितश्रीयुक्तजगन्मोहनज्योतिर्विनोदः
,, ,, वामापदविद्यारत्नश्च

सङ्गीताचार्य्यः

श्रीयुक्तसतीशचन्द्रदत्तः

आय-व्यय-लिपिरक्षकः

पण्डितश्रीयुक्तरामकृष्णचक्रवर्त्ती, एम. ए.

आय-व्यय-लिपि-रक्षकः

श्रीयुक्तमलयकुमारदेवः बि. एस-सि., जि. डि. ए.

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रविः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| December, 1931. | १८५३ शकीये मार्गशीर्षे १४श-वर्षस्य ८म-संख्या | Vol. XIV. No. 8. |
|---|---|---|


## मतिमञ्जरी

"नियतिर्विधाय पुंसां प्रथमं सुखमुपरि दारुणं दुःखम् ।
कृत्वालोकं तरला तडिदिव वज्रं निपातयति ॥"

अहो गरीयस्त्वं कालस्य, अहो विषमतमत्वं दुर्दैवविलसितस्य तपस्विन्या गैर्वाण्या वाण्याः, अहो दुर्भाग्यं भारतवर्षीयाणाम्, अहो विपद्व्रातपरम्परापात आर्य्यधर्मस्य यद् येषां तृणीकृतस्वार्थानां स्वधर्म्मपरिपालनव्रतदीक्षितानां पाण्डित्यप्रकर्षविमोहितजगत्त्रयाणां महापुरुषाणां प्रादुर्भावेण घोरतमेऽपि कलौ समुत्पन्ना कृतयुगभ्रान्तिर्भारतीयानां तेऽपि प्रतिदिनमेवाहमहमिकया परित्यज्येमं प्रक्षीणसदाचारं विध्वस्तधर्मानुष्ठानमार्यदेशं पुरन्दरपुरं प्रतिष्ठन्ते । सनातनभारतधर्म्मस्तम्भभूतानां विमलवैदुष्यप्रोद्भासितदिग्भागानां तृणावज्ञायमवजानानां सर्वपार्थिवसम्पदं कीटदष्टं पश्यतां च प्रतिद्वन्द्विभ्रूभङ्गं वामाचरणन्यायार्य्यमहोदयानां लक्ष्मणशास्त्रिद्राविडमहाभागानां च महेश्वरसालोक्यापादनप्रवृत्तिर्निवेदितपूर्व्वैवास्माभिः । तत ऊर्द्ध्वं विविधसम्बकर्णधाराणां परःशतप्रबन्धप्रणेतॄणां वार्धके जनसंसदि सम्मा-

तारतीनां समालम्बितप्रायवानप्रस्थानां नित्यानन्दपर्वतीयानामपि मानुष्यकपरित्यागपुरःसरं शिवभावप्राप्त्या संस्कृतसाहित्यस्यार्थ्यधर्मस्य च या हानिः संवृत्ता सानुभववेद्यैव सहृदयानाम्। एतावतापि नैवोदपद्यत तृप्तिः कालहतकस्य। इदानीं पुनरेतेन वङ्गीयविद्वत्प्रवराः श्रीमन्तो हरप्रसादशास्त्रिणः सबलं समाकृष्य साहित्यसाम्राज्याद् विनिक्षिप्ताः स्वीये विकराले वदनकुहरे इति निवेदयन्तो विषीदामस्तमाम्। कस्य भारतीयस्य वा वैदेशिकस्य वाविदितो हरप्रसादशास्त्रिमहाभागः। एतस्य किल महाभागस्य न केवलं संस्कृतभाषायां वङ्गभाषायाञ्चानितरसाधारणं प्रावीण्यमुल्लासापि तु भारतवर्षस्य विशेषतश्च वङ्गदेशस्य प्राचीनेतिहासविषये सर्वथा प्रतिद्वन्द्विशून्य एवायमासीदित्यपि वचनं न लेशतोऽप्यतिशयोक्तिपदवीमवगाहेत। सुधीप्रवरोऽयं सुचिरं राजकीये विद्यालयेऽध्यापकपदमधिष्ठायान्ते च राजकीयसंस्कृतविद्यामन्दिरस्याध्यक्षपदं समधिगम्य पश्चिमे वयसि राजकार्य्याद् गृहीतावसरो विद्याचर्च्चयैव कालं नयन्नासीत्। संस्कृतपरिषदोऽकृत्रिमबान्धवस्यास्य जीवनवृत्तादिकं परिषत्पत्रिकाया "हरप्रसाद"संख्यायां प्रकाशयिष्यत इति शिवम्।

---

## उपनिषत्कथा

[ निबन्धकः—म० म० श्रीदुर्गाचरणसांख्यवेदान्ततीर्थः ]

( छान्दोग्ये पञ्चमावृत्तिः )

पूर्व्वप्रक्रान्तं तमेव सत्यकामं जाबालमधिकृत्य प्रवृत्तोऽयं कथाप्रसङ्गः। कार्य्याकार्य्यविवेकधुरीण आचार्य्यस्तु स्वेच्छयोपनतं प्रश्रयावनतं सत्यसन्धं सत्यकामं "न सत्यादगाः" इत्यभिनन्द्य यथाशास्त्रमुप-

नीतवान्। उपनीय च तस्य गुरौ श्रद्धां कर्त्तव्यनिष्ठां भक्तिप्रकर्षञ्च परीक्षितुकाम आचार्य्यः कृशानामबलानां गवां चतुःशतीं मुक्तबन्धनं कृत्वा जितकामं सत्यकाममभाष्य सादरमिदम्—"उवाच—इमाः सोम्यानुव्रजेति"। आर्जवावर्जितमानसो मानसोपरहितो हितोपदेशमिव गुरोरादेशं सादरमनुपालयन् सत्यकामोऽपि विनैव प्रतिवचनं "तथास्तु" इत्यब्रवीत्। दुष्करमपि गुरुवचनमन्यथाकर्त्तुमनुचितमिति मनसि समाकलयन् गुरोरादेशं शिरसि निधाय स यावत् ता गाः प्रस्थापयितुं प्रववृते, तावदेव तमनुभाष्य गुरुरुवाच—"नासहस्रेणावर्त्तयेति"। यावदासां प्रस्थाप्यमानानां गवां सन्ततिक्रमेण सहस्रसंख्या-प्रपूरणं न भवेत्, तावदिमा नावर्त्तनीयास्त्वयेति कृत्यगुरुर्गुरुरादिदेश। एवमादिष्टः सत्यकामो गुरुकार्य्यगौरवमनुजानन्नकालक्षेपं ताः सर्व्वा गाः समादाय तदाश्रमपदान्निरगच्छत्। निर्गत्य च समन्तात् परिभ्रमन् क्रमेण सरसशष्पशबलां गवामनुकूलां प्रच्छायशीतलां काननभूमिमाविवेश। गावश्च तत्र तत्र दूर्वादलबहलं शाद्वलकवलमाकलय्य परां प्रीतिकाष्ठामापुः। क्रमेण चैवं ताः सर्व्वाः स्वच्छन्दमटवीतोऽटवीमटाय्यमाना नानारसं घासं सुखं स्वादं स्वादं स्वल्पेनैव कालेन हृष्टाः पुष्टा बलिष्ठाश्च समभवन्।

जिताशेषकामः सत्यकामश्च गुरुकार्य्यगौरवमन्वहं बहुमन्यमानश्छायेव तासामनुचरो बभूव। एवमायासबहुले सुदुष्करे वर्त्मनि वर्त्तमानस्यापि सत्यकामस्य मनसि मनागपि विषादो वपुषि स्वल्पोऽप्यवसादः कातर्य्यं वा नालक्ष्यत। परमनुदिनमुपचीयमानेन बलवत्तरगुरुभक्तिसम्भुक्षितेन नवनवेनोत्साहनेन प्रणोदितस्य तस्य भूयानपि कालः क्षणार्द्धमिवायासीत्। एवमखिन्नमानसो गा अनुचरन् "स ह वर्षगणं प्रोवास—यदा सहस्रं सम्पेदुः।

अथैवं गोचारणव्याजेन तीव्रं तपः श्रद्धया समाचरतस्तस्य सत्यकामस्य मानसं मेघमुक्तमाकाशमिव नितरां प्रससाद, तत्त्वग्रहण-

योग्यताञ्चाससाद, गवाञ्च सहस्रं समपद्यत। एवं तपोरतस्य शुद्धसत्त्वस्य गुरुभक्तिमतः सत्यकामस्य मनसि सहसा ब्रह्म-जिज्ञासा समजायत। जिज्ञासुमप्यलब्धोपायतयाऽन्तःसन्तप्यमानं तं करुणाकरो जगद्गुरुरन्वग्रहीत्। तदनुग्रहगृहीतानेकभूमयस्तद्वि-भूतय एव यथाक्रमम् ऋषभाग्निहंसमद्गुशरीरैः क्रमेण तदभिलषितं ब्रह्मतत्त्वमुपदेष्टुमुपचक्रमिरे।

तत्र प्रथमं वायुदेवता ऋषभवपुरुपादाय सत्यकाममुच्चैराभाष्याह —"प्राप्ताः सोम्य, सहस्रं स्मः, प्रापय न आचार्यकुलं, ब्रह्मणश्च ते पादं ब्रवाणीति।"

सत्यकामश्चानाशंसितपूर्वं मनोरथसिद्धेर्द्वारमिव तद्वचनमाकर्ण्य पुलकाञ्चिततनुर्विकशन्नयनकमलः सानन्दमनाः सविनयं तमभिवन्द्य प्राह—"ब्रवीतु मे भगवानिति"। एवमभ्यर्थित ऋषभः प्राच्यादि-दिक्षयैश्चतुर्भिरंशैरुपेतं ब्रह्मणः प्रकाशवन्नामकं पादं तद्विज्ञानफलञ्च समुपदिश्य "अग्निस्ते (द्वितीयं) पादं वक्ता" इति चाभिधाय विरराम।

ऋषभादेवमाप्तमनोरथः "स (सत्यकामः) ह श्वोभूते गा अभि-प्रस्थापयाञ्चकार"। आश्रमाभिमुखं प्रचलिता गा अनुसरन् सत्य-कामो मन्दं मन्दं चचाल। एवमनुचलन् यदा भगवान् मरीचिमाली गगनमण्डलादात्मनः करजालं समाहृत्यास्ताचलचूडामवलम्बमान उदग्रारुणरागैः प्रतीच्या दिशो मुखमण्डलमरञ्जयत्, तदा घनतिमिर-निकरैर्धरणीतलं ग्रस्यमानमालक्ष्य क्वचिद्वनैकदेशे "अग्निमुपसमाधाय गा उपरुध्य समिधमादाय पश्चादग्नेः प्राङ्मुख उपोपविवेश।"

इत्थमग्नेः पश्चात् प्राङ्मुखः समासीनः सत्यकामो ह्यस्तनोक्तमृषभ-वचनमेव समाहितमना दध्यौ। अथैनमभिध्यानरतं सत्यकामं "तमग्निरभ्युवाद—सत्यकाम इति। (सः) भगव इति प्रतिशुश्राव।" एवं दत्तावधानं सत्यकाममग्निः पुनराह—"ब्रह्मणः सोम्य ते पादं

ब्रवाणीति"। "ब्रवीतु मे भगवानि"त्यभिहितोऽग्निस्तस्य अनन्तवन्नामकं ब्रह्मणो द्वितीयं पादमुपदिदेश, यस्य खलु पृथिव्यन्तरीक्षद्युसमुद्राभिधानाश्चतस्रः कलाः स्मर्य्यन्ते सूरिभिः। एतद्विज्ञानफलञ्चाभिधाय "हंसस्ते (तृतीयं) पादं वक्ते"ति च संज्ञाप्य सोऽग्निस्तूष्णीम्बभूव। सत्यकामश्च तमेवार्थं मनसि चिन्तयन् निशाशेषमनयत्।

अथ सत्क्रियादीक्षादक्षे जगदेकदीपे कमलिनीनाथे प्राचीदिग्वधूमुखमण्डलान्नैश-तमोऽशुंकमपनयन्, कुङ्कुमारुणरागैः प्राच्या दिशो मुखमण्डलमालिम्पन्, सिन्दूरविन्दुरिव तत्र प्रादुरभूत्। ततः सत्यकामश्च यथापूर्व्वं गाः प्रस्थापयाञ्चकार यावत् सायंसमयो नाविरभूत्।

अथ सत्यकामः सायमायतमवलोक्य सर्व्वा गाः समाहृत्य समिधमाधायाग्निं प्रज्वाल्य पश्चादग्नेः प्राङ्मुखः सन्नुपविवेश हंससमागमनं प्रतीक्षमाणः। एवमेकाग्रमानसे तस्मिन् तमेवार्थमनुचिन्तयत्यकस्मादाकाशात् कश्चिद्धंसस्तत्र समवातरत्। स तत्समीपमुपनिपत्य सत्यकाममभाष्याह—"ब्रह्मणः सोम्य, ते पादं ब्रवाणी"ति। सत्यकामोऽपि "ब्रवीतु मे भगवानि"ति सम्मतिमावेदयामास। अथैवं लब्धानुमतिरग्निरेनमाह—"अग्निः कला, सूर्य्यः कला, चन्द्रः कला, विद्युत् कला एष वै सोम्य, चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान् नाम"—इति। ज्योतिष्मतः पादस्य ज्योतिष्मन्त एव पदार्था अंशा भवितुमर्हन्तीति ज्योतिःप्रधाना एवाग्नि-सूर्य्य-चन्द्र-विद्युतस्तृतीयपादस्य कलाचतुष्टयत्वेन निरदिक्षदग्निः। अनन्तरञ्चैवमुपासितुः क्रमं फलञ्चाभिधाय "मद्गुष्टे पादं वक्ता" इत्यभिदधदेव तिरोऽभूदग्निः।

सत्यकामस्तु तमेवार्थमनुस्मरन् निशां यापयित्वा प्रातरेव पूर्व्ववद् गाः प्रस्थापयामास। पुनश्च सायंसमये यथापूर्व्वं सर्व्वमनुष्ठाय प्राङ्मुख एवाग्नेः पश्चादुपविश्य मद्गुसमागममपेक्षते स्म। एवमनुचिन्तयन्तं "तं मद्गुरुपनिपत्याभ्युवाद—ब्रह्मणः सोम्य, ते पादं ब्रवाणीति।" पूर्व्ववत् "ब्रवीतु भगव" इत्यमनुज्ञातेन तेन मद्गुना तस्मै प्राण-चक्षुः-

श्रोत्र-मनोमयकलाचतुष्टयसम्पन्नो ब्रह्मणा आयतनवान् नाम चतुर्थः पाद उपदिष्टः, तदुपासनफलञ्च यथायथं निरूपितम्। अथ सत्य-कामाय दत्तानुशासनः स मद्गुस्तत्क्षणमेव वियदुत्पपात।

अथैवं तितिक्षाक्षपिताशेषकामः प्रियाभिरामः सत्यकामः सदाचार-मनुचरन् गुरुकृपावशात् अमानुषविग्रहेभ्य ऋषभादिगुरुभ्यो लब्ध-मनोरथः प्रसन्नमनोवदनो गवां सहस्रं समादाय यथाकालमाचार्य्य-कुलमलभत। आचार्य्यस्तु तस्य तथाविधां प्रसादमयीं मूर्त्तिमवलोक्य विदितमपि तदशेषवृत्तं जिज्ञासुरपृच्छत्—"सत्यकाम—ब्रह्मविदिव सोम्य, भासि, को नु त्वानुशशासेति?" सत्यकामोऽपि सत्यमनिह्नुवानः प्राह—"अन्ये मनुष्येभ्यः, * * * भगवांस्त्वेव मे कामे ब्रूयात्।" यदि नाम भगवन्तमाचार्य्यमपहाय अन्यतः कुतश्चिद्विद्यामलप्स्य नूनमपराधमभ्यकरिष्यम्। नाहं तथाकार्य्यं कृतवान्, येन भगवान् मयि कोपकारणमण्वपि समधिगच्छेत्। अतः प्रार्थये मदभिलषितं भवानेवोपदिशतु माम्। यतः "श्रुतं ह्येव मे भगवद्दृशेभ्य आचार्य्या-द्धैव विद्या विदिता साधिष्ठं प्रापतो"ति। एवमभ्यर्थितः शिष्येङ्गितज्ञ आचार्य्यवर्य्यो विनय-नयसुन्दरं सत्यकामं सर्व्वं ब्रह्मतत्त्वं प्रोवाच, "न किञ्चन वीयायेति" न किमपि तत्रानमनुक्तं वा बभूवे। ततश्च सत्यधृतिः सत्यकामः समधिगतब्रह्मविद्यः परां निर्वृतिमुपजगाम।

---

## विद्याप्रस्थानम्

[ निबन्धकः—कालीघट्टवास्तव्य-श्रीगुरुपदहालदारः ]

( पूर्व्वतोऽनुवृत्तम् )

पतञ्जलिप्रोक्ता धारणा व्याख्याता। इदानीं तन्त्रान्तरदृष्ट्या तत्स्वरूपादिकमुच्यते। जान्वग्रभ्रमणेन छोटिकादानकालो मात्रा, ताभिः पञ्चदशमात्राभिरधमः प्राणायामस्त्रिंशता मध्यमः पञ्च-

चत्वारिंशता चोत्तम इत्येवं प्राणायामत्रयात्मिकैका धारणा। सैव द्विविधा—सविषया निर्विषया चेति।

तत्र यदा चित्तं स्वजनादिव्यापारवर्ज्जं पुरःस्थितं स्थूलमूर्त्त्याकारं भगवद्रूपमुपाश्रयति, तदा सा धारणा सविषया भवति। तदुक्तं विष्णुपुराणे—

"प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम्।
वशीकृत्य ततः कुर्य्याच्चित्तस्थानं शुभाश्रये॥
मूर्त्तं भगवतो रूपं सर्व्वोपाश्रयनिस्पृहम्।
एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्य्यते॥
तच्च मूर्त्तं हरे रूपं यादृक् चिन्त्यं नराधिप।
तच्छ्रूयतामनाधारे धारणा नोपपद्यते॥" इति।

यदा तु चित्तं निरवशेषेण देहमपि विस्मृत्य परमपुरुषाभिन्नं प्रत्यक्चैतन्यं स्वरूपत उपाश्रयति, तदैव सा धारणा देशादिराहित्येन निर्व्विषया भवति। स्मृतिरपि तत्र—"तच्च विष्णोः परं रूपमरूपाख्यमनुत्तमम्। विश्वस्वरूपवैरूप्यलक्षणं परमात्मनः॥" इति।

धारणा-सौकर्य्याय तन्त्रेषु खेचरीमुद्रा विहिता। 'भ्रूमध्यदृष्ट्या सैव निष्पाद्यते। तदुक्तं योगीश्वरेण भगवता महादेवेन—भ्रूवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी'ति। अर्द्धनिमीलितनेत्र एकतत्त्वाभ्यासाय नासिकामूलं संप्रेक्ष्य भाव्यविषये चित्तं बध्यादित्याशयः। नेत्रयोरत्यन्तनिमीलने निद्राख्या लयात्मिका वृत्तिः, उन्मीलने च प्रमाणादिविक्षेपात्मिका वृत्तयस्ताः सर्व्वा निरोद्धव्या इत्यर्द्धनिमीलनेन भ्रूमध्ये चक्षुषोर्निधानं विधित्सितम्। सैव मुद्रा खेचरी चित्तस्य वृत्तिबोधमपि निरुणद्धि। उक्तं च—"प्राणैः सह यदा चेतो भ्रुवोरुपरि राजति। स्वहितं विश्वतत्त्वं च तदैव स्फुरति स्वतः॥" इति।

धारणापरिपाकेण तदालम्बनीकृतः समानप्रत्ययप्रवाहो विच्छिद्य विच्छिद्य जायमानो ध्यानं भवति। द्वादशधारणाकालेन ध्यान-

मित्युक्तेः। स्मृतिरपि तत्र—'ध्यानं द्वादशपर्य्यन्तं मनो ब्रह्मणि योजये-दि'ति। अपि चोक्तम्—'निरन्तरश्चित्प्रवाहो ध्येयस्य ध्यानमीरितमि'ति। तदेव ध्यानं तैलधारादिवदविच्छिन्नस्मृतिसन्तानरूपा ध्रुवा स्मृतिः। भगवता वाक्यकारेण च विवेकादिभ्यो ध्रुवानुस्मृतेर्निष्पत्तिरुक्ता—'तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्य' इति। विवेकादीनां च स्वरूपमुक्तम्। विवेकः सत्त्वशुद्धिः। आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिरिति निर्व्वचनात्। विमोकः काम-त्यागः। 'शान्त उपासीतेति' श्रुतेः। अभ्यासः स्थितिनैश्चल्यम्। सदा तद्भावभावित इति स्मृतेः। क्रिया मदनुष्ठानम्। क्रियावानेव ब्रह्मविदां वरिष्ठ इत्यवधारणात्। सत्यार्ज्जवदयादानाहिंसाऽनभिध्याः कल्याणानि। निर्व्वचनं च तत्र—'सत्येन लभ्यस्तेषामेवैष विरजो ब्रह्मलोक' इत्येवमाद्यम्। शोकादिस्मृतेर्दैन्यं मनसोऽवसाद-स्तद्विपर्य्ययोऽनवसादः। श्रुतिश्च—'नायमात्मा बलहीनेन लभ्य' इति। तुष्टिरुद्धर्षस्तद्विपर्य्ययोऽनुद्धर्षः। उद्धर्षः स्मृतिविरोधमाक्षिपतीति तत्त्याग उक्तः।

ध्यानं च सूत्रितं भगवता पतञ्जलिना—'तत्र प्रत्ययैकतानता ध्यानमि'ति। एतदुक्तं भवति—यत्र चित्तं धृतं तत्र प्रत्ययस्य विसदृशपरिणामपरिहारद्वारेण यदेव धारणायामालम्बनीकृतं तदा-लम्बनतया निरन्तरमेकप्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानमिति। तदुक्तम्—'विलाप्य विकृतिं कृत्स्नां सम्भवप्रत्ययक्रमात्। परिशिष्टं च सन्मात्रं चिदानन्दं विचिन्तयेत्॥' इति। 'ध्येये चित्तं यदा लीनं तदा ध्यानमुदाहृतम्। ध्येयः प्रत्यक्षतां याति ध्याता तन्मयतां व्रजेत्॥' इति च। ध्यानोत्कर्षेण ध्यानिनस्तन्मयतामुद्दिश्य विवेकचूडामणौ भगवान् शङ्कराचार्य्य आह—

क्रियान्तरासक्तिमपास्य कीटको
ध्यायन्नलित्वं ह्यलिभावमृच्छति।

तथैव योगी परमात्मतत्त्वं
ध्यात्वा समायाति तदेकनिष्ठया ॥ इति ।

महानिर्व्वाणतन्त्रे ध्यानस्य निरुक्त्यादिकमुक्तं यथा—

ध्यै चिन्तायां स्मृतो धातुश्चिन्ता तत्त्वेन निश्चला ।
एतद् ध्यानमिह प्रोक्तं सगुणं निर्गुणं द्विधा ॥
सगुणं मन्त्रभेदेन निर्गुणं केवलं मतम् ।

अपिच—

ध्यानं तु द्विविधं प्रोक्तं सरूपारूपभेदतः ।
अरूपं तत्र यद् ध्यानमवाङ्मनसगोचरम् ॥
अव्यक्तं सर्व्वतो व्याप्तमिदमित्थविवर्ज्जितम् ।
अगम्यं योगिभिर्गम्यं कृच्छ्रैर्बहुसमाधिभिः ॥
मनसो धारणार्थाय शीघ्रं स्वाभीष्टसिद्धये ।
सूक्ष्मध्यान-प्रबोधाय स्थूलध्यानं वदामि ते ॥
अरूपायाः कालिकायाः कालमातुर्महाद्युतेः ।
गुणक्रियानुसारेण क्रियते रूपकल्पना ॥

सूक्ष्मध्यानं ब्रह्मचिन्तायां यथा—

ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः ।
ध्यानशब्देन विख्याता परमानन्ददायिनी ॥

स्थूलध्यानस्य प्रकारादिकं स्मृतं यथा—

निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तानसंस्पृशन् ।
तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः ॥
संनिरुध्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः ।
द्विगुणं त्रिगुणं वापि प्राणायाममुपक्रमेत् ॥
ततो ध्येयः स्थितो योऽसौ हृदये दीपवत् प्रभुः ।
धारयेत् तत्र चात्मानं धारणां धारयन् बुधः ॥

एषां कठिनांशो व्याख्यायते। निमीलिताक्षः सत्त्वस्थः कामादिरहितो दन्तैर्दन्तानसंस्पृशयन्, तथा तालुनि स्थिता अचला जिह्वा यस्य स तथोक्तः, संवृतास्यः पिहिताननः, सुनिश्चलः सम्यगिन्द्रियसमूहं विषयव्यापारेभ्यः प्रत्याहृत्य नातिनीचासनो नात्युच्छ्रितासनो यथा चित्तचाञ्चल्यं न स्यात् तथोपविष्टः सन् द्विगुणं त्रिगुणं वा प्राणायामं कुर्य्यात्। ततो वशीकृतपवनेन योगिना योऽसौ हृदये दीपशिखावद प्रकम्पः प्रभुः स्थितः स ध्यातव्यस्तत्र च हृद्यात्मानं मनोगोचरतया धारयेत्। तथा धारणां च धारयेत्। धारणा प्राणायामत्रयात्मिकैका प्रागेव दर्शिता। तास्तिस्रो योगशब्दवाच्यास्तास्ताश्च धारयेत्। इति।

आरब्धकार्य्याणां सुखदुःखमोहात्मिका या वृत्तयः सन्ति ताः स्थूला अभिव्यक्तावस्था ध्यानेन प्रतिबद्धा भवन्ति। अनारब्धकार्य्याणां तु याः सूक्ष्मा अनभिव्यक्तावस्थास्ताः समाधिना हातव्या इति समाधेरुपादानम्। ध्यानमेव ध्येयैकगोचरतया यदा सान्निध्ये निर्भासते, यदा च चित्तस्य ध्येयस्वरूपावेशेनाहमिदं चिन्तयामीत्येवंप्रकारवृत्त्यन्तरानुदयात् प्रतत्ययात्मकेन स्वरूपेण शून्यमिव भवति, तदा ध्यानं समाधिरित्युच्यते। योगापरपर्य्यायः समाधिः प्रागेव पर्य्याप्तं वर्णितः, इदानीं ततः प्रत्युदितख्यातेरतिक्रान्तभावनीयस्य प्रज्ञाभूमय उच्यन्ते।

समाधिसञ्जातविवेकान्वितस्य योगिनः सप्त प्रज्ञाभूमयो जिज्ञासाजिहासाप्रेप्साचिकीर्षाशोकभयविकल्पनिवृत्तिफला भवन्ति। तत्र ज्ञातं मया ज्ञेयं न पुनर्ज्ञातव्यं किञ्चिदवशिष्यत इति जिज्ञासानिवृत्तिरेका, क्षीणं मे हातव्यं बन्धजातं नावशिष्टं पुनर्हेयं किञ्चिदिति जिहासानिवृत्तिर्द्वितीया, प्राप्तव्यं निखिलं प्राप्तं नान्यतो मे प्राप्तव्यं किञ्चिदवशिष्टमिति प्रेप्सानिवृत्तिस्तृतीया, कर्त्तव्यं निखिलं कृतं नावशिष्टं किञ्चित् कार्य्यमिति चिकीर्षानिवृत्तिश्चतुर्थी। एषा कृतार्थसमाप्त्यनुभवरूपा चतुष्टयी प्रज्ञा प्रयत्नसाध्यतया पुरुषाणां कार्य्याद् विमुक्तिर्जीवन्मुक्तिरित्युच्यते।

कार्य्यविमुक्तेरनन्तरं परमा मुक्तिः साधननैरपेक्ष्येण भवति। सा च परवैराग्यरूपा त्रिविधा। तत्र कृतभोगापवर्गकार्य्या मे बुद्धिरिति शोकनिवृत्तिरेका, सैव तन्त्रान्तरेषु चित्तज्योतिर्वियोग इत्युच्यते; संस्काररूपा बुद्धिगुणा गिरिशिखरच्युता ग्रावाण इव निरवस्थानाः सह चित्तेन स्वकारणे लीयमाना अतयन्तलयं गच्छन्तः प्रयोजनाभावात् पुनर्न प्ररोहन्तीवेति भयनिवृत्तिर्द्वितीया, सैव तन्त्रान्तरेषु गुणवियोगारम्भ इत्युच्यते। ततः स्वात्मीभूतश्च मे समाधिस्तस्मिन् सति गुणातीतस्वरूपमात्रेणावस्थितश्चिदेकरसोऽहमिव नान्य इति विकल्पनिवृत्तिस्तृतीया, सैव प्रान्तभूमिप्राज्ञायाश्चरमो विषयो यतः कैवल्यं नान्तरीयकं भवति। इमां त्रिविधां भूमिं भाविनीमपि जीवन्मुक्तिदशायां विशुद्धचित्ता योगिनः साक्षात्कुर्वन्ति। विनिष्पन्ने तु कैवल्ये न चापि कश्चित् प्रज्ञाविषय इति तत्त्वम्।

सूत्रं च—"तद्वैराग्यादपि दोषबीजक्षये कैवल्यमि"ति।

महोपनिषदि, वराहोपनिषदि, तथा वाशिष्ठेऽपि योगभूमयस्त्वेवं दर्शिताः—

ज्ञानभूमिः शुभेच्छा स्यात् प्रथमा समुदाहृता।
विचारणा द्वितीया स्यात् तृतीया तनुमानसा॥
सत्त्वापत्तिश्चतुर्थी स्यात् ततोऽसंसक्तिनामिका।
पदार्थाभाविनी षष्ठी सप्तमी तुर्य्यगा स्मृता॥
वैराग्यपूर्व्वमिच्छेति शुभेच्छेत्युच्यते बुधैः॥
शास्त्रसज्जनसम्पर्कवैराग्याभ्यासपूर्व्वकम्।
सद्विचारप्रवृत्तिर्या प्रोच्यते सा विचारणा॥
विचारणाशुभेच्छाभ्यामिन्द्रियार्थेष्वसक्तता।
यत्र सा तनुतामेति प्रोच्यते तनुमानसा॥
भूमिकात्रितयाभ्यासाच्चित्तेऽर्थविरतेर्वशात्।
सत्त्वात्मनि स्थितिः शुद्धे सत्त्वापत्तिरुदाहृता॥

दशाचतुष्टयाभ्यासादसंसर्गफला च या ।
रूढसत्त्वचमत्कारा प्रोक्ताऽसंसक्तिनामिका ॥
भूमिकापञ्चकाभ्यासात् स्वात्मारामतया भृशम् ।
आभ्यन्तराणां बाह्यानां पदार्थानामभासनात् ॥
परप्रयुक्तेन चिरं प्रयत्नेनाववोधनम् ।
पदार्थाभाविनी नाम षष्ठी भवति भूमिका ॥
भूमिषट्कचिराभ्यासाद् भेदस्यानुपलम्भनात् ।
यत् स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्य्यगा गतिः ॥ इति ।

तत्र शुभेच्छाख्या प्रथमा भूमिका नित्यानित्यवस्तुविवेकपुरःसरा साधनचतुष्टयसम्पदिति यावत् । ततः परप्रबोधनदक्षं गुरुमुपसृत्य वेदादिमोक्षशास्त्रस्वरूपग्रहणं द्वितीया भूमिका श्रवणमननसम्पदिति यावत् । ततः श्रवणमननाभ्यां परिनिष्पन्नस्य शास्त्रज्ञानस्य निर्व्विचिकित्सतारूपा तनुमानसा नाम तृतीया भूमिका निदिध्यासनसम्पदिति यावत् । तदेव शुभेच्छादिभूमिकात्रितयं विद्यायाः साधनमेव, न तु तत्कोटावन्तर्भवति, तत्र भेदसत्यत्वबुद्धेर्दुर्व्वारत्वात् । अतो ह्येतज् जागरणमित्युच्यते ।

तदुक्तम्—

"भूमिकात्रितयं त्वेतद्राम जाग्रदिति स्थितम् ।
यथावद् भेदबुद्ध्येदं जगज्जाग्रति दृश्यते ॥" इति ।

तत्र प्रथमद्वितीयतृतीयसाधनभूतभूमिकासु कर्म्मत्यागात् तत्त्वज्ञानाभावाच्च भवति शङ्केति रामेण प्रश्न उक्तः । प्रतिवचनं च तत्र भगवतो वशिष्ठस्य—

"योगभूमिकयोत्क्रान्तजीवितस्य शरीरिणः ।
भूमिकांशानुसारेण क्षीयते पूर्व्वदुष्कृतम् ॥
ततः सुरविमानेषु लोकपालपुरेषु च ।
मेरूपवनकुञ्जेषु रमते रमणीसखः ॥

ततः सुकृतसम्भारे दुष्कृते च पुरा कृते।
भोगक्षयपरिक्षीणे जायन्ते योगिनो भुवि॥
शुचीनां श्रीमतां गेहे गुप्ते गुणवतां सताम्।
जनित्वा योगमेवैते सेवन्ते योगवासिताः॥
अत्र प्राग्भावनाध्यस्तं योगभूमिक्रमं बुधाः।
दृष्ट्वा परिपतन्त्युच्चैरुत्तरं भूमिकाक्रमम्॥" इति।

ततो वेदान्तवाक्यजज्ञानभावनातो निर्विकल्पात्मिका तत्त्व-साक्षात्काररूपा चतुर्थी भूमिका परिणामरूपा सत्त्वापत्तिः। तत्र योगी कृत्स्नजगदुपादानस्य ब्रह्मणः सच्चिदानन्दस्वभावत्वं निश्चित्य तस्मिन्नेव समारोपितयोर्जगच्छब्दाभिधेययोर्नामरूपयोर्मिथ्यात्वमवगच्छति। पूर्व्वोक्तं जागरणमपेक्ष्य योगिन इयं भूमिका स्वप्न इति व्यपदिश्यते। तदुक्तम्—

"अद्वैते स्थैर्य्यमायाते द्वैते प्रशममागते।
पश्यन्ति स्वप्नवल्लोकं चतुर्थीं भूमिकामिताः॥" इति।

ततः पञ्चमादिभूमयो जीवन्मुक्तेरवान्तरभेदाः। ते च निर्व्विकल्प-समाध्यभ्यासकृतेन विश्रान्तितारतम्येन संपद्यन्ते।

तदुक्तम्—
"विच्छिन्नशरदभ्रांश-विलयं प्रविलीयते।
सत्तावशेष एवास्ते पञ्चमीं भूमिकां गतः॥
पञ्चमीं भूमिकामेत्य सुषुप्तिपदनामिकाम्।
शान्ताशेषविशेषांशस्तिष्ठत्यद्वैतमात्रके॥
अन्तर्मुखतया नित्यं बहिर्वृत्तिपरोऽपि सन्।
परिश्रान्ततया नित्यं निद्रालुरिव लक्ष्यते॥
कुर्व्वन्नभ्यासमेतस्यां भूमिकायां विवासनः।
षष्ठीं गाढसुषुप्ताख्यां क्रमात् पतति भूमिकाम्॥

यत्र भासन्न सद्रूपो नाहं नाप्यनहंकृतिः ।
केवलं क्षीणमनन आस्ते द्वैतैक्यवर्ज्जितः ॥ इति ।"

तत्र पञ्चमभूमौ निर्विकल्पत्वाद् योगी स्वयमेव व्युत्तिष्ठते, षष्ठभूमौ तु परेण प्रतिबोधित इति विशेषः। तदेतद् भूमिकाद्वयं सुषुप्ति-र्गाढसुषुप्तिरिति चोच्यते। ततश्चाह—

"अन्तः शून्यो बहिः शून्यः शून्यः कुम्भ इवाम्बरे ।
अन्तः पूर्णो बहिः पूर्णः पूर्णः कुम्भ इवार्णवे ॥" इति ।

षष्ठभूमिकामितस्य संस्कारमात्रशेषस्य चित्तस्य मनोराज्यं कर्त्तुं बाह्यपदार्थान् ग्रहीतुं वा सामर्थ्याभावाद् वियदवस्थितकुम्भवदन्त-र्बहिःशून्यत्वं तथा स्वयंप्रकाश-सच्चिदानन्दाखण्डैकरसे परमात्मनि निमग्नत्वेन सर्व्वत्र ब्रह्मदृष्ट्या समुद्रमध्यस्थापितजलपूर्णकुम्भवदन्त-र्बहिःपूर्णत्वमनेन सूचितम्। एतां तुरीयाख्यां सप्तमभूमिकां प्राप्तस्य योगिनः स्वतः परतो वा व्युत्थानं नास्ति। तादृशीमवस्था-मुद्दिश्य माण्डूक्यकारिकापि प्रवृत्ता—

"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥" इति ।

योगजदर्शनस्य चरमपादे हि ये ये विषयाः प्रतिपादितास्तेभ्यः सर्व्वेभ्यः सारमुद्धृत्य मिश्रपादैरुक्तम्—

"मुक्त्यर्हचित्तं परलोकमेय-
स्वसिद्धये धर्म्मघनः समाधिः ।
द्वयी च मुक्तिः प्रतिपादिताऽस्मिन्
पादे प्रसङ्गादपि चान्यदुक्तम् ॥" इति ।

तत्र षष्ठसूत्रे मुक्त्यर्हचित्तं निर्णीतम्। दशमसूत्रे परलोकसिद्धिः। पञ्चदशसूत्रे मेयसिद्धिर्बाह्यपदार्थसिद्धिरित्यर्थः। ऊनविंशसूत्रे स्वसिद्धिः पुरुषसिद्धिरित्यभिप्रायश्चित्तातिरिक्तत्वात्। अष्टाविंशसूत्रे

धर्म्ममेघसिद्धिः। त्रिंशसूत्रे तथा चतुस्त्रिंशसूत्रे द्वयी मुक्तिः प्रतिपादिता—जीवन्मुक्तिः कैवल्यं चेति।

मुक्त्यर्हचित्तं प्रतिपादयितुं प्रागेव "जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धय" इति सूत्रेण पञ्चप्रकाराः सिद्धय उक्ताः। तत्र जन्मजसिद्धिर्यथा भगवतः कपिलस्य, मदालसापुत्राणां शङ्कराचार्य्यादीनां वा। औषधिसिद्धिर्वैज्ञानिकानां रसायनतत्त्वविदां च। चिकित्सकानां तु सिद्धिस्तत्रैव प्रवेशनीया। मन्त्रसिद्धिर्यथा शुक्राचार्य्यादीनाम्। तपःसिद्धिर्यथा विश्वामित्रप्रभृतीनां महर्षीणाम्, भक्त्यादिजन्यसिद्धीनां च तपःसिद्धावन्तर्भावः। "अयं तु परमो धर्म्मो भक्तिलेशेन जायते" इति स्मृतेः। पञ्चमी समाधिसिद्धिर्यस्य अवान्तरभेदा बहवो भवन्ति।

वितर्कविचारानन्दास्मितानुगतानां हेतवो ये ग्राह्यग्रहणग्रहीतृषु संयमाः सन्ति, तेषां सिद्धयः समाधिजा अधस्तनपादे सूत्रकारेण वर्णिताः। इदानीं ताभ्यः समुद्धृत्य काश्चिदेव संक्षेपत उच्यन्ते। ग्राह्याणि भूतानि कार्य्यकारणभेदेन धर्मधर्म्यभेदेन च पञ्चरूपाणि भवन्ति। तेषु संयमात् तद्रूपैर्भूतानां स्वेच्छानुविधायित्वं भवति। सूत्रं च—"स्थूल-स्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजय" इति। तत एव योगिनः पर्व्वतमपि भित्त्वा गच्छन्ति, जलं वा यथेच्छमनुप्रविश्य तिष्ठन्ति। शिला हि काठिन्येन तेषां गतिविधिं न प्रतिबध्नाति, न चाप्यापस्तेषां शरीरक्रियां क्लेशयन्ति। एवं भूतजयादणिमाद्याः सिद्धयः प्रादुर्भवन्ति। सूत्रं च—"ततोऽणिमादिप्रादुर्भावः कायसम्पत् तद्धर्म्मानभिघातश्चे"ति। स्मृतिष्वपि ताः सर्व्वा अष्टौ परिगणिताः—

"अणिमा लघिमा व्याप्तिः प्राकाम्यं महिमा तथा।
ईशित्वं च वशित्वं च तथा कामावसायिता॥" इति।

तत्राणोर्भावोऽणिमा यत एव योगिनः शिलामपि प्रविशन्ति। लघिमा लघुभावो यतस्ते लघुतया कुसुमकेशराग्रे तिष्ठन्ति,

स्वेच्छातो वा चन्द्रादिलोकं विचरन्ति। व्याप्तिरभिमतवस्तुषु यत्र तत्रावस्थितेषु स्वेच्छातस्तेषां विहारः। प्राप्नोति पाठे त्वभिमतं वस्तु यत्र तत्रावस्थितं ते प्राप्नुवन्तीति। प्राकाम्यं प्रकामत इच्छानुविधायित्वं यतस्ते जलादिकमनुप्रविश्य सुखेन तिष्ठन्ति। महिमा महतो भावो येन ते महान्त उच्यन्ते। ईशित्वं प्रभुतया भूतभौतिकशक्तीनां स्वेच्छया प्रेरणम्। वशित्वं भूतभौतिकानां प्रतिबन्धसामर्थ्यं स्वस्य च तदवशत्वमपि। कामावसायिता सत्यसङ्कल्पता यतस्तेषां संकल्पितार्थः स्वप्रयोजनाय स्वेच्छानुविहितो भवति। स्वेच्छानुविधाने तु शक्ता अपि योगिनः पदार्थविपर्य्यासं न कुर्व्वन्ति। "धाता यथापूर्व्वमकल्पयदि"ति श्रुतेः। एवं तन्त्रान्तरेषु वर्णिता अणिमादिसिद्धयो व्याख्याताः। ताः सर्व्वाः पुनरात्मजिज्ञासुभिर्हेया बन्धकारणत्वात्। तदुक्तम् –

"अणिमा महिमा चैव लघिमा गरिमा तथा।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं मनसो गुणाः॥
मनो धनुर्मनो मौर्व्वी मन एव धनुर्धरः।
मनो लक्ष्यं मनो वेधो मनो विद्धं विमुक्तये॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः।
इतोऽधिकं तु किं वाच्यमद्वये तु स्थितं न तत्॥" इति।

इतः परं ग्रहणसंयमसाध्या सिद्धय उच्यन्ते। गृह्यन्त एभिरिति ग्रहणानीन्द्रियाणि। तेषां वृत्तयस्त्व ग्रहणमित्युच्यन्ते। तत्संयमादिन्द्रियजयरूपाः सिद्धयः प्रातिभश्रावणवेदनदर्शनरासनादिविषयीभूता आदौ जायन्ते। तत्र विनैव दृष्टकारणं सूक्ष्मव्यवहितविप्रकृष्टादिव्यापारेषु स्फुरणसामर्थ्यं प्रतिभा, तज्जन्यं ज्ञानं प्रातिभं मनसः सिद्धिः। तथा श्रावणं श्रोत्रस्य सिद्धिः; तथा वेदनं त्वगिन्द्रियस्य सिद्धिः; तथा दर्शनं चक्षुषः सिद्धिः। तथा रासनं रसनायाः सिद्धिः। एवं गन्धग्रहणमपि घ्राणस्य सिद्धिः। प्रातिभादिसिद्ध्यनन्तरं योगिनो

मनो-जवित्वं विकरणभावः प्रधानजयित्वं चेति सिद्धित्रयं भवति। तत्र मनोजवित्वं विनापि स्थूलशरीरमनुत्तमगतिलाभो लिङ्गशरीरस्य। विकरणभावः स्थूलशरीरनैरपेक्ष्येण सूक्ष्मव्यवहितविप्रकृष्टादिविषयेषु यथेच्छमिन्द्रियाणां वृत्तिलाभः। प्रधानजयित्वं सर्व्वेषां भूतेन्द्रियप्रकृतीनां सत्त्वादिगुणानां तद्विकाराणां च स्वेच्छानुविधानम्। एतास्तिस्रः सिद्धयो मधुप्रतीकसंज्ञा इन्द्रियजयाच्चाधिगम्यन्ते। सर्व्वास्तु सिद्धयो या उक्तास्ताः पुनरात्मजिज्ञासुभिर्न कामनीयाः, उपस्थिता अपि तैरुपेक्षणीया भवन्ति। तदुक्तं विद्वद्योगिभिः—

"परचित्तस्थितं वस्तु त्वया ज्ञातं ततश्च किम्।
स्वचित्तसंस्थितं वस्तु परं ब्रह्म विलोकय॥
न सिद्धिर्योगसिद्धिर्हि बलवीर्य्यादिसिद्धिकृत्।
अतो हि "योगः प्रत्युक्त" इति वेदान्तभाषितम्॥" इति।

भगवान् पतञ्जलिरप्याह—"स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गादि"ति। इदमत्राकूतम्। स्थानानि येषां सन्ति ते स्थानिनः शक्रादयस्तैः कैवल्यसिद्ध्यर्थी योगी शक्यते प्रार्थयितुं भो योगिन् स्वर्गादिस्थाने रम्यतामिति। एवं प्रार्थने सङ्ग आसक्तिः स्मयः कृतार्थताभिमानश्च न कर्त्तव्यः, किन्तु तत्र दोषं भावयेत्—संसाराङ्गारेषु पापच्यमानोऽहं कथंचित् क्लेशादिध्वान्तध्वंसकं योगप्रदीपमलभे। तस्य चैते तृष्णायोनयो विषयवायवः प्रतिपक्षाः। स खल्वहं प्राप्तालोकः कथमेतैर्विप्रलब्धः पुनः पुनः प्रदीप्तस्य संसारहुतभुजः स्वात्मानमिन्धनीकुर्य्याम्? उक्तं च—"वासनावृद्धितः कार्य्यं कार्य्यवृद्ध्या च वासना। वर्द्धते सर्व्वथा पुंसः संसारो न निवर्त्तते॥" इति। अतः स्वस्ति वः स्वप्नसमेभ्यः कृपणजनप्रार्थनीयेभ्यो विषयेभ्य इति। एवं निश्चितमतिः पुरुषधौरेयः समाधिं भावयेत्। यदि तत्र सङ्गस्मयौ भवेताम्, तदाऽस्य योगभ्रष्टस्य पुनरनिष्टं प्रसज्येत। तस्मात् सङ्गस्मयाकरणं कैवल्यान्तरायनिवारणकारणमिति।

इदानीं गृहीतृसंयमस्य तिस्रः सिद्धयो वक्तव्याः सत्त्वपुरुषान्यताख्यातिविवेकसाक्षात्कारो धर्म्ममेघसमाधिश्चेति। तत्र यद्यपि गृहीतुः कार्य्यकारणविलक्षणत्वान्निर्धर्म्मकत्वाच्च तत्सिद्धेरवान्तरभेदो न युक्तस्तथापि ग्रहितरि सामान्यत उपाधिसत्त्वभेदेन संयमस्य धर्म्ममेघप्राप्तिपर्य्यन्तस्य सत्त्वपुरुषान्यताख्यातिर्विवेकसाक्षात्कारश्चेति सिद्धिद्वयं क्रमानुरोधेन योगिनः स्वभावत आविरस्ति। तत्र सत्त्वपुरुषान्यताख्यातिमात्रस्य द्वयी सिद्धिः सर्व्वभावाधिष्ठातृत्वं सर्व्वज्ञत्वं चेति। यदेतत् सर्व्वभावाधिष्ठातृत्वं क्रियैश्वर्य्यं नाम निखिलकामाधिगमात्, सर्व्वज्ञत्वं तु ज्ञानैश्वर्य्यमेव विवेकप्रदत्वात्। अनयोरैश्वर्य्ययोरपि वैराग्यात् प्रसंख्यानापरपर्य्यायो विवेकसाक्षात्कार उत्पद्यते। विवेकख्यातिदृढत्वे स्वात्मीभूते सति योगिनो धर्म्ममेघसमाधिर्नान्तरीयको भवति। तदुक्तं "प्रसंख्यानेऽप्यकुसीदस्य सर्व्वथा विवेकख्यातेर्धर्म्ममेघसमाधिरि"ति। एष खलु सम्प्रज्ञातस्य काष्ठाप्राप्तिस्ततोऽविद्यादयः क्लेशाः शुभाशुभाश्च कर्म्माशयाः समूलकाषं कषिता भवन्तीति। योगिनश्च तदधिगमेन जीवन्मुक्तिरित्युच्यते।

ननु, क्लेशकर्म्मनिवृत्तेर्ज्जीवतो मुक्तौ सिद्धायां 'न ह वै सशरीरस्य प्रियाप्रिययोरपहति'रित्येवमादिश्रुतयः परमार्थतो व्यर्थाः स्युरिति चेत्? न। वासनारहितस्य जीवतोऽपि संसाराभावात् तस्य गौणमुक्तित्वमित्यवधारणात्। तथाहि भगवान् गौतमाचार्य्यो वासनारहितस्य जीवतः संसारोच्छेदं प्रतिपादयन्नाह—"वीतरागजन्मादर्शनादि"ति। 'तदतिरिक्तो स्वराज्येऽभिषेक्ष्यामो'ति श्रुतेः। इयं च मुक्तिर्ज्जीवतः पञ्चशिखाचार्य्यैर्निर्द्धारिता 'द्वितीया रागक्षयादि'ति।

एवं योगविभूतिभिः सह जीवन्मुक्तिनाम्नी गौणमुक्तिः प्रतिपादिता। अधुना कैवल्यनाम्नी मुख्यमुक्तिः प्रतिपाद्यते। अत्र भगवता पतञ्जलिना कैवल्यस्वरूपमधस्तनपादे सामान्यतो निर्द्धारितं "सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमि"ति। चतुर्थपादे तु तत्स्वरूपं प्राधान्येन

निर्द्धारयितुमाह—"पुरुषार्थशून्यानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा चितिशक्तिर्व्वे"ति। तत्र पुरुषं प्रति दृश्यत्वेन चरिताधिकाराणां गुणानामनुपस्थापनं कैवल्यमेकाकिता। स्वरूपप्रतिष्ठा सर्वत उपाधि-वियोगेन ब्रह्मणि प्रतिष्ठितत्वम्। चितिशक्तिः पूर्णबोधः। अतएव सूत्रेणानेन तात्पर्य्येत एतदुक्तं भवतीति। कारणरूपस्य ब्रह्मणो गुणलेशराहित्यात्। तदेव भगवान् वार्षगण्यो गुणरूपापेक्षया तत्-कारणरूपं ब्रह्म पारमार्थिकमिति व्युत्पादयितुमाह—

"गुणानां परमं रूपं न दृष्टिपथमृच्छति।
यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम्॥" इति।

अत्रेदमवधेयं यदपि योगसिद्धये सांख्योक्तप्रकारेण प्रपञ्चस्य परमार्थत्वमभ्युपगतं तच्च वस्तुतो मायेव सुतुच्छकं मिथ्यार्थभूत-त्वादिति। अतो ह्यनेन सर्व्वेषामचेतनानां चेतनार्थतया चैतन्याधीन-सत्ता वेदान्तिभिरुच्यमाना सविशेषेण प्रतिपादिता भवति।

ननु सिद्धेऽपि कैवल्ये भुक्तभोगानां पुनरावृत्तिरिति चेत्? न। भगवत्प्रसादेन प्रकृत्यावरणं त्यक्त्वा य एव सत्सम्पन्नास्तेषां पुनरावर्त्तनाश्रवणात्। गीतायां च हरिणाऽभाणि—"मामुपेत्य तु कौन्तेय पुनर्ज्जन्म न विद्यत" इति। तदेव ब्रह्मभूयं गतानां पुनरावर्त्तनं न वेति येषां संशीतिस्तान् एव भगवान् भाष्यकार उपहासमुखेन स्मारयति—

अन्धो मणिमविध्यत् तमनङ्गुलिरावयत्।
अग्रीवस्तं प्रत्यमुञ्चत् तमजिह्वोऽभ्यपूजयत्॥ इति।

ननु, तदेव किं कैवल्यमधिरूढानामात्यन्तिको बन्धध्वंसः स्यात्? ॐ भो इति। साक्षात्कृतब्रह्मज्योतिषां तेषां कैवल्यपदानुप्रविष्टानां मुक्तानां न कदाचित् संसारापत्तिः 'न स पुनरावर्त्तत' इति श्रुतेः। तदेव योगदर्शनस्यापि चरमसिद्धान्तो नितरां वेदान्तमुपतिष्ठत इति। ॐ शम्।

## षडध्यायीकर्ता कपिलः

[ निबन्धकः—श्रीविद्येन्द्रशास्त्री ]

सांख्यं हि दर्शनेषु प्राचीनतमं, कर्ता चास्य भगवानादिविद्वान् कपिल इति प्रायः सार्वजनीनं मतम् (१)। तस्य चास्य सांख्यस्य साम्प्रतं ग्रन्थद्वयमुपलभ्यते। तत्रैकस्तत्त्वसमासाख्यः पञ्चविंशतिसूत्रै-र्द्वाविंशतिसूत्रैर्वा विनिबद्धः, अपरश्च षडध्यायीरूपः सर्वत्र सुप्रसिद्धः सूत्राणां पञ्चशतोत्तरषड्विंशत्या विनिबद्धः।

तत्राद्यः पञ्चशिखाचार्यटीकया विभूषितोऽप्यस्तीत्यस्यैव ग्रन्थ-रत्नस्य वृत्तिष्वन्यतमायास्तत्त्वयाथार्थ्यदीपनाख्यवृत्तेर्मङ्गलश्लोकेनाव-गम्यते। (२) ग्रन्थकृतश्चास्य विज्ञानभिक्षुरपि परिचित इति तदीय-प्रवचनभाष्यभूमिकातः स्पष्टमवभासते (३)॥

चरमे च षडध्यायीरूपे सांख्ये अनिरुद्धवृत्तिः श्रीमदनिरुद्धप्रणीता, प्रवचनभाष्यं विज्ञानभिक्षुविरचितं, वेदान्तिमहादेवकृता टीका च। अत्रानिरुद्धवृत्तिरेव प्राचीनतमा अपरं द्वितयं च तदपेक्षयार्वाचीनम्। अस्य च द्वितयस्यापि सांख्यस्य कर्त्ता भगवानादिकपिल इत्युच्यते॥

विवेचनया तु—तत्त्वसमासाख्यग्रन्थस्य प्रणेता तु स्यादेवादिविद्वान्

१ (क) आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञास-मानाय तन्त्रं प्रोवाच (पञ्चशिखः)।

(ख) भगवतः कपिलस्यादिसर्गे समुत्पद्यमानस्य चत्वारो भावाः सहोत्पन्ना धर्मो ज्ञानं वैराग्यमैश्वर्यम्' (गौडपादः)।

(ग) सर्गादावादिविद्वान् अत्रभवान् कपिलो महामुनिः धर्मज्ञानवैराग्यैश्वर्यसम्पन्नः प्रादुर्बभूव (वाचस्पतिः)।

२ आदिवि समाससूत्रमालम्ब्य व्याख्यां पञ्चशिखस्य च।
भावागणेशः कुरुते तत्त्वयाथार्थ्यदीपनम्॥

३ नन्वेवमपि तत्त्वसमासाख्यसूत्रैः सहास्याः षडध्याय्याः पौनरुक्त्यम्।

कपिलो न तु भिक्षुभाष्यसंवलितस्य षडध्यायीरूपस्य सांख्यस्यापि। अत्र चैते हेतवः प्रतिभान्ति—

(क) नह्यादिविद्वत्कृते ग्रन्थे परवर्त्तिशास्त्राणां तत्तच्छास्त्रीयपारिभाषिकशब्दोपादानपूर्वकं खण्डनमण्डने सम्भवतः, अत्र तु बहुत्र न्यायादिशास्त्राणां पारिभाषिकशब्दोपादानपुरःसरं प्रत्याख्यानं कृतमुपलभ्यते (१)।

(ख) नहि प्राञ्च आचार्याः क्वापि खण्डनमण्डनप्रस्तावे सूत्राणि समुपयुयुजिरे—अपि तु सर्वत्र कारिका एवेमा उपयुक्ता दरीदृश्यन्ते। इतोऽप्येतदेवायाति यन्नैतेषां सूत्राणामादिविद्वत्प्रणीतत्वमिति। मन्येऽमुनैव हेतुना षड्दर्शनव्याख्यातृभिराचार्यवाचस्पतिमिश्रैः कारिका एव व्याख्याता न तु सूत्राणि।

यतोऽस्य तर्कप्रधानत्वमसकृदुक्तं(२) विज्ञानेनैव ; अत एवादौ तर्केणार्थं प्रसाध्य पश्चात्तदनुगामिनीः श्रुतीरपि निर्दिशति, त्यजति च तत्र तत्र स्वारसिकं श्रुत्यर्थं तर्काननुगुण्यभिया।

(ग) समाननामानौ द्वौ कपिलावास्ताम्, तयोः शिष्यपरम्परापि तादृश्येवेत्ययं विषयः कालिकापुराणेऽप्युक्तः, उद्धृतं च तत्पुराणं छान्दोग्यभाष्ये मध्वाचार्यैः (३)।

---

(१) न समवायोऽस्ति प्रमाणाभावात् ५।९९, षोडशादिष्वप्येवम् ५।८६, न कार्ये नियमस्तथादर्शनात् ५।६१।

(२) (क) नन्वस्य मननशास्त्रत्वादत्रार्थे युक्तिरपि वक्तव्येति चेत्। सा० भा० सू० १७

(ख) अस्य शास्त्रस्यानुमानप्राधान्यात् तु केवलानुमानस्य सुख्यतयैवोपन्यासो न त्वागमस्यानपेक्षतया। सा० भा० पृ० ७२

(३) महिदासस्त्वैतरेयो ब्रह्मचोपनिषद्गतः।
साक्षात्स भगवान् विष्णुस्तन्नामैको मुनिर्ह्यभूत्॥
कृष्णस्तु वासुदेवाख्यः परमात्मैव केवलम्।
तन्नामा देवकीपुत्रस्तनयोऽप्यभवद्धसा॥

( ख ) विज्ञानेनापि समुद्धृतैका स्मृतिर्यतोऽग्न्यवतारमत्र कपिलस्य सांख्यशास्त्रप्रवर्तकत्वमायाति । सा चेयम्—

"अग्निः स कपिलो नाम सांख्यशास्त्रप्रवर्तकः"

( सा० भा० पृ० २२१ )

(ङ) भगवत्पादैराचार्यश्रीशङ्करैरपि—वेदार्थोपबृंहितेन वेदान्तसमन्वयेन विसंवदन्तः सांख्यीयराद्धान्ता आदिविद्वद्भगवत्कपिलप्रणीता एवेत्यत्र सन्देहः प्रदर्शितः । (१)

एभिर्बाह्यसाक्षिभिः पूर्वोक्तैरन्तःसाक्षिभिश्च इदमेव प्रतीयते यन्नेदं षडध्यायीरूपं सांख्यम् आदिविद्वद्भगवत्कपिलप्रणीतम्, कपिलान्तरप्रणीतं वा न वेत्यत्र पुनर्विचारं प्रवर्तयिष्यामः ।

(ग) अपि च योगसूत्राणि व्याचक्षाणैर्भगवत्पादैर्व्यासदेवैस्तत्र तत्र स्वोक्तप्रामाण्यसमर्थनाय आचार्यपञ्चशिखस्य सूत्राणि बहुत्र समुद्धृतानि, षष्टितन्त्रमपि समुद्धृतम् किन्तु सांख्यसूत्राणां चर्चापि न कृता ; तदेतत् स्पष्टतमं सुपुष्टं च प्रमाणं यन्नैतानि सूत्राण्यादिकपिलप्रणीतानि—अन्यथा स्वोक्तसमर्थनाय कपिलप्रशिष्यं प्रमापयन्नाचार्यः कथमिव शास्त्रप्रवर्तकं प्रथममाचार्यं परिजह्यात् ।

(घ) सूत्राणां रचनयापीदमेव प्रतीयते यत्खारिकोत्तरकालमेवे-

---

कपिलो वासुदेवाख्यः साक्षान्नारायणः प्रभुः ।
तन्नाम्ना कपिलोऽन्यस्तु शिष्यनाम्ना सदाऽभवत् ॥
स षोडशशतं जीवी महिदासोऽपरस्तु षिः ।
घोरशिष्यस्तथा कृष्णः कपिलस्य कृशास्त्रकृत् ॥
त्रय एते वरं प्राप्य ब्रह्मणः परमेष्ठिनः ।
कृतकृत्याः प्रमुमुदुस्सामानस्य तेऽभवन् ॥
( छान्दोग्यमध्वभाष्य अ० ३ खं १६ मं० ७ )

(१) कपिलमिति श्रुतिसामान्यमात्रत्वात् । अन्यस्य च कपिलस्य सगरपुत्राणां प्रतप्तुर्वासुदेवनाम्नः स्मरणात् । (शा० भा० पृ० ३४९ निर्णयसागर )

तेषां प्रादुर्भावः यतः काश्चित्कारिकाः साक्षादेव सूत्रतामापादिताः (१) काश्चिच्च लिङ्गपरिवर्त्तनमात्रेण सूत्रभावं भजन्ते (२)। काश्चिच्च कारिकाः विच्छिद्य विच्छिद्य सूत्रतां नीतास्ताश्च संयोजकपदैः सह कारिकात्वं लभन्ते (३)। कानिचित् सूत्राणि यदि न कारिकांशभूतानि तदा तेषां तादृशी रचना न जातु सम्भाव्यते (४)। अनेन च सुस्पष्टमिदं यत् उपलभ्यमानानां सूत्राणां रचना कारिकोत्तरमेव। न चैतत् सौसादृश्यं घुणाक्षरन्यायानुगत-मानुषङ्गिकमिति शक्यं वक्तुं—आर्य्याया मात्राछन्दस्त्वात्। आर्य्या हि मात्राछन्दः अस्य च रचना मात्रां परिगणय्य सम्पद्यते—न च मात्राणां संवाद आनुषङ्गिक इति सम्भावयितुं शक्यम्। कारिकोत्तरं जातानां चैषामादिकपिलप्रणीतत्वमसम्भवि।

(ङ) किञ्च, समुपलभ्यमाने षडध्यायीरूपे सांख्ये कतिचन निर्देशा एवं समुपलभ्यन्ते यैर्नेदमादिकपिलप्रणीतमितप्रायाति; यथा —

१। आधेयशक्तियोग इति पञ्चशिखः ५।३२

२। अविवेकनिमित्तो वा पञ्चशिखः ६।६८

---

१ हेतुमदव्यापि सक्रियमनेकमाश्रितं लिङ्गम्। सां० कारि० १०
हेतुमदव्यापि सक्रियमनेकमाश्रितं लिङ्गम्। सां० अ० १ सू० १२४

२ सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्। सा० का० २५
सात्विकमेकादशकं प्रवर्तते वैकृतादहङ्कारात् सा० अ० २सू० १८

३ सङ्घातपरार्थत्वात् त्रिगुणादिविपर्य्ययादधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च। सां० का० १९
संहतपरार्थत्वात्, त्रिगुणादिविपर्ययाद्, अधिष्ठानाद्, भोक्तृभावात,
कैवल्यार्थं प्रवृत्तेश्च, सां० अ० १सू० १४०ते १४४०

४ प्रीत्यप्रीतिविषादात्मकाः।
सुखदुःखमोहात्मका इति सरलां रचनां परित्यज्य प्रीत्यप्रीत्यादिरचना मात्रापरिगणनेच्छया कारिकास्वेवोपयुज्यते॥

३। वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः २।२३

४। समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता ५।११६

तत्राद्यसूत्रद्वयविषये इदं वक्तव्यम्—यदत्र पञ्चशिखमतं तत्र तत्र प्रमाणीकृतं सूत्रप्रणेत्रा तच्च न सम्भाव्यते, यतो ह्यादिविद्वान् सांख्य-प्रवर्त्तको भगवान् कपिलः स्वनिर्मितशास्त्रे कथमिव स्वप्रशिष्यस्य पञ्चशिखस्य मतमुद्धरेत्।

तृतीयं च सूत्रमानुपूर्व्या योगशास्त्रे समुपलभ्यते, इदं चाप्ययुक्तं, न ह्यादिविद्वान् प्रथमशास्त्रप्रवर्त्तकः स्वपरवर्त्तिनो दर्शनकर्तुर्मतमुद्धरेत्। न च योग एव सांख्यीयं मतमुद्धृतं स्यादिति युक्तम् तत्सूत्रस्य तत्र (योगदर्शने) स्वरसप्राप्तत्वात्, अत्र तु तदभावात्।

तुरीयन्तु सूत्रं सिद्धान्तविरुद्धम्। नहि सांख्यीये राद्धान्ते ब्रह्म कश्चित्पदार्थः परिगणने लक्षणे वा तदवचनात्। तस्मादपसिद्धान्तेयं कथा, अयं च राद्धान्तो वेदान्तस्य।

तदेवमादिभिरन्तःसाक्षिभिरिदमायातं यदुपलभ्यमानं षडध्यायीरूपं सांख्यं न ह्यादिविद्वत्कपिलप्रणीतम्—कारिकोत्तरं चास्य रचना सञ्जातेति।

साम्प्रतमत्रैव केचन बाह्यसाक्षिणः समुपस्थाप्यन्ते—

(क) तत्त्वसमासाख्यसूत्रेषु सर्वोपकारिणीतराख्यया प्रसिद्धा एका अपरा टीका विद्यते। ग्रन्थकृच्चायं स्वनामग्रामादिभिर्न जनसाधारणं परिचिकाय, प्राह चायं स्वग्रन्थारम्भे "इतश्चेदं सकलसांख्यतीर्थमूलभूतं तीर्थान्तराणि चैतत्प्रपञ्चभूतान्येव, सूत्रषडध्यायी तु वैश्वानरावतार-महर्षिभगवत्कपिलप्रणीता। इयन्तु द्वाविंशतिसूत्री तस्या अपि बीजभूता नारायणावतारमहर्षिभगवत्कपिलप्रणीतेति वृद्धाः" (सां सं० पृष्ठ० ८३)

अनेन च सुस्पष्टमेतद् यदुपलभ्यमाना सूत्रषडध्यायी नादिविद्वत्कपिलप्रणीता अपि तु वैश्वानरावतारकपिलान्तरप्रणीता इत्येवं वृद्धा

मन्यन्ते स्म सर्वोपकारिणो वृत्तिकर्तुः समये। न चानया वृद्धशास्त्रज्ञसम्मतया विज्ञानदेवोऽपरिचितः, किन्तु सोऽमुमर्थं श्रद्धातिशयवशाद् हठाद्वा अन्यथयाञ्चकारेति खेदास्पदम्। (१)

(ख) एवम्—

> कपिलो वासुदेवाख्यः सांख्यतत्त्वं जगाद ह
> ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च।
> तथैवासुरये सर्वं वेदार्थैरुपबृंहितम्॥
> सर्वं वेदाविरुद्धं च कपिलोऽन्यो जगाद ह।
> सांख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितम्॥

एतत् पद्यजातं पद्मपुराण उपलभ्यते उद्धृतं च श्रीबलदेवविद्याभूषणैः ब्रह्मसूत्रभाष्ये। (२)

एभिश्च पद्यैरिदमायाति यदेक आदिविद्वान् नारायणावतारो भगवान् कपिलः, यो वेदार्थोपबृंहितं शास्त्रं जगाद। तथैवान्योऽपि कश्चन कपिलः शुष्कतर्कोपबृंहितं शास्त्रं जगाद। एतदेव साम्प्रतमुपलभ्यमानं षडध्यायीरूपं सांख्यमिति प्रतिभाति।

---

## रसमीमांसा

[ निबन्धकः—साहित्यविद्याप्रवीणः, बु, वेङ्कटरमणार्यः ]

( पूर्वतोऽनुवृत्ता )

प्रागुक्तैर्विभावानुभावव्यभिचारिभिः स्थायिनो भावस्य संयोगाद्रसस्य निष्पत्तिः। भावस्य स्थायित्वञ्च सजातीयविजातीयभावानभिभूततया यावद्रसानुभवमवस्थितिरेव। भरतमुनिनापि "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति" रिति

रसनिष्पत्तिः।

---

१ सांख्यप्रवचनभाष्ये चौखम्बामुद्रिते २६१ पृष्ठेऽवलोकनीयम्

२ विद्याभूषणकृते ब्रह्मसूत्रभाष्ये अ० २ पा० १. सू० २ अवलोकनीयम्

सूत्रयित्वैतदेव प्रतिपादितमिति सहृदया जानन्त्येव। यैस्तावद्रस-विचारः कृतः क्रियमाणो वा सर्वैस्तैर्भरतमुनिरेव प्रमाणतयाभ्युपगतोऽभ्युपगन्तव्यश्च, ततः प्राक् केनापि रसप्रतीतेरनिरूपितत्वात्।

सर्वैरपि प्रायशो भरतसूत्रमेव रसस्वरूपनिरूपण आद्रियते, परं तु सूत्रस्य "संयोगाद्", "निष्पत्ति" रिति पदद्वयं संशयग्रस्तं विविधानां मतानां कारणमभूत्। संयोगादिति शब्दस्य किं व्यञ्जनात्, उत सम्यग् योगात्, आहोस्विद् भावनाविशेषरूपदोषात् इत्यर्थः कल्पनीय इति निश्चेतुं न शक्यते। तथैव निष्पत्तिशब्दस्य किमुत्पत्तिरर्थः, उत भुक्तिरित्यर्थः, आहोस्वित् व्यक्तिरर्थः किमनुमितिरित्यर्थ इति कथमपि वक्तुं न पार्यते। अत एव रसप्रतीतिविषये उत्पत्तिवादो, भुक्तिवादोऽनुमितिवादो व्यक्तिवाद इत्येवमादिवादाः प्रादुरभूवन्।

परं त्वस्मिन् विषये प्रायः सर्वेषामभिप्रायस्त्वेक एव प्रतिभासते यद्रत्यादिकः स्थाय्येव भावो रसतया परिणमतीति। भरतमुनिनाप्येतदेव प्रतिपादितम्—"स्थायिभावा रसत्वमाप्नुवन्ती"ति। ( ना० शा० पृ ३८० )—अत्राह—"यथाहि नानाव्यञ्जनौषधिद्रव्यसंयोगाद्रस-निष्पत्तिर्भवति, यथा हि गुडादिभिर्द्रव्यैर्व्यञ्जनौषधिभिश्च षाडवादयो रसा निर्वर्तन्ते, तथा नानाभावोपगता अपि स्थायिनो भावा रसतामाप्नुवन्तीति", इति च। [ ना० शा० पृ २८१ ]

दण्डिप्रभृतीनामप्ययमेवाशय इति प्रतिभाति—यत्तेनैवमुक्तम्
"रतिः शृङ्गारतां गता, रूपबाहुल्ययोगेने"ति
"अधिरुह्य परां कोटिं क्रोधो रौद्रात्मतां गतः" इति च

[ काव्यादर्शः २—२८२, २८३, ]

प्रतीतिविषये मार्गभेदेऽपि सर्वैः प्रायशो रत्यादिरेव रसतयाभ्युपगत इति प्रागेवोक्तम्।

तत्रभवता, शृङ्गारप्रकाशस्य निर्माता भोजदेवेन नूतन एव पन्था अन्वयायि। एक एव शृङ्गारो रस इत्यङ्गीकुर्वाणेन तेन शृङ्गारादेव

रत्यादीनां प्रभवता प्रतिपाद्यते। रत्यादिभ्य एव शृङ्गारादीनां रसानां प्रभव इति खलु सर्वेषां पक्ष:। स्वमतसमर्थनपूर्वकं तेनैतत् प्रतिपाद्यते। "न रत्यादिर्भूमा रस:। किं तर्हि शृङ्गार:। शृङ्गारो हि नामात्मनोऽहंकारविषय: सचेतसा रस्यमानो रस इति।.........।" वयं तु मन्यामहे रत्यादीनामयमेव प्रभव इति। शृङ्गारिणो हि रत्यादयो जायन्ते नाऽशृङ्गारिण इति। शृङ्गारो हि नाम विशिष्टेष्टदृष्टचेष्टाभिव्यञ्जको नामात्मगुणसम्पदाम् उत्कर्षबीजं, बुद्धिसुखदु:खेच्छाद्वेषप्रयत्नसंस्काराद्यतिशयहेतुरात्मनोऽहंकारविशेष:। सचेतसा रस्यमानो रस इत्युच्यते। यदस्तित्वे रसिकोऽन्यथा तु नीरस इति। तदाविर्भावहेतवश्च तत्प्रभवा एव भावा:। ते चैकान्नपञ्चाशत्। (५१) रति: हर्ष:, रोमाञ्च इत्यादि।

[ Srugara prakasa, Oriental Mss
Library Madras, P. 354 ]

अथ रसस्य प्रतीति: कीदृशीति विचार्यते। निरूपितेऽपि नाट्यशास्त्रे रसस्वरूपे किं रसो गोचरीक्रियमाण उतानुमीयमानो वा, आहोस्विद् व्यज्यमानो वेति नाट्यशास्त्रतो निर्णेतुं न हि शक्यते। परं तु नाट्यशास्त्रस्य व्याख्यातृभिरनेकधा निरूपितं तत्स्वरूपं यथेच्छम्। ग्रथिता: खलु बहुभिर्लोल्लटशङ्कुकभट्टनायकप्रभृतिभिस्तस्य व्याख्या:। तास्ता विलीना: कालकरालकुक्षौ नाद्याप्युपलभ्यन्ते। परं तु तत्रभवद्भिराचार्याभिनवगुप्तपादैर्निर्मितायामभिनवभारत्यां नाट्यशास्त्रव्याख्यायां रसस्वरूपनिरूपणावसरे खण्डनार्थम् भट्टनायकादीनामपि मतानि निरूपितानीति। तत एव तत्स्वरूपं तन्मते किञ्चिदवगन्तुं शक्यते। सर्वेषामपि तेषामाशया: सम्यगग्रे प्रतिपादयिष्यन्ते।

भरतमुने:' पश्चाद्रसविषये वैशद्येन रुद्रटाचार्येणैव प्रस्तावितम्। परं त्वलङ्कारप्राधान्यमार्गगामिना तेन रसस्य प्राधान्यं नाभ्युपगतमिति

तत्कृतकाव्यालङ्कारेऽपि कथं रसप्रतीतिर्जायत इति न विचारितम्।
केवलं "एते रसा रसवतो रमयन्ति पुंसः
सम्यग्विभाज्य रचिताश्चतुरेण चारु।
यस्मादिमाननधिगम्य न सर्वरम्यं
काव्यं विधातुमलमत्र तदाद्रियेत॥"
इत्येव तेन निरूपितम्।

तत्रभवता ध्वनिकृताऽऽनन्दवर्धनाचार्येणैव रसविषये किञ्चिन्निर्धारितम्। वस्त्वलङ्काररसात्मना त्रिविधे ध्वनौ रसस्यैव मुख्यत्वम्, वस्त्वलङ्कारौ तु वाच्यावपि सम्भवतः, रसस्तु न कदापि वाच्योऽपि तु व्यङ्ग्य एवेति च निरूपितम्। रसस्य विभावादीनां च व्यङ्ग्यव्यञ्जकभावसम्बन्ध एवाभ्युपगतः। अतस्तदनन्तरकालीनैः सर्वैरप्यालङ्कारिकैः प्रायश्च एष एवाशयोऽङ्गीकृतः। आनन्दवर्धनमताभिप्रायस्तु स्फुटतया श्रीमदाचार्याभिनवगुप्तपादैरेव प्रतिपादितम्। अयमेव पक्षः सर्वैरपि मम्मटाचार्यादिभिराद्रियत इति स एव प्रथमं प्रतिपाद्यते।

रसस्य श्रव्यकाव्याद् दृश्य एव सम्यगवगन्तुं शक्यते। सामान्यतो रसो दृश्यकाव्यनिष्ठ एवेति प्रतिपादितं सर्वैरपि, श्रव्येऽपि क्रमेण पर्यालोच्य सोऽभ्युपगत इति रसास्वादलालसैः सर्वैरपि सहृदयैः सामाजिकैर्भूत्वा "अद्य तावदस्माभिर्नाट्यमेव दृश्यत" इति मन्तव्यम्, तथाचेदेव तत्सिद्धेः।

रसस्तु सहृदयैरेवोपभोक्तुं शक्यते, आस्वादनार्थकाद्रसधातोर्वञ्जिकृते रसयते आस्वाद्यते इति रस इति तदीयव्युत्पत्त्यापि तस्यैतदर्थस्य सिद्धत्वात्। असहृदयैस्तु न शक्यते रसमास्वादयितुमित्यलम्। त एव हि सहृदया यैर्लोके ललनोद्यानादिभिः कारणैः कटाक्षादिभिः कार्यैश्चिन्तादिभिः सहकारिकारणैश्च रसमनुमीयास्वाद्यते।

सर्वस्यापि जनस्य हृदये वासनारूपतया शृङ्गारादिको रसः स्थायिरूपो वर्तते। तथैवानन्दोऽपि तत्रैव प्रतिभाति। परं तु

तदेतदावरणरूपेणाज्ञानेनावृतो न सर्वदा प्रकाशयितुं शक्यते। अज्ञानस्यावरणस्य भङ्गे सर्वोऽप्ययं प्रकाशते। आवरणभङ्गे चान्तः स्थितः स्थायी रत्यादिको भाव आनन्देन सह बहिर्निर्गत्य सर्वं जगद् व्याप्नोति। तस्यामेवानुभूतौ जनोऽपि विगलितवेद्यान्तरस्पर्शः प्रकृष्टपरिमितप्रमातृत्वादिनिजधर्मो विलीनो भूत्वा कमपि लोकोत्तराह्लादजनकं रसापरपर्यायं किमप्यनिर्वचनीयं भावमास्वादयति, तादृशास्वाद एव रसास्वाद इति सर्वैः परिगण्यते। अयं च भाव आनन्देन सहैव गोचरीभवति, न पुनस्तमन्तरेत्युक्तमेव।

सति चाज्ञानरूपावरणभङ्गे रसास्वादः। अपि च सवासनानामेव रसानुभवः, नान्येषाम्। तदुक्तम्—

सवासनानां सभ्यानां रसस्यास्वादनं भवेत्।
निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसंनिभाः॥ इति।

अत एव रसास्वादनाधिकारोऽपि सवासनानामेव सहृदयानाम्, नासहृदयानाम्।

अथावरणभङ्ग एव कथमिति विचारणीयम्।—

लोके यानि कारणतया कार्यतया सहकारितया प्राक् प्रतिपादितानि तान्येव नाट्ये काव्ये च क्रमेण विभावनानुभावनव्यभिचरणव्यापारत्वाद् विभावानुभावव्यभिचारिशब्दव्यपदेश्यतां भजन्ते। लोके कारणादीनि काव्ये नाट्ये च विभावादितयोच्यन्ते इत्यर्थः।

यदा नटः कविश्च निपुणः, नाट्यं काव्यं च तत्तद्रससमुचितसन्निवेशचारु, तदा प्रागुक्ता विभावादिभावाः सकलसहृदयहृदयावर्जका भूत्वा सामाजिकानां सहृदयतावशेनोत्पन्नेन पुनः पुनरनुसंधानात्मना भावनामहिम्ना साधारणीक्रियन्ते, तथा च तदा तद्भावविषये "एते ममैव वर्तन्ते, एते परस्यैव वर्तन्ते, एते नटस्थस्यैव वर्तन्ते" इति सम्बन्धविशेषस्वीकारस्य वा, "न ममैव, न परस्यैव" इति सम्बन्धविशेषपरिहारस्य वा नियमो न प्रादुर्भवति। यद्वै स्वीकारपरि-

स्थायोर्नास्ति नियमस्तत्र सर्वसाधारणत्वमेव। एवं भावाः साधारणी-क्रियन्ते, एतच्च साधारणीकरणं इत्थतः सम्यग् ज्ञातुं शक्यते।

एवं परस्परसम्मिलितैः सर्वसाधारणीकृतैर्विभावानुभावव्यभिचारिभि-सम्भूयालौकिकः कश्चिद् व्यापार उत्पाद्यते। स एव व्यापारो व्यञ्जनाव्यापार इति व्यक्तिवादिभिरुच्यते। स च व्यापारो विभा-वादीनां चर्वणामहिम्नैव। अनेनैव व्यञ्जनाव्यापारेणाज्ञानमानन्दा-द्यावरणरूपं भज्यते, आवरणनिवृत्तौ सहृदयेन प्रमात्रा तत्काल-विगलितपरिमितप्रमातृत्वादिनिजधर्मेण वेद्यान्तरस्पर्शशून्यापरिमित-भावेन स्वप्रकाशतया वास्तवेन चित्स्वरूपानन्देन सह वासनारूपतया प्राग्विनिष्ठो रत्यादिरेव गोचरीक्रियमाणो रसपदव्यपदेश्य इति प्रागेव प्रतिपादितम्।

किं च यदवधि विभावादिचर्वणा तदवधि केवलमावरणभङ्गोऽपि, तदवध्येव रसास्वादोऽपि, यथा शरावादिना पिहितो दीपस्तन्निवृत्तौ संनिहितान् पदार्थान् प्रकाशयति तद्वदात्मचैतन्यमपि विभावादि-संवलितान् रत्यादीन् प्रकाशयति। यदा दीपः शरावादिना पिहितो भवति तदा न कंचिदप्यर्थं प्रकाशयितुं शक्तस्तथाज्ञानावृतमप्यात्मचैतन्यं रत्यादीन् प्रकाशयितुं नालम्। अत एवोक्तम् "व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः" इति, व्यक्तस्य व्यक्तिविषयीकृतः, व्यक्तिश्च भग्नावरणा चित्। एवं व्यक्तिवादिमतमुक्तम्।

एवं च विभावादिभिर्व्यञ्जनात् चिदानन्दविशिष्टस्थायिनो रत्यादेरभिव्यक्तिरेव रस इति फलितम्। एतच्चाचार्याभिनवगुप्तपाद-मतम्। तत्रभवद्भिः पण्डितराजजगन्नाथैस्तु स्वल्प एव भेदोऽत्र प्रकाशितः। विभावादिभिर्व्यञ्जनात् स्थायिरूपरत्यादिविशिष्टा भग्नावरणा चिदेव रस इति तेषामाशयः।

"रसस्तु परब्रह्मसब्रह्मचारीति सर्वैरेवोपगतः। अतस्तत्साम्यस्यैव प्रतिपादनीयतया रत्याद्यवच्छिन्ना चिदेव रस इति वक्तुं सुवचम्, किञ्च

"रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति श्रुतौ तच्छब्देनाऽऽनन्द एव ग्रहीतुमुचितो न रत्यादिकः। अतश्चानन्द एव रस इति श्रुत्यर्थः।" इति तत्र प्रमाणम्। उभाभ्यामपि व्यञ्जनाव्यापारोऽङ्गीक्रियत इति नान्यत्रानयोर्वैमत्यमिति दिक्।

प्रायः सर्वैरप्यालङ्कारिकैर्भरतमुनिसूत्रितमेव रसलक्षणसूत्रमवलम्ब्य स्वस्वमतानि प्रकटीकृतानि। तस्माद् व्यक्तिवादिनोरनयोरपि मते तत्सूत्रं सङ्गमनीयमेव। तथाहि "विभावानुभावव्यभिचारिसंयोगाद्रस-निष्पत्ति" रिति सूत्रम्। एतदपि प्रागेव लिखितम्।

पूर्वोक्तैर्विभावानुभावव्यभिचारिभिः संयोगाद् व्यञ्जनाद् रसस्य चिदानन्दविशिष्टस्थाय्यात्मनो निष्पत्तिः स्वरूपेण प्रकाशनमिति श्रीमदाचार्याभिनवगुप्तपादानामभिप्रायः।

पूर्वोक्तैर्विभावानुभावव्यभिचारिभिः संयोगाद् व्यञ्जनाद् रसस्य रत्यादिस्थाय्युपहितचिदात्मनो निष्पत्तिः स्वरूपेण प्रकाशनमिति श्रीपण्डितराजजगन्नाथानामाशयः। (क्रमशः)

---

## समालोचनम्

**छान्दोग्यमन्त्रभाष्यम्।** भट्टगुणविष्णुप्रणीतम्। एम्. ए, काव्यसांख्यपुराणतीर्थोपनामदुर्गामोहनभट्टाचार्य्येण सम्पादितया सुविस्तृताङ्गलभाषाभूमिकया पाठान्तरादिसंयोजनया यथापेक्षित-टिप्पण्या मन्त्रविनियोगादीनामनुक्रमणिकया पुष्कलाकरप्रमाणसङ्केति-कया च समेतम्। संस्कृतसाहित्यपरिषदा प्रकाशितम्। मूल्यं पादोनं रूप्यकचतुष्टयम्।

"मन्त्रभ्रंशे सम्प्रदायः प्रयोगस्तु रतसंस्कृतौ ।
देशभ्रंशस्त्वनाचारे पृच्छतां सिद्धमुत्तरम् ॥"

विदितमेवैतत् प्रायेण परिषत्प्रणयिनामशेषाणां यत् परिषदः संस्थापने यानि खलूद्देश्यानि तेष्वेवान्यतमं दुर्लभग्रन्थराजिप्रकाशनं नाम । अत एवान्तरान्तरा तानि तानि शास्त्रीयाणि साहित्यविषयकाणि च निबन्धनानि भूयसा व्ययेन महता च प्रयत्नेन प्रकाशितानि परिषदा । इदानीं च शिथिलतामुपगतायाम् आर्य्याणां संस्कृतभाषाध्ययनस्पृहायां विशेषतो वैदिकमन्त्राध्ययनवासनायां यत्र पुरा शुकसारिकादिभिरपि सुविशुद्धमेव समुच्चारितानि वैदिकमन्त्रजातानि तत्र ब्राह्मणोत्तमैरपि पुरोहितप्रवरैरपि प्रायेणाशुद्धा एव मन्त्रा अशुद्धमेवोच्चार्य्यन्ते । अत्र न केवलं ब्राह्मणानां प्रयत्नशैथिल्यमेवापराध्यति, विशुद्धपुस्तकाभावोऽप्यत्र हेतुतामुपगच्छतीति न खल्वेतन्न विदितं विशेषविदुषाम् । अत एव प्राचीनाचारश्रद्धाजुषामार्य्याणामुपकाराय परिषन्तः श्रीमता दुर्गामोहनभट्टाचार्य्यकाव्यसांख्यपुराणतीर्थमहोदयेन महीयसा प्रयत्नेन संशोध्य गुणविष्णुविरचितं छान्दोग्यमन्त्रभाष्यं प्रकाशतां नीतम् । अत्र सामवेदीयानां ब्राह्मणानां गर्भाधानादितत्तत्संस्कारेषु विनियुक्ता मन्त्राः सुविशुद्धमाकरोल्लेखपूर्वकं च सन्निवेशिताः । गुणविष्णुप्रणीतं सरलं सुबोधं च भाष्यं भाष्यान्तरसंवादपूर्वकं समुपन्यस्तम् । भाष्यान्तर्गतान्यपि विषमस्थानानि टिप्पण्यां विवृतानि । सुविस्तृते चोपोद्घाते गुणविष्णोर्वङ्गीयत्वं वेदचतुष्टयभाष्यकर्त्तुः सायणाचार्य्यतोऽपि प्राचीनत्वं च प्रमाणपरम्परोपन्यासेन प्रतिपादितम् । अन्ते च श्लोकसूचिविनियोगसूचिप्रभृतयोऽपि सन्निवेशिता ग्रन्थस्य गौरवं वर्धयन्त्येव । एवं सर्वाङ्गरमणीयमिदं मन्त्रभाष्यं साग्रहं परिगृह्णन्तु धर्मरक्षणैकव्रता भारतवर्षीयाः, सफलयन्तु चात्मनो जन्म गृह्यकर्मसु यथाशास्त्रं विशुद्धमन्त्रोच्चारणेनेति शिवम् ।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| January, 1932. | १८५३ शकीये पौषे १४श-वर्षस्य ९म-संख्या | Vol. XIV. No. 9. |
|---|---|---|

## प्राचीनवैयाकरणाः

विदितमेवैतत् प्रायेण वैयाकरणानां यद्बोपदेवेन कविकल्पद्रुमस्य प्रारम्भे—

"इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥"

इति श्लोकेऽष्टानामादिशाब्दिकानां नामानि निर्दिष्टानि। एतेष्वष्टस्वमरसिंहस्य व्याकरणप्रबन्धकृत्त्वेन प्रसिद्धिः कुत्रापि नोपलभ्यते, अतएवार्वाचीनैरन्यथैव व्याकरणानां नामानि निर्दिश्यन्ते—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् ।
सारस्वतं चापिशलं शाकलं पाणिनीयकम् ॥"

इति। अत्र 'अमर'स्य स्थाने कौमारं पठ्यत इति स्पष्टमेव। परं यद्यप्यमरसिंहेन व्याकरणप्रबन्धः कोऽपि न निरमायि तथापि तस्य नामलिङ्गानुशासनमेव तदीयवैयाकरणधुरीणत्वे साक्षिभूयमावहतीति तस्य वैयाकरणेषु परिगणनं नांशतोऽप्यसमीचीनतामवगाहते। यथा नामलिङ्गानुशासनगताः शब्दाः सर्व्वत्र पाणिनीयं तन्त्रं नानुसरन्ति तथा

प्रबन्धान्तरे प्रदर्शयिष्यते। वोपदेवेन कविकल्पद्रुमस्य काव्यकामधेनु-समाख्यायां स्वोपज्ञटीकायां कातन्त्रसूत्रसमुद्धरणपूर्वकं विचारः प्रवर्त्तितः, तथाप्यादिशाब्दिकपरिगणनावसरे कौमारव्याकरणस्य प्रणेतुः शर्व्ववर्मणो नाम न निर्दिष्टमित्यापततोऽतीव विस्मयकरमेतत् प्रतिभाति, परं निपुणं विचार्य्यमाण एतदेव प्रतीयते यत् कौमारव्याकरणस्यैन्द्र एवान्तर्भावात्, इन्द्रस्य च प्रथमत एव समुल्लेखात् शर्व्ववर्मणः पृथङ्न निर्देशो न कृत इति। इदानीमेतेषामष्टानां विषये किञ्चिदुच्यते।

इन्द्रेणैव प्रथमतो वाचो व्याकृता इति तैत्तिरीयसंहितायामाम्नायते। तथाहि—"वाग्वै पराच्यव्याकृतावदत्। ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति। सोऽब्रवीद् वरं वृणे। मह्यं चैवैष वायवे च सह व्याकरोत्। तस्मादियं व्याकृता वागुद्यत" इति।

महाभाष्येऽपीन्द्रेण बृहस्पतिसविधे शब्दा अधीता इत्युपवर्ण्यते। "बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं शब्दपारायणं प्रोवाच नान्तं जगाम। बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रं चाध्ययनकालो न चान्तं जगाम। किं पुनरद्यत्वे यः सर्वथा चिरं जीवति स वर्षशतमेव जीवति" इति। ( महाभाष्ये पस्पशाह्निके )।

निरुक्तटीकायामपि दुर्गाचार्य्येण "अर्थः पदमैन्द्राणाम्" इत्युक्तम्। कलापचन्द्राभिख्यायां कातन्त्रटीकायामपि तथैव प्रतिपादितम्। कात्यायनविरचिते वाजसनेयिप्रातिशाख्येऽपि 'अर्थः पदम्' इति सूत्रमुपलभ्यते। अतश्च सूत्रमिदमिन्द्रव्याकरणगतं वाजसनेयिप्रातिशाख्यमपि इन्द्रव्याकरणानुसारीति प्रतीयते।

महेश्वरविरचितशब्दभेदप्रकाशस्य व्याख्यायां जैनटीकाकृता विमलमतिना सिद्धिरनुरक्तानां रूढेः इतीन्द्रव्याकरणस्य प्रथमं सूत्रमिति प्रतिपादितम्।

'जराया ङषिन्द्रस्याचि' इत्यभिनवशाकटायनसूत्रेऽपि ( १।२।३७ ) इन्द्रस्य नाम सन्दृश्यते। परं जैनेन्द्रव्याकरणे 'जराया ङश्च' इति

सूत्रस्योपलम्भादत्रैन्द्रशब्देन जैनेन्द्रो लक्ष्यत इत्यपि वक्तुं शक्यते। शाकटायनव्याकरणस्य टीकायाः प्रारम्भे यक्षवर्मणोक्तम्—

इन्द्रचन्द्रादिभिः शाब्दैर्यदुक्तं शब्दलक्षणम्।
तदिहास्ति समस्तं च यन्नेहास्ति न तत् क्वचित्॥

सारस्वतव्याकरणस्य प्रारम्भेऽपीन्द्रस्य समुल्लेखो दृश्यते—

इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः।
प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं नरः कथम्॥

इति। परमनुभूतिस्वरूपाचार्य्येणैन्द्रं व्याकरणं दृष्टं वा, महाभाष्य-गतामाख्यायिकामवलम्ब्य वैतदुक्तमिति निर्णेतुमिदानीं दुःशकम्।

कवीन्द्राचार्य्यप्रणीतायां ग्रन्थसूचावैन्द्रव्याकरणस्य नामोपलभ्यते, तेन खिस्तीये सप्तदशे शतकेऽप्येतच्चिराय न विलीनमिति प्रतीयते।

प्रायेण प्रतिव्याकरणमभिधानमपि वर्त्तत इति न खल्वेतन्न विदितं विशेषज्ञानाम्। वररुचिप्रणीतैन्द्रनिघण्टुरिदानीमप्युपलभ्यते, यस्यायमादिमः श्लोकः—

पूर्वं पद्मभुवा प्रोक्तं श्रुत्वेन्द्रेण प्रकाशितम्।
तद्बुधेभ्यो वररुचिः कृतवानिन्द्रनामकम्॥ इति।

पाणिन्यादिवैयाकरणानधिकृत्य कथासरित्सागरे काचनाख्यायिका वर्त्तते। ततोऽप्यैन्द्रव्याकरणस्य पाणिन्यादिपूर्ववर्तित्वं संसिध्यति। तथाच कथासरित्सागरे कात्यायनवचनम्—

अथ कालेन वर्षस्य शिष्यवर्गो महानभूत्।
तत्रैकः पाणिनिर्नाम जडबुद्धितरोऽभवत्॥
स शुश्रूषापरिक्लिष्टः प्रेषितो वर्षभार्य्यया।
आगच्छत्तपसे खिन्नो विद्याकामो हिमालयम्॥
तत्र तीव्रेण तपसा तोषितादिन्दुशेखरात्।
सर्वविद्यामुखं तेन प्राप्तं व्याकरणं नवम्॥

ततश्चागत्य मामेव वादायाह्वयते स्म सः ।
प्रवृत्ते चावयोर्वादे प्रयाताः सप्त वासराः ॥
अष्टमेऽह्नि मया तस्मिन् जिते तत्समनन्तरम् ।
नभस्थेन महाघोरो हुङ्कारः शम्भुना कृतः ॥
तेन प्रनष्टमैन्द्रं तदस्मद्व्याकरणं भुवि ।
जिताः पाणिनीयाः सर्वे मूर्खीभूता वयं पुनः ॥

बृहत्कथामञ्जर्यामपि—

व्याडीन्द्रदत्तसहिते सर्वज्ञे मयि विश्रुते ।
पाणिनिर्नाम वर्षस्य शिष्यः सर्वजडाश्रयः ॥
तपसा शङ्करात् प्राप्य नवं व्याकरणं वशी ।
दिनान्यष्टौ विवादे मेऽप्रतिवादिसमोऽभवत् ॥
मया जिते ततस्तस्मिन् हुङ्कारेण विमोहयन् ।
जहार नो हरिः कोपादैन्द्रव्याकरणस्मृतिम् ॥

चैनिकपरिव्राजकेन ह्युयेनथ्साङ्नाम्नापुरुषेणाम् आदौ ब्रह्मणा इन्द्रेण च व्याकरणशास्त्रनियमाः प्रवर्त्तिताः । तेषामध्ययनं दीर्घकालापेक्षमिति पुरुषायुषे शतवर्षत्वमुपागते शब्दार्थावबोधाय चातिमात्रं क्लिश्यमाने जननिवहे ऋषिप्रवरः सर्वज्ञाननिधिः पाणिनिः प्रादुर्भूय तदानीन्तनानां समवस्थासन्दर्शनेन सञ्जातकारुण्यो दूरीकृत्य दुरुहाण्यपाकृत्य चापशब्दजालान्युत्सर्गापवादमुखेन शब्दानुशासनं प्रणेतुमैच्छत् । एवं चिन्तयतो जनानां शिक्षार्थं च विचरतस्तस्येश्वरदेवेन साक्षात्कारः समजनि । स च तस्य मनोगतं विज्ञाय परां प्रीतिमापन्नस्तस्मै शब्दपारायणं प्रोवाच । ततश्चोपदेशमधिगम्य महता प्रयत्नेन सहस्र-श्लोकात्मकं शब्दानुशासनं संग्रथितवान् ।

खिस्तीयसप्तदशशतके तिब्बतीयविदुषा तारानाथेनोक्तम्—चान्द्रं व्याकरणं पाणिनीयानुसारि, कातन्त्रं पुनरैन्द्रानुसारीति ।

खिस्तीयविंशशतकस्य प्रथमे दशके मध्यासियाप्रदेशे कतिपय

प्राचीनानि हस्तलिखितानि पुस्तकान्यधिगतानि सयत्नमन्वेषणपरैः कैश्चिज्जर्मण्यदेशीयैः। तत्र च 'कातन्त्रानुसारी कश्चन व्याकरण-ग्रन्थोऽप्युपलब्धः। ग्रन्थोऽयमादावन्ते च खण्डितः पत्रचतुष्टयात्मकः। प्रतिपत्रं पञ्चात्र पङ्क्तयो वर्त्तन्ते, प्रतिपङ्क्ति चादूरचत्वारिंशा-न्यक्षराणि। तत्रत्यानि सूत्राणि यथामति संशोध्य शर्म्मण्यविद्वत्-प्रवरेण सीग् ( Sieg. ) महोदयेन प्रकाशितानि, सूत्राणि चैतानीन्द्र-व्याकरणगतान्येवेति स्वाशयोऽप्याविष्कृतः। तानि सूत्राणि यथा—

[ उवर्ण ]स्त्वोत्त्वमापाद्यः।

एयि[यि] कद्रूास्तु लुप्यते।

कार्य्याववा[वा]वादेशावोकारौ-
कारयोरपि।

वृद्धिरादौ सनि।

न य्वोः पदाद्योर्वृद्धिरागमः।

तद्धिताध्यायः षष्ठः।

(१) स्त्रिया[ म् ]।

(२) [अजाद् ] यदन्तादाप्।

(३) ऋन्नेभ्यस्त्वी।

(४) वनौ(नो)र च।

(५) न संख्यायाः।

(६) मन[ः]।

(७) [अ]नश्च बहुव्रीहेः।

(८) तयोस्तु डाप्।

(९) उ[द्दद् ऌद]नुबन्धात्त्वी।

(१०) पादौ[दो]वा।

(११) असुप[स]र्जनात्।

(१२) नारी।

(१३) यूनस्तिः।

(१४) [इ]कात्।

(१५) ण्यत्।

(१६) प्राचामाय(न)स्त्वागमः।

(१७) [कौरव्यासु]रिमाण्डूकात्।

(१८) लोहितादिकतन्ततः।

(१९) आपद्य (आवद्या च )

(२०) वतण्डो च।

(२१) वयसि प्रथमे।

(२२) [द्वि]गोः।

(२३) [षानुबन्धाद्ग् ]औरादेः।

(२४) बहुव्रीह्यधसौ(सो) न च।

(२५) वासंयोगौ(गो)पधा
[ङ्गान्तात्]।

(२६) अनस्वाल्लोपे।

(२७) काण्डतः।

(२८) नासिकोदर[कर्णजङ् ]
घ्र(घा)दन्तौष्ठश्रृङ्गतः।

(२८) सविद्यमानमञ्पूर्व्वाच-(च्च)।
(३०) कोडादि[व]हुस्वरात्।
(३१) अन्तर्वतो नु गर्भिण्याम्।
(३२) पति[वतश्च] भर्त्तरि।
(३३) पत्युर्नश्च।
(३४) समानादे[:]।
(३५) वान्यपूर्वोपसर्जनात्।
(३६) कामुकान्मैथुनेच्छायाम्।
(३७) नागात् स्थौल्ये।
(३८) अकृते स्थालत्(स्थलात्)।
(३९) गोणादय(य)पने।
(४०) पिण्डादन्ने।
(४१) अमत्रे तु कुण्डत[:]।
(४२) घटाच्छिल्पी (ल्पे)।
(४३) क्षते कुम्भा(म्भा)त्।
(४४) असितादेश्च वर्णात[:]।
(४५) तोपधा[त्]तु नकारश्च वा।
(४६) ओ(उ)दन्ताद् गुण-
वाचिन[:]।
(४७) बह्वादिभ्याम् (भ्यः)।
(४८) भुवी(वो) नित्यम्।
(४९) सख्यशिश्वी(श्वो)श्च।
(५०) पुंयोगाच्च न चेदाख्या।
(५१) क्रि(क्री)तात् करणपूर्वात्।
(५२) पूतक्रतुमनोरे(रै) च।
(५३) कुसिताग्निवृष[ा]
कपि(पेः)।
(५४) ड्कित: पुत्रो वा ब्रह्मसूत-
भोजाश्वराजत[:]।
(५५) जाति(ते)रयोपधाद-
स्त्रि(स्त्रे)।
(५६) पाकाद्यन्त[ा]त्थैव च।
(५७) ङ्ग् त[:]।
(५८) मनुष[्र]जाति(ते)रे[:]।
(५९) ऊडूत[:]।
(६०) पङ्कद्रुत[:]।
(६१) शफलक्षणवामादेरु(रू)रो।
(६२) औपम्यसंहितात्।
(६३) बह्वन्ताश्च व संज्ञायाम्।
(६४) वलोप[:] श्वशुरस्य च।

स्त्रीप्रत्ययाध्यायश्च सप्तमः। चतुष्टयं समाप्तम्।

अध्यायोऽयं शार्ववर्मिके नोपलभ्यते। अन्त्यानि च सूत्राणि श्लोकाकारेणोपनिबद्धानीति दर्शनमात्रेणैव स्फुटोभवति। ते च श्लोकाः—

स्त्रियामजाद्यदन्तादाप् ऋन्नेभ्यस्त्री वनो र च ।
न संख्याया मनोऽनश्च बहुव्रीहेस्तयोस्तु डाप् ॥
उद्दृल्दनुबन्धात्स्त्री पादो वानुपसर्जनात् ।
नारी यूनस्तिरिकास्यत् प्राचामायनस्त्वागमः ॥
कौरव्यासुरिमाण्डूकाल्लोहितादिकतन्ततः ।
आवट्या च वतण्डी च वयसि प्रथमे द्विगोः ॥
षानुबन्धाच्च गौरादेर्बहुव्रीह्यूधसो न च ।
वासंयोगोपधाङ्गान्तादनस्याल्लोपे काण्डतः ॥
नासिकोदरकर्णाच्च जङ्घादन्तौष्ठशृङ्गतः ।
सविद्यमाननञ् पूर्वान्न क्रोडादिबहुस्वरात् ॥
अन्तर्वती तु गर्भिण्यां पतिवतश्च भर्तरि ।
पत्युर्नश्च समानादेर्वान्यपूर्वोपसर्जनात् ॥
कामुकान्मैथुनेच्छायां नागात् स्थौल्येऽकृते स्थलात् ।
गोणादावपने पिण्डादन्नेऽमत्रे तु कुण्डतः ॥
घटाच्छिल्पे कृते कुम्भादसितादेश्च वर्णतः ।
तोपधात्तु नकारश्च वोदान्ताद्गुणवाचिनः ॥
बह्वादिभ्यो भुवो नित्यं सख्यशिश्वोश्च··· ।
पुंयोगात्तेन चेदाख्या क्रीतात् करणपूर्वात् [ पूर्वकात् ] ॥
पूतक्रतुमनोरै च कुसिताग्निवृषाकपेः ।
दुहितुः पुत्री वा ब्रह्मसूतभोजोग्रराजतः ॥
जातेरयोपधादस्त्रेः पाकाद्यन्तात्तथैव च ।
इण्तो मनुष्यजातेरूङूतः पङ्ग् कद्रुतः ॥
सफलक्ष्मणवामादेरूरोरौपम्यसंहितात् ।
बह्वान्ताच्चैव संज्ञायां वलोपः श्वशुरस्य च ॥

(१) अथ परस्मैपदानि ॥३।१।१ ॥

(२) नव पराण्यात्मने

(३) त्रीणि त्रीणि प्रथममध्यमोत्तमा:

(४) युगपद्वच[न्]ए पर[:]पुरुषाण[ा]म्

(५) नाम्न्ये(म्नि) प्रयुज्यमानेऽपि [प्र]थम:

(६) युष्मदि मध्यम[:]

(७) अस्मदुत्तम:

(८) अदामाषो

(९) [क्रि]य[ा]भावो धातु[:]

(१०) काले

(११) सम्प्रति वर्त्तमाना

(१२) स्मेनातीते

(१३) परोक्ष[ा]

(१४) भूतकरणवत्यश्च

(१५) भवि[ष्यति] भविष्यन्त्याशी[:] श्व(श्व)स्तन्य:

(१६) तासां स्वसंज्ञाभि: कालविशेष[:]

(१७) प्रयोगतश्च

(१८) पञ्चम्यनुमतौ(तौ)

(१९) समर्थनाशि[ष]ो श्च

(२०) विध्यादिषु सप्तमी च

(२१) क्रि[या]समभिहारे सर्वकालेषु मध्यमैकवचनं पञ्चम्या[:]

(२२) [मा]योगेऽद्यतनी

(२३) मास्मयोगे ह्यस्तनी च

(२४) व[र्त्त]माना ति तस् अन्ति सि थस् थ मि वस् मस् ; ते आते अन्ते से आथे ध्वे ए वहे महे ।

(२५) सप्तमी यात् याताम् युस् यास् यातम् यात याम् या[व] याम [ ईत ] ईयाताम् ईरन् ईथास् ईयाथाम् ईध्वम् ईय ईहे(वहि) ईमहि ।

(२६) पञ्चमी तु त[ा]म् अन्तु हि तम् त आनि आव आम ताम् आताम् अन्त[ा]म् स्व आथाम् ध्वम् [ऐ] आवहै आमहै ।

(२७) ह्यस्तनी दी(दि) ताम् अन् सि तम् त अम् व म त आ[ताम्] अन्त थास् आथाम् ध्वम् इ व[हि] महि ।

(२८) एवमेवाद्यतनी ।

(२९) परोक्षा अट् अतुस् उ[स्] [थ]ल् अथुस् अ अट् व म ए आते इरे से आथे ध्वे ए वहे महे ।

(३०) श्वस्तनी ता [तारौ] [त]ारस् तासि तास्थत्(स्) तास्थ तास्मि तास्वस् तास्मस् ता तारौ तारस् तासे त[ा]साथे ता[ध्वे] ताहे तास्वहे तास्महे ।

(३१) आशी[ः] या[त्] यास्ताम् यासुस् यास् यास्तम् यास्त यासा(सम्) यास्व यास्म सीष्ट सीयास्त[ा]म् सीरन् सीष्टम(ष्ठास्) सीयास्त(स्था)म् सीध्वम् सीय सीवहे(हि) सीमहे(हि) ।

(३२) स्यसंज्ञितानी(नि) त्यादि(दी)नि भविष्यन्ति(न्ती) स्यति स्यतस् स्यन्ति स्यसि स्यथस् स्यथ स्यामि स्यावस् स्याम[स्] स्यते स्येते स्यन्ते स्यसे स्यथे स्यध्वे स्ये स्यावहे स्यामहे ।

(३३) द्यादीनि क्रियात्ति(त)पत्तिः स्यत(त्) स्यताम् स्यन् स्यसि(स्) स्यतम् स्यत स्यम् स्याव स्याम [स्यत] [स्येताम्] [स्य]न्त-स्यथास् स्येथाम् स्यध्वम् स्ये स्यावहि स्यामहि

(३४) षड् आद्याः स[ा]र्व[धा]तुकम् ] ।

[ आख्यात ]प्[र्]अकरणे प्रथमः पाद[ः] ।

प्रत्ययः पर[ः] ३।२।१ ॥

गुप्तिज् किद्भ्यः सन् ॥२॥

मानुव[धदानृशान्]भ्यो दीर्घश्चाभ्यासस्य ॥३॥
धातुर्वा कर्मणस्तु[मन्ता]दिच्छतिनेकैककर्त्तृकात् ॥४॥ *
नाम्न[आत्म]च्छायां यिन्] ॥५॥
[ काम्य च ॥६॥ ]
उपमानादाचारे ॥७॥
कर्त्तुरायिस् सलोपश्च ॥८॥
इन् कारितं च धात्वर्थे ॥९॥
* * *
[इनि लिङ्गस्यानेकाक्षरस्यान्तास्वरादेर्नो[र् ]ल्[ो]प]म् ॥१२॥
रशब्द ऋतो लघो(घो)र्व्यञ्जन[ादेः] ॥१३॥
[ य शब्द]श्चेक्रीयित[ं] क्रियासमभि(भ)हारे ॥१४॥
गुपु(पू)[धू]पविच्छिपणिपनेराय[:] ॥१५॥
ते धातव[:] ॥१६॥
[दययासश्च]
[चकासकासप्रत्ययान्तेभ्य] आम् परोक्षायाम् ॥१७॥
नाम्यादे[र् ]गुरुमतोऽनृच्छः ॥१८॥
आसिदय्य[ा]यिदरिद्र[ाभश्च[च] ॥१९॥
[उषविदजागृ]भ्यो वा ॥२०॥
भि(भी)ह्रीभृहुवां सार्व्वधातुकवच्च ॥२१॥ †
आमश्चऋञनुप्रयुज्यते (आमः कृञनुप्रयुज्यते) ॥२२॥
अस् भूदो (भुवौ) च प[र]स्मै ॥२३॥
[ सिजद्यतन्याम् ॥२४॥]
सन् अनिदः(टः) शिडन्तान्नाम्युपधादद्दृशः[:] ॥२५॥
श्रिद्रु[ु]स्रु-कमिकारितान्तेभ्यश्चन्(ण्) कर्त्तरि ॥२६॥

---

* कातन्त्रे 'कर्मणः' इति नास्ति।

† कातन्त्रे 'सार्वधातुकवच्च' इत्येतस्य स्थाने 'तिवच्च' इति पाठः

# सुपद्मव्याकरणे संज्ञाप्रकरणम्

प्रणम्य परमं देवं देवीं वाचमृषीन् गुरून् ।
पद्मनाभः स्फुटं पूर्णं भाषायामाह लक्षणम् ॥

अथ विष्णुमिश्रकृता मकरन्दटीका

गौरीचरणसरोजं स्फुरदनुरागं भजामि भक्तेषु ।
आसाद्यास्मिन् मानसमखिलाभीष्टं जनोऽभ्येति ॥
यच्चिन्ताभ्यसनाज्जन्तोः क्षीयन्ते तमसाञ्चयाः ।
*उदेति च परं ज्योतिर्ज्योतीरूपं †नतोऽस्मि तम् ॥
अपारभवकान्तारविघ्नवारणकारणम् ।
हेरम्बस्य पदाम्भोजं भजाम्यभीष्टसिद्धये ॥
यस्याः प्रसादमासाद्य वाचस्पतिवचस्विता ।
अशेषजननीमाद्यां भारतीमानतोऽस्मि ताम् ॥
दुरूहं पद्मनाभस्य वचनं विवृणोमि यत् ।
क्षन्तुमर्हन्ति तत् सन्तो यूयमत्र परीक्षकाः ॥

अशेषाशेष-( विशेष )-पदेषु विभ्रान्तानन्तजन्तुसन्तानोपचिकीर्षया व्याकरणं चिकीर्षुः परमकारुणिको ग्रन्थकृत् शिष्टाचारानुमितवेद-प्रामाण्यात् प्रत्यूहव्यूहवारणम् अभीष्टदैवतप्रणतिलक्षणं मङ्गलं प्रणीय शिष्यान् शिक्षयिष्यन् तत्सम्बद्धपद्यं प्रथमं निबबन्ध—प्रणम्येति। अयमर्थः—दीव्यन्तीति देवाः प्रतिनियतविश्वव्यापाराः प्राप्तमाहात्म्याः पुरन्दरादयः, यः पुनरनियतविश्वव्यापारी नित्योदितमाहात्म्यस्तानपि निर्माय स्वकर्मानुविधानेन प्रतिनियतेषु विश्वव्यापारेषु नियुङ्क्ते स एवायं देवो भगवान् परमपदविशेष्यः, तं प्रणम्य प्रकर्षेण नत्वा, प्रकर्षश्च

* उदेति परमं ज्योतिः पर इति पाठान्तरम् ।

† नमामि तम् इति पाठान्तरम् ।

भक्तेरतिशयः। तेन हि धर्मोपचितिः, प्रत्यूहबीजहानिश्च। वाचं सरस्वतीम्। कीदृशीम्? देवीम् स्फुरद्रूपां विजिगीषमाणां वा। ऋषींश्च पाणिन्यादीन् प्रकृतिप्रत्ययविभागेन साधुशब्दप्रयोक्तॄन्। गुरूंश्च सम्प्रदायप्रवर्त्तकान् सदुपदेष्टॄन् जनकादीन् वा। प्रकृतिप्रत्ययविभागेन लौकिकशब्दव्युत्पादनं भाषा। भाषायां लक्षणमाह ब्रवीति। ज्ञातुमिष्टं लक्ष्यते येन तल्लक्षणं सूत्रम्। ब्रूधातोर्वर्त्तमानसामीप्ये वर्त्तमानवद्वा इति भविष्यति लट्। तदेव विशिनष्टि—स्फुटम् अकुटिलार्थम्। पूर्णम् एककर्त्तृकत्वेन संज्ञादितद्धितान्तपदप्रति( व्युत् )-पादनक्षमम्। एतेन सच्छब्दलक्षणयोर्नियम्यनियामकलक्षणः सम्बन्धः। फलं तु शब्दव्युत्पत्तिरेव। वक्ष्यमाणविवरणलक्षणार्थनिर्णयः फलम्। तदपि शब्दव्युत्पादन एव पर्य्यवस्यति। पश्चार्द्धेन प्रस्तुतस्याङ्गत्वात् सम्बन्धं प्रयोजनार्थञ्च निबद्धवान्। तदुक्तं वार्त्तिककृता—

सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः॥

इति। अत्र सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति इति न्यायादेकेन प्रणम्यपदेनान्वयानुपपत्तेरावृत्त्यान्वयः। किञ्च चिकीर्षितस्य वस्तुनः प्रचुरप्रतिबन्धकसम्भावनया प्रचुरनमस्कारस्तन्निरासार्थः कृतः। दृष्टश्च वैशेषिकभाष्ये "प्रणम्य हेतुमीश्वरम्" इत्यादिपद्ये।

अथ शब्दव्युत्पादनफलकमिदं शास्त्रम्। शब्दास्तु साधव एव व्युत्पाद्याः। के पुनः साधवः? अर्थप्रतिपादकाश्चेत्, अपशब्दा अपि तथा। नन्वपशब्देभ्यः साधुशब्दप्रतीतिस्ततोऽर्थावगतिरिति चेत्, तेभ्योऽपशब्दप्रतीतिस्ततोऽर्थावगतिः कथं न स्यात्? अथ साधूनामर्थेषु सङ्केतवशादर्थावबोधनम्, तदविदुषां स्त्रीशूद्राणां कथमर्थप्रतीतिः? तस्माद् धर्महेतुत्वं साधुत्वम्। ननु किं तेषां शब्दानां ज्ञानाद्धर्म उत प्रयोगात्। नन्त्यावदाद्यः, साधुशब्दविदामपशब्दवेदित्वादधर्मोपपत्तेः। न च द्वितीयः, साधुशब्दप्रयोक्तृभिस्तेऽपि प्रयुज्यन्ते न हि सर्वे प्रयोक्तारः

( प्रवक्तारः ) साधुशब्दानेव प्रयुञ्जते नापशब्दानिति । अथ 'विचक्षणवतीं वाचं वदेत्' (ऐ. ब्रा १।१।६) इति श्रुतेः 'अन्तर्वेद्यां न म्लेच्छितव्यं नापभाषितव्यम्' इति श्रुतेश्च विधिनिषेधाभ्यां नियतधर्महेतुत्वं साधुत्वमिति ब्रूमः ।

अथ किं व्याकरणपूर्व्वकः शब्द आहोस्वित् शब्दपूर्व्वकं व्याकरणम् । न तावदाद्यः शब्दैर्व्याकरणसिद्धिः तेन शब्दा व्युत्पाद्यन्त इत्यन्योन्याश्रयात् । नापि द्वितीयः, सिद्धानां निष्पादनाय व्याकरणानुसरणमनुपादेयं स्यात् पिष्टपेषणवैफल्यात् । नैवम्, अनित्यानां तेषाम् अनादित्वात् बीजाङ्कुरवन्नान्योऽन्याश्रयः प्रसक्तः । अथ बीजादेरीश्वरादिः कर्त्तेति चेत्, अत्रापि को नामान्यमाह ? द्वितीये तु नित्यानामपि तेषां युगमन्वन्तरादिषु सङ्केतोच्छेदेऽर्थे नियोगानुपपत्तेः । अत एव माहेश्वरादिव्याकरणं ततः प्रभृति गाव्यादीनामपशब्दानां प्रवाहनित्यतैव । (?) तदुक्तं—

> नित्यत्वे कृतकत्वे वा येषामादिर्न विद्यते ।
> प्राणिनामिव सा येषा व्यवस्था नित्यतोच्यते ॥ [वाक्यपदीये]

अथ कथमवैयाकरणाः शब्दान् प्रयुञ्जत इति चेत् । अस्ति व्याकरणमिति कुतश्चिदर्थानुपलब्ध्येति । यदस्ति ज्योतिषमिति अतद्विदोऽपि कुतश्चिद्विदित्वा पुण्याहे कर्म कुर्वते, अस्ति धर्मशास्त्रमित्यन्येभ्योऽपि विदित्वा शूद्रादयो धर्मं कुर्वते, मूलनाशे कुतः पारम्पर्यमिति शिवम् ।

अथ कः पुनः शब्दः ? प्रतिनियतो वर्णव्यूहः । स च श्रुतोऽर्थं गमयति । तथाहि अर्थप्रतिपत्तिहेतुः शब्दः स चेत् पदं न तस्मादर्थप्रतिपत्तिः, यतोऽनियता हि वर्णाः पदं, ते किं क्रमेणार्थं प्रत्याययन्ति युगपद्‌ वा ? न तावदाद्यः, आद्यवर्णोपलम्भादर्थप्रतिपत्तावितरवर्णवैयर्थ्यात्, न द्वितीयः भिन्नकालोपलम्भनाद् यौगपद्यप्रसक्तेः अथवा पूर्ववर्णज्ञानस्योत्तरवर्णज्ञानकालानुवृत्तिश्चेन्नित्यत्वप्रसङ्गः । भवति

चार्थप्रतीतिः, तज्जन्यं त्वानुपागत्या स्फोटः कल्प्यते। स तु स्फुटति प्रकाशतेऽर्थोऽस्मादिति स्फोटः पदार्थान्तरम् नित्यनिरवयवमेकत्वात् सकलाभिधानाभिधेयमयं शब्दब्रह्मेति यं प्रत्युच्यते, भेदाभिमानस्तु व्यञ्जकभेदात्। व्यञ्जका हि वर्णाः प्रतिस्वं विलक्षणास्तं भिन्नमिव भासयन्ति, कृपाणादय इव मुखम्। इत्थं क्रमयौगपद्यविकल्प-सामर्थ्यात् ततो नार्थप्रतीतिः। उक्तञ्च—

एकैकवर्णसामर्थ्यान्मेलकानुपपत्तितः।
एकस्मृतिर्नदीदीनमास्यात् स्फोटः स च द्विधा॥

अपि च पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितान्त्यवर्णानुभवद्वारेण स्यात्। यदुक्तम्

नादैराहितबीजायामन्त्येन ध्वनिना सह।
आवृत्तिपरिपाकायां बुद्धौ स्फोटोऽवधार्यते॥ इति।

[ वाक्यपदीये १।८५ ]

अथ किं वर्णलक्षणः शब्दो नित्योऽनित्यो वेति। नित्य इति ब्रूमः, स्वार्थप्रत्यायकत्वात्। न चानित्यत्वे शब्दात् प्रतीतिर्भवति। तथाहि शब्दो हि सङ्केतवशादर्थज्ञानं जनयति। स चेद्विनष्टः कुतः कालान्तरे ततोऽर्थप्रतीतिः, विनष्टस्यानुपलम्भात्। अथ स एवायमिति प्रत्यभिज्ञाबलात् प्रतीतिर्भवति। न खलु प्रथमोपलब्धस्यार्थस्य गमकत्वमिति मीमांसकाः। नैयायिकास्तु द्वितीयलक्षमेवापेक्षन्ते। तथाहि सदकारणवन्नित्यमिति लक्षणासम्बन्धात्, आकाशादिवैधर्म्यात्। शब्दस्तु कारणाधीनजन्मा कथं नित्यः ? प्रयत्नोदीरितो वायुः कण्ठादिभिरभिहतो यथास्थानं वर्णान्निष्पादयति। तत्र वायुर्निमित्तकारणम्, कण्ठसंयोगोऽसमवायिकारणम्, आकाशः समवायिकारणमित्येवं कारण एवाधीनो घटादिवदनित्यः स्यात्। व्याकरणे तु प्रवाहनित्यत्वेन वर्णानां निक्तव्यूढो गौरश्व इत्यादौ प्रसिद्धो सम्लवः। व्यवहारे व्यक्तिप्रभृतीनामुक्तिप्रतिपत्त्योरविशेषात्। न हि कश्चित् शब्दं प्रयुञ्जान-

स्तदर्थमवबुध्यमानो नित्येषु नित्यो वेत्यपेक्ष्यात, किन्तु प्रकृतिप्रत्यया-गमोपसर्गस्वरूपाणां यन्मात्राणां याद्दशां येषां वृद्धव्यवहारेण शृङ्ग-ग्राहिकया वा सामर्थ्यमवगतवान् तत्रार्थे तावतस्ताद्दशांस्तान् प्रयुङ्क्ते। परप्रयुक्तेभ्यस्तावद्भ्यस्तमर्थं प्रत्येति। तदुक्तम्—

यावन्तो याद्दशा ये च यदर्थप्रतिपादने।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः॥

[ श्लोकवार्त्तिके ५।६२ ]

इति। व्यवहारश्चायमनादिकालप्रसिद्धः। न हि स कालो भूतो भावी वा यत्रामी व्यवहर्त्तारो गोशब्दादिषु गोत्वादिव्यवहारविकला-स्तस्मात् परम्परया सिद्धिः।

**अथ विवरणञ्च तस्य शब्दानुशासनेन सह पाणिनीयादिशब्दस्मृतीरुपलक्ष्य सौकर्य्योपाधये प्रति संस्कृतस्य शब्दलक्षणस्य।**

अथ विवरणं कर्त्तुं प्रतिजानीते—अथ विवरणञ्चेति। अथशब्दो-ऽत्रानन्तर्य्ये मङ्गले प्रारम्भे च। शब्दलक्षणानन्तरं विवरणमप्याह सूत्रकारः। विव्रियते व्यक्तीक्रियते सूत्रार्थोऽनेन अस्मिन् वा विवरणं वृत्तिग्रन्थः। तस्य स्वकृतत्वेनानुभूयमानस्य शब्दाः प्रोक्तलक्षणा अनु-शिष्यन्ते व्युत्पाद्यन्ते लिङ्गनामभेदेनानेनात्र वा शब्दानुशासनम् व्याडिभागुरिवररुचिप्रणीतो ग्रन्थः। तेन सह पाणिनिप्रभृतिमुनि-प्रणीतव्याकरणान्युपलक्ष्य निःशेषविशेषमवलोक्य। एतेन स्वकृतेः प्रामाण्यं स्वविनयोद्भावनञ्च ध्वनितम्। तद् विलोक्यापि चेदन्यद् विधीयते तेन ततो न सम्यगर्थप्रतिपत्तिः प्रकरणसौष्ठवाभावात् कदाचिदत्यन्ताभि-निविष्टमतीनां वा भवति। अत एवाह—सौकर्य्योपाधये इति। सुखेन क्रियते ज्ञायते धातूनामनेकार्थत्वात् सुकरः। दुःखतीति खल्। सुबोधः। अस्य भावः सौकर्यम्। स चासावुपाधिर्हेतुश्चेति। तस्मै

सुकुमारमतीनामपि सुखज्ञानहेतवे। तस्येति विभिनष्टि। प्रति-संस्कृतस्य इति। प्रकरणसौष्ठवार्थमानुपूर्व्या स्थापितस्य भणितस्य वा।

## तत्रादौ वर्णोपदेशः शास्त्रप्रयोगाय।

## अ इ उ ण्, ऋ ऌ क्, ए ओ ङ्, ऐ औ च्।

अथ लक्षणमालिख्यैव विवरणं क्रियत इति तद्विदामाम्नायमनु-रुन्धान आह—तत्रेति। तत्र विवरणे वक्तव्ये आदौ सूत्रस्यैव वर्णानाम् अकारादीनाम् उपदेशः क्रमविशेषेण कथनम्। किमर्थं तदित्याह—शास्त्रप्रयोगायेति। शिष्यन्ते व्युत्पाद्यन्ते शब्दाः सामान्य-विशेषवता लक्षणेनानेनेति शास्त्रं व्याकरणम्। प्रयुज्यते विधीय-तेऽनेनेति प्रयोगः सूत्रम्। तत् पुनरिह संज्ञाविधायकमिष्टम् तदेव लघुभिरक्षरैरन्यानि सूत्राणि कर्त्तुं (वक्तुं) शक्यानि। अथ पाणि-न्युपदिष्टसूत्राणां माहेश्वरीं चतुःसूत्रीम् अ इ उ ण् इत्यादि उपदिशति।

एतेषु विसानू स्पष्टार्थः। अन्यथा विरञ्चितवर्णा नोपदिष्टा सिद्धि-रिति। यद्वा एषां निपातसंज्ञात्वात् "एकस्याचः" [१।१।२२] इत्यनेन सन्धिनिषेधः। अतएव विभक्तेरश्रवणमपि लक्षणादीनामुद्देशपूर्व्वकत्वात् तदाह भाष्यकारः—त्रिधा शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षा च। तत्र नाममात्रेण सङ्कीर्तनमुद्देशः ज्ञातुमिष्टं व्यावृत्त्या स्वरूपं लक्ष्यते येन तल्लक्षणम्। संशये स्वरूपं परीक्ष्यते यया सा परीक्षा यथा पाणिनेः कारके इति सूत्रम्।

## चादिरिवान्त्येन समध्यः। आदिर्वर्णोऽन्त्येनेता णकारादिना इत्संज्ञकेन सह समध्यः प्रसङ्गो भवति।

अथोद्दिष्टानां वर्णानामन्येषाञ्च प्रत्याहारार्थं परिभाषामाह—आदिरिति। ननु वाक्यादेवार्थप्रतिपत्तिर्लोके वेदे च। वाक्यन्तु योग्यताकाङ्क्षासत्तिमत् पदकदम्बकम्। अत्र सूत्रे वाक्यत्वाभावात् कथं तदर्थप्रतीतिरित्याह—आदिवर्ण इत्यादि। तेन यावन्ति सूत्राणि साध्याहारपदसन्त्येव सन्ति अर्थान् प्रत्याययन्ति इति वृत्ति-कृतोऽभिप्रायः।

उपोद्घातः पदञ्चैव पदार्थः पदविग्रहः ।
चालना प्रत्यवस्था च व्याख्या तन्त्रस्य षड्विधा ॥

तत्र व्याख्या नाम सूत्रपाठः । उपोद्घातो विभक्त्या पदविच्छेदः । पदस्य प्रकृतिविभक्त्यर्थकथनं पदार्थः । समासपदस्य वाक्यकथनं पदविग्रहः । प्रकृतिप्रत्ययार्थवृत्तिभ्यां लब्धस्याक्षेपश्चालना । चालितस्य प्रयोजनोपन्यासः प्रत्यवस्था । इत्थं व्याख्येयानि सूत्राणि । अपि च सूचयति सूते वार्थान् सूत्रम् । तत्तु पुनः षड्विधम् । संज्ञादिभेदात् । तदुक्तम्—

अधिकारो विधिः संज्ञातिदेशो नियमस्तथा ।
परिभाषा च शास्त्रज्ञा लक्षणं षड्विधं विदुः ॥

इति । अन्ये तु विधावेव सर्वेषामन्तर्भावमिच्छन्ति, अधिकारेऽपि विधानस्य सम्भवात् । तदुक्तम्—

कार्यिकार्य्यनिमित्तानां पदानां यदुदीरणम् ।
वक्ष्यमाणार्थसंक्षेपादधिकारः स उच्यते ॥

यथा पदान्ते इति ।

विधानं विधिः । क्वचिद्वर्णोत्पादनरूपः क्वचिदभावरूपश्च । आदेशागमौ च विधिभेदौ । निषेधो लोपश्चाभावरूपः । व्यवहारार्थं शास्त्रे कृतः सङ्केतः संज्ञा । अन्यधर्मस्यान्यत्रारोपणमतिदेशः । सामान्यप्रसङ्गेऽवधारणानुशासनं नियमः । परितः संस्कृता भाषा परिभाषा । सा पुनः पदार्थविवेचककार्य्याणां युक्तिवाक् । अनियमे नियमकारिणीत्यन्ये । सा पुनर्द्विधा लिङ्गवती विध्यङ्गशेषभूता च । या पुनरेकत्र गृहीतसङ्केता सकलशास्त्रमभिज्वलयति सा लिङ्गवती, अन्या तु प्रत्येकं विधिसूत्रेषूपतिष्ठते । तद्रूपि लिङ्गमस्ति । केवलं प्रयोगोपस्थानमात्रभेदमुररीकृत्य विध्यङ्गशेषभूतेत्युच्यते । तत्रोभयमेव घटते । सर्व्वमन्यत् परतो विशेष्यामः ।

---

# दारक्रियायाम् उदारक्रिया

[ निबन्धकः—के, ए, रामलिङ्गशास्त्री ]

केयं दारक्रिया नाम ? विवाहः, परिणयः पाणिग्रहणम्, पाणिपीडनम्, उद्वाहः, उपयमः, एते कन्याऽऽदानस्य पर्यायाः। श्रीमति रामायणे भगवान् आदिकविर्यद् यद् वर्णनं वा पदं वा वाक्यं वा वाचोयुक्त्या लोकोत्तरया अनितरकविसाधारण्या लावण्यनिष्यन्दिन्या मृद्वीकामधुरया आयोजयति स्म, तदेतत् कालिदासमहाकविपुङ्गवोऽपि यथास्वं स्वकार्व्येषु सङ्घटयति स्मेति नेदम् अतिशयोक्तिरूपम्। 'क्रिये'तिपदम् आदिकविर्बह्वर्थविशेषेषु सरससरसं यथा किल आदिकाव्ये अगादीत्, नन्वेवमेव कविसार्वभौमोऽपि तादृशमेव क्रिया-पदं स्वीयकाव्येषु विविधेषु सन्दर्भेषु सितामधुरया शैल्या समुद्धातमम् अगादीदिति सोदाहरणं निरूप्यते—

( रघु-तृतीयसर्गे २६ ॥ )

'क्रिया हि वस्तूपहिता प्रसीदति।' अत्र क्रिया उपदेशः। 'शिष्टा क्रिया कस्यचिदात्मसंस्था'; अत्रापि तथैव। 'विवाहे दर्शयिष्यन्तं क्रिया-सङ्क्रान्तिमात्मनः।' 'क्रियानिमित्तेष्वपि वत्सलत्वादभग्नकामा मुनिभिः कुशेषु॥' वैदिकक्रिया। 'क्रिया-प्रबन्धादयमध्वराणाम्, अजस्रमाहूत-सहस्रनेत्रः॥'

अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रिया-विघाताय ( यागविहननाय ) कथं प्रवर्तसे ?॥' रघुः ३ स० ६५ ॥

'तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम्'।

अतिथि-सत्कारः॥ ( रघु १ स० ५ )

'प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥'

( २स० ७६ )

'तां देवतापित्रतिथिक्रियार्थामन्वग्ययौ ( इज्या-श्राद्ध-गृहागतसत्काराः) मध्यमलोकपालः ॥' (२ सर्ग २६ )

'न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः' ॥

पूर्वोक्त एव । ( २५० )

'यथाक्रमं पुंसवनादिकाः क्रिया धृतेश्च धीरः सदृशीर्व्यधत्त सः ॥' स्मार्त्तक्रियाः ।

'स बभूव दुरासदः परैर्गुरुणाऽथर्वविदा कृतक्रियः'

( शान्तिकपौष्टिकक्रिया ) ॥ ( २० ॥ ३ स० )

'मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमौ ।
अविधाय विवाहसत्क्रियाम् अनयोर्गम्यत इत्यसांप्रतम् ॥'

६२ ॥ ( ८ सर्ग )

'रसातलादादिभवेन पुंसा भुवः प्रयुक्तोद्वहनक्रियायाः ।'

( गोत्रोद्धरणक्रिया )

'अस्याच्छमंभः प्रलयप्रवृद्धं मुहूर्तवक्त्राभरणं बभूव ॥'

( ॥ २३, स० १४ )

'तेनाऽर्थवान् लोभपराङ्मुखेण तेन घ्नता विघ्नभयं क्रियावान् ।
तेनास लोकः पितृमान् विनेत्रा तेनैव शोकापनुदेन पुत्री ॥'

२३ ॥ १४ सर्ग,

'बलिक्रिया-वर्जितसैकतानि स्नानीयसंसर्गमनाप्नुवन्ति ।

( बलिहरणम् सर्वभूतेभ्यः )

'उपान्तवानीरगृहाणि दृष्ट्वा शून्यानि दूये सरयू-जलानि ॥'

२१ ॥ १६ सर्ग

'प्रवृद्धतापो दिवसोऽतिमात्रम् अत्यर्थमेवक्षणदा च तन्वी ।
उभौ विरोधक्रियया विभिन्नौ ( विद्वेषः )
जाया-पती सानुशयाविवाऽऽस्ताम् ॥ ४५ ॥' (१६ सर्ग)

'इत्यपास्तमखविघ्नयोस्तयोः सांयुगीनमभिनन्द्य विक्रमम् ।
ऋत्विजः कुलपतेर्यथाक्रमं वाग्यतस्य निरवर्तयन् क्रियाः ॥'
३० ॥ ११ तमसर्ग

'यूपवत्यवसिते क्रिया-विधौ कालवित् कुशिकवंशवर्द्धनः ।
राममिष्वसनदर्शनोत्सुकम् मैथिलाय कथयाम्बभूव सः ॥'
३७ ॥ ११ सर्ग

'भास्करश्च दिशमध्युवास यां तां श्रिताः प्रतिभयं ववाशिरे ।
क्षत्रशोणित-पितृक्रियोचितम् ( निवापाञ्जलिः )
चोदयन्त्य इव भार्गवं शिवाः ॥ ६१ ॥' २१ तमसर्ग

'तयोस्तस्मिन्नवीभूतपितृव्यापत्तिशोकयोः ।
पितरीवाऽग्निसंस्कारात् परा वव्रतिरे क्रियाः ॥ ५६ ॥'
॥ २२ तमसर्ग ॥

'प्रणयिषु वा दाक्षिण्याद् अथवा सद्वस्तु-पुरुष-बहुमानात् ।
शृणुत जना अवधानात् क्रियामिमां कालिदासस्य ॥'
(इति विक्रमोर्वशीये) विक्रमोर्वशीय-रूपकमेव अत्रत्य-क्रिया-शब्दार्थः ।

'कालिदासस्य सिंहस्य काव्यारण्येऽतिगर्जतः ।
संशृण्वन् काव्य-सन्नापं को न याति परां मुदम् ? ॥ १ ॥'

यद्यपि कविकोकिलाम्रवासिकल्पोऽसौ पिककूजितमिव विधि-कर्म-कृत्य-कल्प-संविधापदमपि बहुलमुपयुयुजे ; तथापि, प्रज्ञतानुगुणत्वात् क्रिया-पदमेव उपात्तमित्यवधेयम् ।

'दारक्रिये'ति पदम् आदिकाव्ये उपनिबद्धं सन्दृश्यते । कविना न केनापि स्वीयकाव्यमध्ये पदमिदम् आयोजि । एवमेव 'महार्ह'— पदम् ;—'परार्घ्य'-पदम् ।

'आत्मीयवस्त्रक्रियया पत्नोर्णं क्वोपयुज्यते ? ॥' ( मालविका )

'त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः शकुन्तला मूर्तिमतीव सत्क्रिया ।
समानयंस्तुल्यगुणं वधू-वरं चिराय वाच्यं न गतः प्रजापतिः ॥'
( शाकुन्तले )

'न्यस्ताक्षरा धातु-रसेन यत्र भूर्ज-त्वचः कुञ्जरबिन्दुशोणाः ।
व्रजन्ति विद्याधरसुन्दरीणाम् अनङ्गलेखक्रिययोपयोगम् ॥'

( कुमारसंभव )

'तस्य कल्पित-पुरस्क्रियाविधिः शुश्रुवान् वचनमग्रजन्मनः ।
उच्चचाल बलभित्सखो वशी सैन्यरेणुमुषितार्कदीधितिः ॥'

११ स० ५२ ॥रघु ॥

"तौ समेत्य समये स्थितावुभौ भूपती वरुण-वासवोपमौ ।
कन्यकातनयकौतुकक्रियां स्वप्रभावसदृशीं वितेनतुः ॥"

११ स० ५३ ॥

'अशून्यतीरां मुनिसन्निवेशैस्तमोपहन्त्रीं तमसां वगाह्य ।
तत्सैकतोत्सङ्गबलिक्रियाभिः सम्पत्स्यते ते मनसः प्रसादः ॥'

रघु १४ सर्ग ॥७६॥

'विधेरधिकसम्भार-स्ततः प्रववृते मखः ।
आसन् यत्र क्रियाविघ्ना राक्षसा एव रक्षिणः ॥

६२॥ रघु ॥ १५ सर्ग ॥

वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥

दारक्रियाविषयकानुशासनव्यवस्थापनेन अतीतेऽब्दे भारतवर्षीयाः प्रजाः प्रभवश्च अकिञ्चनाश्च कन्यापितरः परां कोटिम् आश्लेरति हि आरोपिताः, अवरोपिताश्च समृद्धेरपरिमितयौतकप्रदानादिना नाम । अगणितधार्मिकमर्यादाश्च विद्यन्तेऽधुना नानाविधविषाद-वैमनस्यादिनाऽहर्निशम् इति वयमपि पश्यन्तो तपस्विनीम् एतदीयां शोच्यां दशां विषीदामस्तमां मानसेन परिखेदेनेति । अनुशास्तृवरेण्याः पुनः परिशील्य अनुशासनमिदम् अनुपदमेव विपरिवर्तयेयुः । अनूर्जस्वि च, आहोस्विद् विप्रव्यतिरिक्तविषयं वा विपरिणामयेयुरिति विश्वसन्तोऽत्रत एतेषां सर्वथा सार्वपथीनम् आनुकूल्यम् आशास्यते रात्रिन्दिवं विप्रप्रतिनिधिभावेनेति सर्वं भव्यम् ॥

---

# योगर्द्धिः *

[ निबन्धकः—श्रीचिन्ताहरणकाव्यतीर्थः एम्.ए ]

योगाङ्गानुष्ठानेनाधिगन्तुं शक्यानां सिद्धिविशेषाणां विशिष्योल्लेखः कृतः पातञ्जलादिषु विविधेषु योगशास्त्रीयग्रन्थेषु। परं शास्त्रीयवचनेषु श्रद्धातिरेकमनासादयतां न ताः प्रायेण विश्वासपदवीमधिरोहन्ति सिद्धयः, आपाततोऽसम्भाव्यत्वेन प्रतीयन्ते चेति सर्व्वथा सुविदितमेव सुधियाम्। यत् सत्यं योगाङ्गानामुल्लेखमकुर्व्वन्तोऽपि देशान्तरीया विविधाः शास्त्रीया ग्रन्था अत्यन्तमहापुरुषाणां धर्म्मोपदेशप्रचारैकव्रतानां योगलभ्यसिद्धिमत्त्वमुपवर्णयन्तो वर्त्तन्ते। परं न तेऽपि प्रत्ययं प्रवर्त्तयितुमीहन्ते प्रत्यक्षैकप्रीतिमतामाधुनिकानाम्। धार्म्मिकचरितमुपवर्णयन्तो हि पुरुषास्तत्तद्धार्म्मिकविषये भक्तिश्रद्धाद्यातिशय्येन पक्षपातित्वेनातिशयोक्तिप्रवणतया चालौकिकशक्तिमत्तां प्रकटयितुं प्राप्तप्रयत्ना भवन्तीति दृश्यते। अत एव चापक्षपातदूषिता जना यदि कस्यचिदलौकिकशक्तिमत्त्वं प्रत्यक्षीकुर्वन्ति तदा खलु न केवलं तादृशशक्तिमत्त्व एव दृढतरं प्रमाणं प्रतिष्ठितं स्यादपि तु शास्त्रीयवचनेष्वपि प्रत्ययः पदं कुर्य्यात्। न च साधारणजनप्रत्यक्षीकृता अप्यल्पीयांस एतादृशा वृत्तान्ता अन्तरान्तरा वृत्तपत्रादिषु प्रचारं न गच्छन्ति। परं न ते प्रायेण सुधियाम् आलोचनापदम् अधिकुर्वन्तीत्यहो कष्टम्। परमालोचितेष्वेतेषु पर एवोपकारः स्यादिति मन्यमानैरस्माभिर्द्वित्राणामेतादृशानां वृत्तानामाकलनमत्र क्रियते।

एतदप्यत्रावधार्य्यं यत् न हि नाम सिद्धेः परां कोटिमधिगता योगिवर्य्याः कदापि शक्तिविशेषान् प्रकटयन्ति। परम्परया सिद्धेरुप-

* परिषदो मासिकाधिवेशने पठितोऽयं निबन्धः।

कुर्वत्योऽप्येताः शक्तयः समाधिविघ्नीभूता एव वर्त्तन्ते। तथाचोक्तं योगसूत्रे पतञ्जलिना—"ते समाधावुपसर्गा व्युत्थाने सिद्धयः" (३।३८) इति। तत्र हर्षविस्मयादिकारणेन समाधिः शिथिलीभवति। व्युत्थाने तु व्यवहारदशायां विशिष्टफलदायकत्वात् सिद्धयो भवन्तीत्युक्तं तत्रैव योगसूत्रवृत्तौ धारेश्वरेण भोजेन। तान्त्रिकषट्कर्म्मानुष्ठानमप्यत एव हेतोर्निषिद्धम् *। एवं शक्तिप्रकटनानुरुद्धेनोक्तं खृष्टेन यथा न हि खलु भगवान् ईदृक्कर्म्मसाहाय्यविधाने प्रवर्त्तनीय इति †। 'ब्रह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभः' (२।३८) इत्यादीनि नाम पातञ्जलोक्तानि सर्वथा निर्व्विवादान्येव। 'अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्'—योगसूत्रीयैतद्वचनस्य (२।३७) याथार्थ्यं तु धर्म्मच्छद्मनैवार्थमाजिहीर्षूणां प्रचुरधनार्ज्जनदर्शनेनैव कथञ्चित् स्फुटीभवति।

'अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः' इति वचनस्य प्रामाण्यमपि बहुशः प्रकटीकृतं पशुपरिपालकैः। तथा च पाश्चात्त्यदेशीयस्य कस्यचित् पशुपोषकस्याङ्कषु भीतिहीना विहङ्गा वनादागत्योपविष्टाः, तत्सन्निधौ च त्यक्तहिंसा अभूवन्निति वृत्तान्तो वृत्तपत्रे कदाचित् प्राकाश्यमगमदिति स्मरामः।

'रूपलावण्यबलवज्रसंहननानि कायसम्पत्' (३।४७) इत्याद्युक्तवज्रवत्कठिनसंहतिविशिष्टशरीरलाभस्य द्वित्राण्युदाहरणान्युपलब्धानि। तथाच—राममूर्त्त्याख्यमल्लेन यादृशानि विचित्राणि शारीरशक्तिपरिचायकान्यनुष्ठीयन्ते कृत्यानि, तानि प्रायेण परिचितान्येव बहूनाम्। साम्प्रतमेव च कलिकातायाम् इउनिभार्सिटि इन्ष्टिटिउट्गृहे प्रेसिडेन्सिमहाविद्यालयगृहे च विशिष्टपुरुषाणां पुरतो विषादिपदार्थभक्षणेऽप्यलौकिकसामर्थ्यस्य यन्निदर्शनं प्रकटीकृतं योगिवर्य्येण श्रीमता नरसिंहशास्त्रिणा तत्तु दर्शकादितरेषामसम्भाव्यमिव प्रतीयात्। वर्णितं

---

* किन्तु मद्योगकर्त्तॄणां परलोको न विद्यते इति कृत्यापल्लवदीपिका।

† Thou shalt not tempt the Lord thy God. *St. Matthew.* IV. 7.

हि रसशास्त्रे माधवीये रसेश्वरदर्शनादिग्रन्थे पिण्डस्थैर्य्यार्थं रसप्रयोगस्योपयोगित्वम्।

उक्तञ्च वैद्यकशास्त्रे—

"योगा ह्यायुःप्रकर्षार्था जरारोगनिबर्हणाः।
मनःशरीरशुद्धानां सिद्ध्यन्ति प्रयतात्मनाम्॥" इति।

साम्प्रतम् Edward M. Walker महोदयेन Everybody's Weekly इत्याख्यपत्रे यद् विलिखितं यच्च Amrita Bazar Patrika इत्याख्यपत्रिकायां १८३२ अब्दीय-जान्वारीमासस्य त्रयोदशदिवसे समुद्धृतं तस्यैव नवीनस्य वस्तुनः सारोऽत्र समाकलय्यते।

१८२७ खृष्टीयाब्दे हरिदासाख्यः साधुर्लवपुरे पञ्चनदाधीश्वरस्य रणजित्सिंहस्य पुरतो भूम्यन्तरे प्रोथितश्चत्वारिंशद्दिनानि जीवन्नेव स्थित इति श्रूयते। न चानुष्ठितमिदं कृत्यं रहसि यतस्तत्र सपारिषदो महाराजो महाराजनिमन्त्रिताश्च कतिपये आङ्गलफरासीयभिषजः समुपस्थिता अवर्त्तन्त। गृहीतासनस्तूलतन्त्वादिना पिहितकर्णनासः साधुः क्षौमवस्त्रेण कृतावरणो जातः। ततश्चासौ महाराजमुद्राङ्कितविविधप्रदेशायां दृढदारुपेटिकायां स्थापितः।

ततश्चेष्टकाविनिर्म्मिते गृहान्तरभूते गह्वरे निवेशिता सा पेटिका। तत्र च गृहद्वारादिषु यथानियममङ्किता राजमुद्राः। बहिर्द्वारभूमिः समाच्छादिता मृत्तिकया। मयत्नमभिरक्षितञ्च तद् गृहं महाराजनिरूपितैः सैन्यैरहोरात्रं, निषिद्धश्च तत्र प्रवेशो मानुषस्य। यया च नाम मुद्रयाङ्किता द्वारादयः सा महाराजेनैव रक्षितात्मनः सविधे। एवं च सर्व्वं नामानुष्ठितं यथा वञ्चनस्यावसरो न मनागपि स्यात्।

व्यपगतेषु च चत्वारिंशद्दिनेषु ये नाम जनाः कार्य्यारम्भदिवस आसन् समुपस्थितास्ते सर्व्वे अन्ये च बहवस्तत्र सङ्गताः समभवन्। तदाकुरिताः प्रकराः, यथापूर्व्वं स्थिता मृत्तिका, अविकृताश्च मुद्राः—

इति प्रत्यक्षीकृतं सर्व्वैः। निर्गतश्च यथा गृहाद् बहिर्न किमप्य-धिगतं साहाय्यं साधुनेति। वर्णितं च केनचित् प्रत्यक्षदर्शिना आङ्गलमहाभागेन निरावरणीकरणं साधोर्यथा—"हस्तपादं स्तब्धी-भूतमाकुञ्चितञ्च, वदनमण्डलं स्थौल्यं गतम्, शिरश्च मृतस्येव स्कन्धे असज्जत। मत्सहचरेण भिषजा हृदयादिस्थाने स्पन्दनं किमपि नानुभूतम्। केवलं मस्तिष्कप्रदेशे आसीत् कियांश्चित्तापः, न पुनरन्यत्र कुत्रापि।

ततश्चोष्णोदकेन स्नापिते तच्छरीरे हस्तपादं मुक्तकाठिन्यं शैथिल्य-मभजत्। नासाकर्णविवरेभ्योऽपसारितानि तूललाक्षादीनि, प्रदत्तश्च उष्णः सेकः शिरसि। ततश्च साधुशरीरे पुनर्जीवनस्य क्षीणानि लक्षणानि पदं कृतवन्ति।

वारत्रयं प्रयुक्ते सेके भृशमकम्पत शरीरम्, प्रावर्त्तत श्वासक्रिया, अङ्गानि प्रकृतिभावं प्राप्तानि। मुहूर्त्तापगमे विस्तृतिं गते नयन-गोलके स्ववर्णमासादिते च। प्रत्यभिज्ञाय च रणजित्सिंहम्, उक्तं तेन साधुना—किमधुना प्रत्येषि मामिति।

पेटिकातो मोचनादर्द्धघटिकाभ्यन्तर एव स साधुः समन्तात्-स्थितैर्जनैर्निर्बाधं परं क्षीणकण्ठमालपति स्म।

इदानीन्तना अपि लवपुरीयाः केचन जनाः वृत्तान्तस्यास्य प्रामाण्यम् अङ्गीकुर्वन्ति यतस्तेषां पितामहैः प्रपितामहैर्वा प्रत्यक्षी-कृत एष व्यापारः। यत्सत्यं लवपुरीयैरद्यापि हरिदासः परं बहुमन्यते तर्क्यते च यथा यैर्नाम पुरुषैर्लवपुरं पवित्रीकृतं तेषु श्रेष्ठोऽयं हरिदास इति।

अन्ते चैतदपि निवेद्यं यत् योगलभ्यालौकिकशक्तिविषये योगि-सम्प्रदायिनां विराजन्ते बहव एव कथाः सकलजनपरिचिताः। तथा च मीननाथादीनां तच्छिष्यभूतानां मयनामतीप्रभृतीनां योगबलेना-लौकिककृशसहनचमत्वं दशद्वारबन्धनेन महामन्त्रजपादिना चोपलब्धस्य महाज्ञानस्य च माहात्म्यं भारतस्य विविधप्रदेशीयसाहित्येषु प्राचीनेष्वेव सुप्रथितमेवास्ते इति शम्॥

---

# सुखस्वरूपम्

[ निबन्धकः—श्रीसुरेन्द्रचन्द्रसांख्यतीर्थः ]

इह खलु नित्यपरिवर्त्तन-शीले जगति सर्व्व एवानुजगां त्रिविध-दुःख-दावानल-दन्दह्यमानाः "सुखं मे भूयात्" इति प्रार्थनापराः। परं दुःखराशि-दूरीकरणोपायमजानन्तो दुःखाद्दुःखान्तरमेवोपभुञ्जाना जानन्तोऽपि दूरीकरणोपायानुष्ठानपराङ्मुखा न सुखलेशोपभोगक्षमाः। "व्याधिर्म्मां मा पीडयतु" इति भाषणमात्ररतानां नहि कदाचिदपि व्याधिनिवृत्तिसम्भावना अपितु व्याधयः शनैः शनैर्व्विवर्द्धमाना एव। मरुभूमौ जलार्थिनो यथा दूराज्जलमनुमाय कल्पितजलस्थानमुपगम्यापि जलमलभमानाः पुनर्दूरादेव भ्रमाज्जलमिव मन्यमानास्तत्रापि जललाभासमर्था बहुधा बंभ्रम्यमाणा जलाभावेन पञ्चत्वमापद्यन्ते, तथैवापि "अस्मिन् विषये सुखं मे भविष्यती"ति चिन्तापरायणा विषयविशेषानुरक्तास्तत्रालब्धसुखाः पुनर्व्विषयान्तरे सुखप्रत्याशया धावन्तोऽप्यप्राप्तसुखा विषयाद् विषयान्तरमनुधावन्तो दुःखज्वालया दन्दह्यन्त एव। विषयजसुखं विषवद् विहातुकामानाम् एव दुःखनिवृत्तिः सम्भवति। विषयजसुखे दुःखबाहुल्यदर्शनाद् विवेकिनस्तत्सुखं दुःखमेव मन्यन्ते न सुखम्। तथाच पातञ्जल-सूत्रं "परिणामतापसंस्कारदुःखैर्दुःखमेव सर्व्वं विवेकिनः" विषयसुखलालसानान्त्वाशासागरपारगमनमशक्यमेव। आशालता हि भोगसलिलैर्नितरां विवर्द्धते। तथाचोक्तं महामतिना व्यासदेवेन

"न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥"

एवञ्च विविधदुःखराशिर्वृश्चिकराशिरिवानिशं प्राणिकुलं दन्द-

श्यन्ते। सर्व्वत्र सर्व्वदा सर्व्वैरेवानुभूयमानस्य दुःखस्याध्यात्मिकाधि-भौतिकाधिदैविकभेदेन त्रैविध्यं सर्व्ववादिनामविरुद्धम्। आध्यात्मिकस्य पुनः शारीरमानसभेदेन द्वैविध्यं श्रुतिस्मृतिप्रसिद्धम्। शारीरं व्याध्यादिजनितं, मानसं मनोमात्रजन्यं काम-क्रोध-लोभ-मोह-भयेर्ष्याविषाद-विशेषादर्शन-निमित्तम्। आत्मानमधिकृत्य भवतीत्याध्यात्मिकम्। भूतानि प्राणिनोऽधिकृत्य प्रवृत्तमित्याधिभौतिकं व्याघ्रचौराद्युत्थम्। देवानग्निवाय्वादीनधिकृत्य प्रवृत्तमित्याधिदैविकं दाहशीताद्युत्थम्। एतद्दुःखसागरनिमग्नान् जीवनिकायानुद्दिधीर्षवः परमदयालवो भगवदंशरूपेणावतीर्णा आर्य्या ऋषयो दुःखसागरोद्धरण-सेतुरूपं जीवमोक्षोपायभूतं नानाविधदर्शन-शास्त्रं विरचितवन्तः। परोपकारव्रतपालने दयालवः सदैव कृताभिनिवेशाः परिलक्षिताः। तानि खलु दर्शन-शास्त्राणि परस्परं विवदमानान्यपि "दुःखं दूरीकरणीयं" "दुःखं मा भवतु" इत्यादौ सर्व्वथैकमतानि। तत्त्वविज्ञानं दुःखहानोपाय-भूतमिति सर्व्वदार्शनिकसिद्धान्तः। तत्त्वविषयेऽपि तेषां प्रसिद्धैव विप्रतिपत्तिः। तथाहि सांख्याचार्य्याश्चतुर्व्विंशतितत्त्वमाचक्षते, वैदान्तिकाः "सर्व्वं खल्विदं ब्रह्म" "एकमेवाद्वितीयम्" इति श्रुतिप्रतिपादन-निरताः, नैयायिकाः प्रमाणप्रमेयादिषोडशपदार्थनिरूपणकृतप्रयासाः। एवं बहुधा विप्रतिपत्तिस्तत्त्वजिज्ञासुजनमनोविक्षोभणनिपुणा। एवं दुःखत्रयनिराकरणोपायरूपं तत्त्वज्ञानमतीव क्लेशसाध्यं सांसारिकजनदुःसाध्यमत एव तल्लाभाय त्यक्तापातरमणीयविषयविष-भोगविलासा अरण्यमाश्रित्य तत्त्वज्ञानलाभोपायीभूततपस्यादौ कृताभि निवेशा भारतीयार्य्यमुनिवृन्दाः। इदानीन्तु तपःसाधनादिरूपकारणा-भावात् कार्य्यस्याप्यनुपपत्तिः। अत एवापारदुःखसागरनिमग्नाः प्राणि-समूहाः। यथोत्पन्नदुःखराशिनिवृत्तिविषये महतामेतादृशी चेष्टा-परम्परा तथा दुःखानुत्पादकहेतावपि तेषामाग्रहातिशयः प्रकटीभूतः। दुःखमनुत्पन्नं चेत् तद्धानोपायान्वेषणं शशशृङ्गान्वेषणवद् वृथैव।

जगति आशावतामेव निखिलदुःखोत्पत्तिमवलोक्याशाया दुःखजनकत्वं प्रेक्षावद्भिः स्थिरीकृतम्। आशाया अल्पाधिक्यवशाद् दुःखाल्पत्वबहुत्वे सर्व्वत्र लक्षणीये। आशानामाग्निमूलराशिमिव मानवान्तःकरणं दग्धं प्रवर्त्तते। अतः सदैवाशाप्रसारनिरसने प्रेक्षावतां प्रवृत्तिः। आशापाश-निबद्धाः खलु मानवाश्चेतसि विषयास्वादसमुद्भवमस्मृतायमानमपूर्व्व-मानन्दसन्दोहमनुबुभूषवोऽप्यतितरङ्कतयत्ना विधिविपाकाद् व्यर्थप्रयासा अतिदीना मीना इव जालनिबद्धा दुःखधारामापद्यमाना निर्व्वेदमव-लम्बन्ते। अस्मिन् विषये काचिदाख्यायिका श्रूयते। पुरा सौभरिर्नाम कश्चिन्मुनिः जले नानाविधयोगविघ्नमाशङ्क्यान्तर्जले द्वादशाब्दं तपश्चरणमनुष्ठितवान्। तत्र चातिप्रमाणः पुत्रपौत्र-दौहित्रादि-परिवेष्टितकलेवरः कश्चिन्मीनो दृष्टः। तेषु केचन पृष्ठे केचन पुच्छे केचन वक्षःस्थले केचन शिरसि सञ्चरन्तस्तेन सहानिशम् अक्रीडन्। तत्स्पर्शजनितजाताह्लादं तं मीनमनिशमवलोकयन् पुत्रपौत्रादिवता-मेव सुखं न तु मादृशानामिति कृतनिश्चयो जलादुत्थाय दारान्वेषी मान्धातृराजसमीपं गत्वा तस्य पञ्चाशत्कन्यकानामेकां याचितवान्। स्थविरवरत्वमीक्षमाणेन प्रत्याख्यानकातरेण मुनिशापभीतेन तेन राज्ञोक्तं "भगवन्! अस्मत्कुलस्थितिरियं य एव कन्याया अभिरुचितस्तस्मै कन्या प्रदेये"त्याकर्ण्य "अयं कश्चिन्मन्निराकरणोपाय"इति क्षणं विमृश्य "वाढमित्युक्त्वा राज्ञा प्रेषितेन केनचिदनुचरेण सह कन्यान्तःपुरं गतः। योगविभूत्या परिगृहीतनिर्ज्जितकन्दर्परूपन्तं सर्व्वाः कन्यका वृतवत्यः। अथ गृहीतदारः सौभरिः कस्मिंश्चिदरण्ये योगबलेन राजपुरीतोऽधिकतररमणीयाः पञ्चाशत् पुरीर्वासाय निर्म्मितवान्। अथ कालेन तासु राजतनयासु सार्द्धशतं सुता मीनापत्यवद् विचरण-शीलास्तदानन्दवर्द्धकाः सञ्जाताः। ततोऽपि तृप्तिमलभमान एकान्ते कदाचिच्चिन्तयामास। "अहो मे मोहस्यातिविस्तरः, एतेऽस्मत्पुत्राः कालभाविणस्ततो युवकाः कृतदारास्ततः पुत्रवन्तः एवमादिमनोरथ-

निवृत्तिः सुदूरपराहता अपि त्वनुदिनं मनःप्रवृत्तिर्व्वर्द्धनशीलेव । अहो सुखाशाकुलितेन मया महदकार्य्यमनुष्ठितम् । आशयैवाहं परमतत्त्वं विस्मृतिसागरगर्भे विनिःक्षिप्य विषयाशीविष-विष-दग्धकलेवरोऽस्मी"-ति निर्व्विण्णचित्तः सर्व्वान् विहाय पुनस्तपसे मुनिपुङ्गवो गतवान्। एतेन, विषयजसुखेन मानवानां न दुःखनिवृत्तिरपि तु दुःखवृद्धिरेव । अतः परमकारुणिको निखिलप्राणिक्लेशराशिदूरीकरणमानसस्तत्त्वज्ञानाधारो जन्मसिद्धः कपिलो मुनिः सांख्यदर्शनं प्रणीतवान् । श्रीमद्भगवद्गीताया अपि "सिद्धानां कपिलो मुनि" रित्युक्तिस्तस्य श्रेष्ठत्व-प्रतिपादिका । स हि कपिलमुनिर्ज्ञानचक्षुषा निखिलं तत्त्वमवलोकयन् "निराशः सुखी पिङ्गलावत्" इति सूत्रं स्वप्रणीतसांख्यदर्शने निगदितवान् । सुतरां दुःखहेतुभूताशापरित्यागे सर्व्वं कृतप्रयासाश्चेत् कारणाभावाद्दुःखोत्पत्तिस्तिरोहितैव स्यात् । नहि शारीरदुःखकरज्वरादिव्याधि-दूरीकरणे भिषग्वरदत्तभेषजवराः समर्था औषधविनियोगसत्त्वेऽपि सर्व्वत्र रोगविनाशादर्शनात् कुत्रापि वा रोगादिविनाश-सत्त्वेऽपि तेषां पुनरुत्पत्तिवारणासमर्थत्वात् । एवं मानसदुःखहानावपि ईप्सितवस्तुलाभादिव्यापारो न पर्य्याप्तः पुनः पुनर्नवाभिलषित-वस्तु-संग्रहे प्राणिनां शक्तिविरहात् । एवं यद्यपि आधिभौतिकदुःखनिराकरणोपायो मणिरत्नादिप्रयोगः सद्भिः कल्पितस्तथापि तदुपायो वर्त्तमानाधिभौतिकदुःखहानिविषये कथञ्चित् समर्थोऽपि न भाविदुःखविनाशसमर्थः । तथाहि "श्वः सर्पदंशनज्वाला-क्लेश औषधप्रयोगेण व्यपेतेऽपि पुनरद्य सर्पदष्टोऽहमित्याद्यनुभवो दुर्व्वार एव । एवमाधिदैविक दुःखनिवृत्तेरुपायस्यापि अत्यन्तनिवृत्तिकरणासमर्थत्वात् तादृशोपायः शिष्टविगर्हितः । कस्यचिदपि दुःखस्यात्यन्तनिवृत्तिकरणे दृष्टोपायस्य शक्तिविरहाद्दृष्ट उपायः सर्व्वथा दुःखहानाय ज्ञेय एव मनीषिभिः । यद्यपि "स्वर्गकामो यजेत" "अग्निहोत्रं जुहुयात् स्वर्गकामः" "अपाम सोममसृता अभूम" इत्यादि

श्रुतिरापाततो दृष्ट्या वैदिकक्रियाकलापानुष्ठानदुःखनाशप्रतिपादिका तथापि दुःखहानौ स उपायो न विचारसहः, वैदिकक्रियाकलापादीनामप्यत्यन्तदुःखनिवृत्तिसामर्थ्याभावात्। "क्षीणे पुण्ये मर्त्यलोकं विशन्तो"त्यादिस्मृतिः स्वर्गफलस्यास्थिरत्वज्ञापिका। किञ्च स्वर्गस्था अपि परस्पराभिभवाशापरोत्कर्षासहिष्णुत्वादिदोषदुष्टाः। अतस्तल्लाभेऽपि नितरां न दुःखात्यन्तनिवृत्तिः। मुमुक्षवस्तु स्वर्गलाभेच्छाविरहिता एव। मुमुक्षूणां स्वर्गलाभेऽनिच्छाप्रकाशिका काचिदाख्यायिका सर्व्वजनविदितोद्धियते। यथा,—अरिष्टनेमिनाम कश्चिद् राजर्षिः सुताय राज्यं दत्त्वा वीतरागो गन्धमादनपर्व्वतमुपसृत्य तपश्चरणप्रवृत्तः। तत्तपश्यामन्तुष्टो देवाधिपतिरिन्द्रस्तमानेतुं दूतं प्रेषितवान्। दूतस्तु गृहीतद्रव्यसम्भारो रथमारुह्य राजर्षिमुपगम्य देवराजाभिप्रायं सम्यक् प्रकटितवान्। "राजर्षे! भवन्तं स्वर्गं निनीषुणा देवराजेन प्रेषितोऽहम्"। इति दूतवचनं निशम्य "स्वर्गस्थगुणदोषादीन् सर्व्वान् श्रोतुमिच्छामि" इत्युक्तवान् राजर्षिः। ततस्तु श्रुतराजर्षिवचनो दूतो निगदितवान् "महाभाग!

स्वर्गे पुण्यस्य सामग्र्या भुज्यते परमं सुखम्।
उत्तमेन तु पुण्येन प्राप्नोति स्वर्गमुत्तमम्॥
मध्यमेन तथा मध्यः स्वर्गो भवति नान्यथा।
कनिष्ठेन तु पुण्येन स्वर्गो भवति तादृशः॥
परोत्कर्षासहिष्णुत्वं स्पर्द्धा चैव समैश्च तैः।
कनिष्ठेषु च सन्तोषो यावत् पुण्यक्षयो भवेत्॥"

एवं गुणदोषयुक्तं स्वर्गं विज्ञाय 'नहि एवं फलवति स्वर्गे जिगमिषामः' इति राजर्षिणोक्तम्। ज्ञाताशयो दूत इन्द्रसमीपं गतः पुनरपि प्रेषित इन्द्रेण। एवं पुनःपुनरनुबद्धोऽपि तत्र गन्तुं स नैच्छत्। अनयाख्यायिकयापि स्वर्गफलास्थिरता प्रमाणीकृता। अपि च यागादौ पशुवधविधानात् केषाञ्चिन्मते वैधहिंसाया अपि पापजनकत्वात्

सोऽप्यविशुद्ध उपायस्तेनापि स्वर्गफलास्थिरत्व-प्रतीतिः। तथाच सांख्यकारिकायामेतदर्थप्रतिपादनपरं श्लोकद्वयम्—

दुःखत्रयाभिघाताज्जिज्ञासा तदवघातके हेतौ।
दृष्टे साऽपार्था चेन्नैकान्तिकात्यन्तिकाभावात्॥
दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञ-विज्ञानात्॥

तथाच सांख्यसूत्रेऽपि "न दृष्टात् तत्सिद्धिर्निवृत्तेऽप्यनुवृत्तिदर्शनात्" एतेन व्यक्ताव्यक्तज्ञविज्ञानमेव सांख्याचार्य्यमते आत्यन्तिक-दुःख-निवृत्ति-हेतुः। तत्त्वविज्ञाने को हेतुरिति पर्य्यनुयोगः सहजात एव सचेतसां चेतसि जागरूकः। तदुत्पत्तये महर्षिप्रदर्शितपथैनैव गन्तव्यम्। महर्षीणां मते निष्कामकर्म्मणां ज्ञानोदये हेतुत्ववर्णना। निष्कामकर्म्मणा चित्तनिर्म्मलत्वसम्पादनान्तरं शनैः शनैर्व्वासना-त्यागान्मोक्षो भवति। सकामकर्म्मणा चित्तमुत्तरोत्तरं वासनाप्रबलम्। अतः कामनाविरहिता एव निर्म्मलज्ञानं लब्धुमर्हाः, न तु कामनावन्तः पुरुषाः। तथाचोक्तं—

"न कर्म्मणा न प्रजया धनेन त्यागेनैकेनामृतत्वमानशुः" इति। केवलं त्याग एवामृतत्वलाभोपाय इति श्रुतितात्पर्य्यम्। "त्यागाच्छान्ति-र्निरन्तर" मित्यादिस्मृतयश्च। अतएव श्रीमच्छङ्कराचार्य्योऽपि स्वप्रणीत-ग्रन्थे "कौपीनवन्तः खलु भाग्यवन्तः" इत्युक्तवान्।

"न धनेन भवेन्मोक्षः कर्म्मणा प्रजयाऽपि वा।
त्यागमात्रेण किन्त्वेके यतयोऽश्नन्ति चामृतम्॥

इति योगवाशिष्ठेऽपि। अत आशाभाववतामेव निर्म्मलसुखोत्-पत्तिरिति श्रुति-स्मृति-प्रसिद्धिः। आशारहितानां क्रमशस्तत्त्वज्ञाने प्रवर्त्तते। लब्ध-तत्त्वज्ञाना दुःखात्यन्तनिवृत्तिरूपं मोक्षं लब्धुं समर्थाः "ज्ञानान्मुक्तिः" इति सांख्यसूत्रात्। इत्यलमतिपल्लवेन।

---

# सारस्वतसमाजाधीना परीक्षा

आगामिषु सौरचैत्रस्य १३-१४-१५-श-दिवसेषु सारस्वतसमाजाधीना परीक्षाधोनिर्द्दिष्टस्थानेषु भविता।

ढाका, कुमिल्ला ( नोयाखाली ), चट्टग्राम, मयमनसिंह, मौलवीबाजार, हविगञ्ज ( श्रीहट्ट ), ब्राह्मणवाड़िया ( त्रिपुरा ), इदिलपुर ( फरिदपुर ), वालियाभाङ्गा ( फरिदपुर ), राजसाही, नवद्वीप, किशोरगञ्ज ( मयमनसिंह ), पाटग्राम ( ढाका ), कलिकाता (संस्कृत-साहित्यपरिषत् ) इत्येतेषु।

सौरफाल्गुनस्य दशमदिवसाभ्यन्तरे परीक्षार्थिभिरावेदनपत्रं "बाङ्गालाबाजार सारस्वतकार्य्यालय ढाका" इत्युद्देशेन सम्पादकसमीपे प्रेषणीयम्।

# काल-सिद्धान्त-दर्शिनी

( पूर्वानुवृत्ता )

[ निबन्धकः—श्रीहाराण-चन्द्र-शास्त्री ]

ननु पूर्वत्र प्रदर्शितायाम्—

"कालात् क्रिया विभज्यन्त आकाशात्सर्वमूर्त्तयः ।
एतावानेव भेदोऽयमभेदोपनिबन्धनः ॥"

इति कारिकायाम् "अभेदोपनिबन्धन"इत्यनेन कालव्यवहारस्य ब्रह्म निमित्तमित्युक्तम्, "अव्याहताः कला यस्य"त्याद्यादिकारिकायां तु कालाख्या ब्रह्मशक्तिरङ्गीकृतेति भर्त्तृहरेः पूर्वापरविरोधात्तदुक्तिरप्रामाणिकीति चेत्; न, "अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्त्तत" इति द्वितीयकारिकायां शक्तिशक्तिमतोरभेदप्रतिपादनेन कालरूप-ब्रह्मशक्ति-निमित्तकस्यापि कालव्यवहारस्य ब्रह्मनिमित्तकत्वेन पूर्वापरविरोधाभावात्, अन्यथा ब्रह्मातिरिक्तायाः कालशक्तेरभ्युपगमे द्वैतापत्त्या द्वितीयकारिकायामुक्तम् "एकमेव यदाम्नातमि"त्यवधारणमसमञ्जसं स्यात् ।

[ ज्योतिः-शास्त्रमतम् ] ज्योतिर्विदां मते ग्रहनक्षत्रादिक्रियैव कालः । प्रतिपादितं चैतन्न्यायमञ्जर्यामनुमाननिरूपणे (१।१।५ सूत्रे ) —

"न देवदत्तादिपरिस्पन्दनिबन्धनाः क्रमाक्रमादिप्रत्ययाः, किन्तु ग्रहनक्षत्रादिपरिस्पन्दननिबन्धनाः ; स एव ग्रहतारादिपरिस्पन्दः काल इत्युच्यते। तत्कृत एवायं यामाहोरात्रमासादिव्यवहारः । * * * । कालविदश्च ज्योतिर्गणकास्त एवं बुध्यन्ते ।" इति ।

श्रीमृगेन्द्रवृत्तिदीपिकायामपि ( १० प्र० १४ )—

"ज्योतिःशास्त्रदृष्ट्या क्रियाविशेषात्मक एवाभ्युपगम्यते

आदित्यग्रहताराादिपरिस्पन्दमथापरे ।
भिन्नमावृत्तिभेदेन कालं कालविदो विदुः ॥" इति ।

वेदाङ्गज्योतिषे याजुषे प्रारम्भे नमस्कारपद्य उक्तम्—

"पञ्चसंवत्सरमय-युगाध्यक्षं प्रजापतिम् ।
दिनर्त्वयनमासाङ्गं प्रणम्य शिरसा शुचिः ॥" इति

[ वेदाङ्गज्यौतिषमतम् ] पञ्चवर्षात्मकं युगं भवतीति "वत्सरान्ताच्छश्छन्दसि" (५।१।९१) इति सूत्रे पदमञ्जर्यां हरदत्तोक्त्या* प्रतीयते ।

---

* "इद्वत्सरेदावत्सरशब्दौ पञ्चवर्षे युगे द्वयोर्वर्षयोः संज्ञे ।" इति

सोमाकरभाष्ये पञ्चानां वर्षाणां नामानुक्रान्तानि—"पञ्चसंवत्सरमयम् संवत्सरपरिवत्सरे-दावत्सरानुवत्सरेद्वत्सरात्मकम्" इति । सोमाकरमते व्यस्त एव पाठः ।

श्रीभागवतेऽप्येषां नामान्यभिहितानि ; परन्तु तत्रायं विशेषः—इदावत्सरेत्यत्र इडावत्सर इति इद्वत्सरेत्यत्र वत्सर इत्युक्तम्—

"संवत्सरः परिवत्सर इडावत्सर एव च ।
अनुवत्सरो वत्सरश्च विदुरेवं प्रभाष्यते ॥" ( ३।११।१४ )

श्रीधरीयटीकायामत्राभिहितम्—"संवत्सरादिभेदश्च सौरबार्हस्पत्यसावनचान्द्रनाक्षत्र-मासभेदेन द्रष्टव्यः ॥" इति । अत्र विजयध्वजीयटीकायामेतत् प्रपञ्चितम्—'तत्र सौरद्वादश-मासाः संक्रमणावसानाः संवत्सरः । द्वादशराशिषु बृहस्पतेराक्रमणा यः कालस्तस्य द्वादशांशः परिवत्सरः । चन्द्रस्य सप्तविंशतिनक्षत्रभोगेन चान्द्रो मासः, ते द्वादश मासा इडावत्सरः । चान्द्रोऽब्दश्चैत्रादिः सोऽनुवत्सरः । अशीत्यधिकशतत्रयात्मा सावनोऽब्दो वत्सरनामकः ।' इति ।

अत्रैव श्रीधरस्वामिना 'केचित्पुनरेवमाहुः' इति पक्षान्तरमुपन्यस्तम् । स एव पक्षः समीचीनतया बुद्धिपथमधिरोहति । स चायं पक्ष इत्थं प्रतिपादितः—यदा शुक्लप्रतिपदि संक्रान्तिर्भवति, स संवत्सरः ; ततः सौरमानेन वर्षे षट् दिनानि वर्द्धन्ते, चान्द्रमानेन वर्षे षट् दिनानि ह्रसन्तीति द्वादशदिनव्यवधानादुभयोरग्रपश्चाद्भावो भवति । एवं व्यवधानतारतम्येन पञ्च वर्षाणि गच्छन्ति, तन्मध्ये द्वौ मलमासौ भवतः ; पुनः षष्ठः संवत्सरो भवतीति ।"

एतादृशपञ्चवर्षात्मकयुगाभिप्रायेण महाभारते विराटपर्वणि श्रीभीष्मपितामहेनोक्तम्—

पञ्चमे पञ्चमे वर्षे द्वौ मासावुपचीयतः ॥ ( ५२।३ ) इति ।

शुक्लयजुःसंहितायाम् २७ अध्याये ४५ कण्डिकायामभिव्यक्तिरूपायां पञ्चानां संवत्सराणां नामानि दृश्यन्ते—

तथा चात्र "पञ्चसंवत्सरमयं युगाध्यक्षमि"ति •व्यस्तः पाठ उपलभ्य-मानोऽप्युपेक्षणीयः। श्रीसुधाकरद्विवेदिमहाशयेनाप्युक्तमेतत् †। प्रजानामुत्पत्तिप्रभृतिहेतुत्वेन कालः प्रजापतिरूपेणात्र प्रतिपादितः। दिनादिकञ्च कालरूपस्यैव प्रजापतेरङ्गम्। एवं च कालस्य ग्रह-तारादिपरिस्पन्दनरूपत्वं पूर्वोक्तं केषांचिदाधुनिकज्योतिर्विदां सम्मतमपि न वेदाङ्गज्योतिषसम्मतम्। किन्तु तस्य कालमतिरिक्तत्वं च।

ऋक्संहितायां तु कालो विश्वाधारोऽपि स्वयमनाधारः सर्वेषा-मुत्पत्तिकारणं नित्यश्चेति निरूपितम् अस्यवामीये सूक्ते (२ अष्टके ३ अध्याये) द्वितीयस्यामृचि। तत्र पूर्वार्द्धेन सूर्य्यं प्रतिपाद्योत्तरेणार्द्धर्चेन संवत्सरात्मा कालः प्रतिपादितः—

[ऋक्सं‌हि· "त्रिनाभिचक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधितस्थुः।"
सामतम्] इति।

तत्र यास्कः—संवत्सरप्रधान उत्तरोऽर्द्धर्चस्त्रिनाभिचक्रं—
ऋतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति * * *
अजरमजरणधर्म्माणमनर्वमप्रत्यृतमन्यस्मिन् यत्रेमानि सर्वाणि भूता-न्यभिसन्तिष्ठन्ते।" इति (निरुक्ते ४ अ० २३ ख०)।

"यस्मादृतूनां द्वौ द्वौ ऋतू समानस्वभावौ इत्यनेनाभिप्रायेण त्रित्वम्" * ऋतूनामत्र प्रतिपादितम्। "अजरममरं न हि कदाचिदपि कालो म्रियते।" "अप्रत्यृतमप्रतिगतमनाश्रितमन्यत्र क्वचित्*।"

---

"संवत्सरोऽसि परिवत्सरोऽसीदावत्सरोऽसीद्वत्सरोऽसि वत्सरोऽसि" इति। अत्र महीधरभाष्यम् —"'पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिम्' इति ज्योतिःशास्त्रोक्तमिहोच्यते। हे अग्ने त्वं संवत्सरोऽसि परिवत्सरोऽसि इदावत्सरोऽसि इद्वत्सरोऽसि वत्सरोऽसि निर्विशेषणः, पञ्च-संवत्सरात्मकः युगरूपोऽसीत्यर्थः। 'युगं भवेद्वत्सरपञ्चकेन' इति ज्योतिःशास्त्रोक्तेः" इति।

अत्रानुवत्सरस्थले वत्सर इति पठितमिति द्रष्टव्यम्।

† 'पञ्चसंवत्सरमययुगाध्यक्षम्' इति पाठः साधुरिति सुधाकरीयभाष्याम्।

* दुर्गाचार्य्यटीका। ** सायणाचार्य्यभाष्यम्।

क्वचिद् वेदे † "हेमन्तशिशिरयोः समासेन" * (एकत्वेनेत्यर्थः *) पञ्च ऋतवः प्रतिपादिताः क्वचित् ‡ षडृतव एवोक्ताः ।

द्वितीयाष्टकस्य तृतीयाध्यायेऽस्यवामीय एव सूक्ते "पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्द्धे पुरीषिणम् ।" इति द्वादशाम्यचि "पितर"मित्यनेन कालस्य सर्वोत्पत्तिस्थितिकारणत्वं प्रत्यपादि । अतएव "पितरं पालकं सर्वभूतानामुत्पादयितारं वे"ति व्याख्यातं दुर्गाचार्य्यमहाशयैः ।

मनुसंहितायां प्रथमाध्याये सृष्टिप्रकरणे —

[मनुसंहितामतम्] "कालं कालविभक्तीश्च नक्षत्राणि ग्रहांस्तथा ।"

इत्यनेन कालस्य कालावयवानां च क्षणदिनमासादीनां सृष्टिरुक्ता । अत्र प्रथमतः "कालमि"त्येकवचनेनैकस्यात एव व्यापकस्य महाकालस्य सृष्टिरुक्ता तदनन्तरं खण्डकालानां व्यावहारिककालरूपाणां सृष्टिरभिहितेति प्रतीयते । कुल्लूकभट्टेन तु "आदित्यादिक्रियाप्रचयरूपं कालं कालविभक्तीर्मासर्त्वयनाद्याः" इति व्याख्यातम् । तन्मते कालमित्येकवचनमाञ्जस्येन नोपपद्यतेति सुधीभिर्विभावनीयम् । मनोर्मते कालो जन्यभावत्वेन विनाशी—अतएवानित्य इति सिद्धम् ।

महाभारते सृष्टिप्रक्रिया क्वचिदाकाशादिका ब्रह्मवादिसम्मता

---

* * * निरुक्ते ४ अ० २७ ख० । † ऋग्वेदे २ अ० ३ अ० १२,१३ म०

‡ ऋग्वेदे २ अ० २ अ० १२ म० उत्तरार्द्धे ।

---

* इन्द्रियाण्यपि द्विविधानि, तत्त्वभूतानि तत्त्वभिन्नानि चेति । तानि पुनर्द्विविधानि, ज्ञानेन्द्रियाणि कर्म्मेन्द्रियाणि चेति । घ्राणरसनचक्षुःश्रोत्रत्वग्रूपाणि ज्ञानेन्द्रियाणि पञ्च । नित्यानित्यभेदेन पुनर्द्विविधानि । तत्त्वाभिन्नानि नित्यानि ज्ञानकर्म्मेन्द्रियाणीश्वरस्यासर्वजीवानां स्वरूपभूतानि, तानि साक्षीत्युच्यन्ते । साक्ष्यनङ्गीकारे कालाकाशाद्यसिद्धिप्रसङ्गात् ।—पदार्थसंग्रहः ।

† सर्वमत्र "वङ्गवासी"मुद्रितवङ्गाक्षरमयपुस्तकादुद्धृतम् ।

[ महाभारत-मतम् ] प्रदर्शिता, यथा—शान्तिपर्वणि मोक्षधर्मे मनु-बृहस्पतिसंवादे—

"अक्षरात् खं ततो वायुस्ततो ज्योतिस्ततो जलम्।
जलात् प्रसूता जगती जगत्यां जायते जगत्॥" ( २०२।१ )

पुनस्तत्रैव याज्ञवल्क्यजनकसंवादे २१२ अध्यायादारभ्य सांख्य-सम्मता सृष्टिप्रलयप्रक्रिया प्रपञ्चिता। तत्रायं विशेषः—निरीश्वर-सांख्यनये स्वतन्त्रैव प्रकृतिर्महदादिरूपेण परिणमते, सेश्वरसांख्यमते त्वीश्वरतन्त्रा; तत्रैव च सर्वेषां लयः। अत्र तु ब्रह्मण्येव लयः प्रतिपादितः—

"ततः सम्भवत् सर्वमक्षयाव्ययमव्रणम्।
भूतभव्यभविष्याणां स्रष्टारमनघं तथा॥" (२१२।१६)

अत्र "क्षयोऽपचयो व्ययो नाशः व्रणः परिणामस्तै रहितम्। अनघं मायादोषास्पर्शिनम्" इति नीलकण्ठव्याख्यानदर्शनेन सर्वेषां ब्रह्मण्येव लयो दर्शित इति प्रतिभाति।

सांख्यमते पुरुषसंज्ञका जीवा भिन्ना इति स्थितिः। अत्र तु एकस्यैव नानारूपतया जीवत्वमभिहितं याज्ञवल्क्येन—

"अव्यक्तरूपो भगवाञ्छतधा च सहस्रधा।
शतधा सहस्रधा चैव तथा शतसहस्रधा॥
कोटिशश्च करोत्येष प्रत्यगात्मानमात्मना। (२१४।२,३ )

*　　*　　*　　*

"अचेतना चैव मता प्रकृतिश्चापि पार्थिव।
एतेनाधिष्ठिता चैव सृजते संहरत्यपि॥" ( २१४।१२ )

अत एवेत उत्तरं जनकप्रश्न उपपद्यते—

"जनक उवाच—

अनादिनिधनावेतावुभावेव महामते।
अमूर्त्तिमन्तावचलावप्रकम्प्यगुणागुणौ॥

अशाश्वतमृषिशार्दूल कथमेको ह्यचेतनः ।
चेतनावांस्तथा चैकः चेत्रज्ञ इति भाषितः ॥"

( ३१४।१३,१४ )

पूर्वत्र ( २०२।१ ) उत्तरत्र च सृष्टिप्रक्रियायां कालस्य चर्चैव नास्तीति द्रष्टव्यम् ।

आनुशासनिके पर्वणि प्रथमाध्याये गौतमीलुब्धकव्यालमृत्युकाल-संवादे सर्पदष्टस्य गौतमीपुत्रस्य मरणे कारणविचारणायां सर्पेण भाषितम्—

को न्वर्जुनक दोषोऽत्र विद्यते मम बालिश ।
अस्वतन्त्रं हि मां मृत्युर्विवशं यदचूचुदत् ॥ ३५ इति ।

तत्र मृत्युनाऽऽगत्योक्तम्—

"प्रचोदितोऽहं कालेन पन्नग त्वामचूचुदम् ।" ५०

*   *   *   *

"या काचिदेव चेष्टा स्यात् सर्वाः कालप्रचोदिताः ।" ६७

ततस्तत्र समागत्य कालेनैतद् भाषितम्—

"यदनेन कृतं कर्म्म तेनायं निधनं गतः ।
विनाशहेतुः कर्म्मास्य सर्वे कर्म्मवशा वयम् ॥" ७२

अत्र ५० श्लोके "कालेनेश्वरेण" इति नीलकण्ठः । वयं तु पश्यामः—कर्म्मणः सूक्ष्मावस्था नियतिरेवात्र कालशब्देनोक्ता इति ।

शान्तिपर्वणि मोक्षधर्म्मे २३२ अध्याये व्यासशुकसंवादे लयक्रमः प्रतिपादितः । तत्र पृथिव्या जले जलस्य तेजसि तेजसो वायौ वायोराकाशे नभसो मनसि मनसश्चन्द्रमसि चन्द्रमसः सङ्कल्पे सङ्कल्पस्य विज्ञाने विज्ञानस्य काले कालस्य बले बलस्य काले कालस्य च विद्यायां लयं प्रतिपाद्य विद्यालयानन्तरं नादस्य ब्रह्मणि लयोऽभिहितः ; भूतानां लयस्तु स्वीयगन्धादिगुणलयपूर्वक इत्यादि निरूपितम् । एष च लय

आध्यात्मिक इति उपक्रमे प्रतिपाद्य योगिनां दृष्ट्यासिद्ध इत्यन्त उपसंहृतम्।

अत्र कालस्य बले लयमुक्त्वा पुनर्बलस्य काले लय उक्त :—

"कालो गिरति विज्ञानं कालं बलमिति श्रुतिः।
बलं कालो ग्रसति तु तं विद्या कुरुते वशे॥" १६

अत्र नीलकण्ठेन "कालमपि बलाख्या शक्तिर्ग्रसति" इति व्याख्याय, "बलं कालो ग्रसति तु" इतीममंशं शङ्कापरत्वेन योजितम्—कालं बलं न ग्रसति किन्तु काल एव बलं ग्रसतीति; तदनन्तरं, "तं विद्या कुरुते वशे" इत्यनेन कालस्यैव विद्यायां लय इति प्रत्यपादि। अस्य लयस्य योगिदृष्ट्याऽभिधानेनैतदीयं तत्त्वं योगरहस्यवेत्तार एव वेदितुमर्हन्तीति नात्राधिकं वक्तुं शक्यम्।

अत्रेदं प्रतिभाति—

महाभारते सांख्यप्रक्रियासम्मतैव सृष्टिर्व्यासदेवस्याभिमता। यत्रापि गगनादिका सृष्टिरभिहिता तत्रापि गुणोपसंहारन्यायेन महदादिकैव सृष्टिर्मन्तव्या। परन्तु जगतो ब्रह्मण्येवोत्पत्तिक्रमव्युतक्रमेण लयप्रतिपादनादेकस्य चानेकजीवभावोपवर्णनेनाद्वैत एव पर्य्यवसानम्। कालस्य सृष्ट्यनभिधानादतिरिक्तः कालोऽत्र नाङ्गीक्रियत इति।

[ विष्णुपुराण-मतम् ] विष्णुपुराणे तु विवर्त्तवाद एव निरूपितः। विवर्त्तो नाम एकस्यैवाद्वितीयस्य भ्रान्त्या नानारूपेण प्रतिभानम्। तदुक्तम्—

"ज्ञानस्वरूपमत्यन्तनिर्म्मलं परमार्थतः।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥"

[ विष्णुपुराणे प्रथमांशः २।६ ]

एकस्यैव ब्रह्मणो व्यक्ताव्यक्तपुरुषकालरूपेण स्थितिरुपवर्णिता—

"तदेव सर्वमेवैतद् व्यक्ताव्यक्तस्वरूपवत् ।
तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥"

( प्र० अ० २।१४ )

"व्यक्तं महदादि, अव्यक्तं प्रधानम्" इति श्रीधरस्वामिव्याख्या ।

"परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज ।
व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथाऽपरम् ॥"
प्रधानपुरुषव्यक्तकालास्तु प्रविभागशः ।
रूपाणि स्थितिसर्गान्तव्यक्तिसद्भावहेतवः ॥"

( प्र० अ० २।१५, १७ )

प्रधानादिरूपाणि जगतः स्थितिसर्गनाशानां व्यक्तिसद्भावहेतवः, व्यक्तिरभिव्यक्तिः प्रकाशः, सद्भाव उत्पत्तिः अत्र हेतवः कारणानि" इति श्रीधरस्वामिव्याख्या ।

प्रलये व्यक्तं महदादि स्वीयेन स्थूलरूपेण नासीत्, आदित्यादि-गत्युपलक्षितः स्थूलः कालश्च नासीत् । तत्र प्रकृतिपुरुषौ तयोश्च वियोजकः काल आसीत् । सर्गकाले तु कालेन प्रकृतिपुरुषयोः संयोजनाद्भवति सृष्टिः । तथाच ब्रह्मैव मूलकारणम् । तस्यैव रूपमयं प्रकृतिः पुरुषः कालश्चेति । तत्र प्रकृतिपुरुषयोर्नियामकः कालः । तेन संयोजनवियोजनाभ्यां नियन्त्रितौ प्रकृतिपुरुषौ सृष्टि-प्रलययोः प्रवर्त्तेते । अयं च कालो नित्यः, सृष्टिप्रलययोर्विद्यमानत्वात् । स एष आदित्यादिपरिस्पन्दोपलक्षितो व्यवहारविषयः स्थूलः काल इत्युपवर्ण्यते । सर्वमिदं विष्णुपुराणे प्रथमांशे द्वितीयाध्याये श्रीपराशरेणोक्तं मैत्रेयं प्रति, स्पष्टीकृतं च श्रीश्रीधरस्वामिपादैः ।

श्रीभागवते तृतीयस्कन्धेऽष्टमाध्यायमारभ्य सृष्टिप्रक्रियोपवर्णिता ।—

[ श्रीभाग-वतमतम् ] भगवतः कालाख्या शक्तिः प्रलये सुप्तेव लीना तिष्ठति, भाविसर्गोपक्रमे सा परमेश्वरेण प्रेरिता प्रबोधिता भवतीति श्रीधरस्वामिनां मतम् । तथाचैतन्मते कालाख्या ब्रह्मशक्तिर्नित्या । तथाचोक्तं श्रीभागवते—

( क्रमशः )

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रविः ।
भावालोकैमनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| February, 1932. | १८५३ शकीये माघे १४श-वर्षस्य १०म-संख्या | Vol. XIV. No. 10. |


## कालसिद्धान्तदर्शिनी

[ निबन्धकः—श्रीहाराणचन्द्रशास्त्री ]

[ पूर्वतोऽनुवृत्तः ]

"सोऽन्तःशरीरेऽर्पितभूतसूक्ष्मः
कालात्मिकां शक्तिमुदीरयाणः ।
उवास तस्मिन् सलिले पदे स्वे
यथाऽनलो दारुणि रुद्धवीर्य्यः ।" ( ३।८।११ )

अत्र श्रीधरस्वामिभिरुक्तम्—"कालशक्तेः प्रेरणं पुनः सृष्ट्यवसरे प्रबोधनार्थम् ॥" इति ।

श्रीमाध्वमतानुयायिनस्तु कालस्यानित्यतामङ्गीकुर्वन्तः—

"कालात्मिकां कालाख्यां सहकारिशक्तिमुदीरयाणो जनयन्नि"त्यर्थमाहुः *। तेषां तु उदीरयाण इत्यक्षरास्वारस्यं स्पष्टम् । नहीरधातोरुत्पत्त्यर्थकत्वं वैयाकरणानां निकाये प्रसिद्धम् । यथा तथा वाऽस्तु, कालाख्या ब्रह्मणः शक्तिर्ब्रह्मणः सहकारिणीत्यत्राविवाद एव ।

"विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया ।
ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्त्तिना ॥"

( भा०—३।१०।२२ )

---

* सुधायां नैसर्गिकाधिकरणे ।

"विष्णुमायया संस्थितं संहृतं ब्रह्म तन्मात्रं महद् विश्वम् ईश्वरेण कर्त्रा कालेन निमित्तेन परिच्छिन्नं पृथक् प्रकाशितम्। अव्यक्ता मूर्त्तिः स्वरूपं यस्येति स्वतो निर्विशेषता दर्शिता।" इति श्रीधरस्वामिव्याख्या।

कालः सूक्ष्मस्थूलभेदेन द्विविधः, स चानुमानगम्यः, सर्वेषां व्यक्ताव्यक्ताभिधेयानां कार्य्याणां व्यापकः ;—

"एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च सत्तम।
संस्थानभुक्त्या भगवान् अव्यक्तो व्यक्तभुग् विभुः॥" [३।११।३]

"संस्थानं परमाण्वाद्यवस्था तस्य भुक्तिर्व्याप्तिस्तया भगवानिति हरेः शक्तिः ( शक्तिशक्तिमतोरभेद इत्यभिप्रायः ) स्वतोऽव्यक्तो व्यक्तं ( कार्य्यजातम् ) व्याप्नोति परिच्छिन्दन्नि"ति श्रीधरीयव्याख्या।

एतदेव प्रपञ्चितमग्रिमे श्लोके—

"स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्।
सतोऽविशेषभुग्यस्तु स कालः परमो महान्॥" (३।११।४)

श्रीधरस्वामिभिरस्य पद्यस्यायमभिप्रायः स्पष्टीकृतः ;—

"ग्रहर्क्षताराचक्रस्थ" [ भा० ३।११।१३ ] इत्यादिना यत्सूर्य्यपर्य्यटनं वक्ष्यते, तत्र सूर्य्यो यावता परमाणुदेशमतिक्रामति तावान् कालः परमाणुः, यावता च द्वादशराश्यात्मकं भुवनकोशमतिक्रामति स परममहान् संवत्सरात्मकः कालः, तस्यैवावृत्त्या युगमन्वन्तरादिक्रमेण द्विपरार्धान्तत्वमिति। तथाच पञ्चमे [ २१ अ० ] सूर्य्यगत्यैव कालादिविभागं वक्ष्यति।" इति। एवं चैकस्या एव कालशक्तेरादित्यगतिरूपोपाधिवशेन परमाणुक्षणलवादिकालव्यवहारनिर्वाहकत्वमुक्तम्

योगवासिष्ठरामायणस्योत्पत्तिप्रकरणे द्वादशे सर्गे सृष्टिप्रक्रिया
[योगवाशिष्ठ- विस्तरेणोपवर्णिता समुपलभ्यते। तत्र प्रथमतः सृज्यमान-
मतम्] वस्तुविषयमीक्षणमुपवर्ण्येक्षणवृत्तिविशिष्टाया ब्रह्मसत्तायाः परमेश्वरभावमीक्षणवृत्तिविषयीभूतायास्तस्या एव सत्ताया हिरण्य-

गर्भात्मकजीवभावं चाभिधाय, हिरण्यगर्भद्वारैव वियदादिसृष्टिः प्रपञ्चिता। तत्र च आदावाकाशसृष्टिस्ततो युगपदहङ्कारकालयोः सृष्टिरभिहिता—

"समनन्तरमेवास्याः खसत्तोदेति शून्यता।
शब्दादिगुणबीजं सा भविष्यदभिधार्थदा॥
अहन्तोदेति तदनु सह वै कालसत्तया।" ८-१०

व्याख्यातञ्च वासिष्ठतात्पर्य्यप्रकाशे—"इदानीं महाभूतसर्गं विवक्षुः प्रथममाकाशसर्गमाह—'समनन्तर'मिति। अस्या जीवसत्तायाः समनन्तरमेव खसत्ता इतरभूतावकाशदत्वाच्छून्यताप्राया उदेति। सूर्य्यादिसर्गोत्तरं भविष्यन्तीनामाकाशाद्यभिधानामा समन्तात्काशते प्रकाशत इत्याद्यर्थदा॥ ८॥ तत्र प्रागुक्तजीवस्याहन्ताभिमानं तदा-प्रभृति द्विपरार्द्धपरिमिततदायुःकालक्रिमिं चाह—'अहन्ते'ति।" "इयमाकाशाहङ्कारकालसृष्टिर्न हिरण्यगर्भादेव किन्तु तद्देहोपहित-परमात्मसत्ताया एव, तस्या एव सर्व्वकारणत्वात् *।

योगवासिष्ठरामायणे विवर्त्तवाद एव सिद्धान्तितः †। श्रीशङ्कर-भगवत्पादसिद्धान्तादत्रायं विशेषः—तैराकाशादिवत् कालाख्यः कश्चिद्व्यावहारिकोऽपि पदार्थो नाङ्गीकृतः, तन्मते कालपदार्थस्याविद्याया-मेवान्तर्भावात्। आकाशसृष्ट्यनन्तरं वायुसृष्टिरिति शाङ्करसिद्धान्त-मर्य्यादा। योगवासिष्ठमते तु आकाशसृष्टेरनन्तरमहङ्कारकालयोः सृष्टिः। तथाच योगवासिष्ठमते कालस्योत्पत्तिमत्त्वादेव विनाशित्व-मुपाधिभेदेन च क्षणदिनमासवर्षादिव्यवहारविषयत्वं सिद्धम्।

* वासिष्ठतात्पर्य्यप्रकाशे ११ श्लोकव्याख्यायाम्।

† यस्मात्कटपटाकारपदार्थशतपंक्तयः। तरङ्गगणकल्लोलवीचयो वारिधेरिव। स एवानन्ततयोदेति यत्पदार्थशतभ्रमैः। कटकाङ्गदकेयूरनूपुरैरिव काञ्चनम् [यो० वा०, उत्पत्ति-प्र०, ९ स० ६९—७० ]

अत्र भ्रमशब्दप्रयोगेण पदार्थानां विवर्त्तरूपता प्रतिपादिता।

कालस्य प्रत्यक्षत्वाप्रत्यक्षत्वादिविषये यौगवासिष्ठे न ज्ञात इति तद्विषयकमितदीयं मतं विशिष्य किमपि वक्तुमशक्यम्।

आसीत् काश्मीरदेशे शैवागमानुयायिनां दार्शनिकानां सम्प्रदायविशेषो येषां शास्त्रं 'प्रत्यभिज्ञे'ति व्यवह्रियते, तत्र सोमानन्दनाथोत्पलाचार्याभिनवगुप्तादयो महान्त आचार्या निबन्धान् रचयांबभूवुः। * अस्ति महार्थमञ्जरी नामैतत्सिद्धान्तनिरूपणपरो ग्रन्थविशेषः [ प्रत्यभिज्ञा-मतम् ] प्राकृतभाषानिबद्धगाथामयः, यत्र संस्कृतभाषामयी टीका परिमलाख्या वर्त्तते—

महार्थमञ्जर्यामष्टादशगाथायाम् महेश्वरस्य मायाविभूतिरूपा जीवभावापादिकाः पञ्च शक्तय उक्ताः ;—

"सर्वकरः सर्वज्ञः पूर्णो नित्योऽसङ्कुचश्च।
विपरीत इव महेशो याभिस्ता भवन्ति पञ्च शक्तयः॥"

"ताश्च कला अविद्या रागः कालो नियतिरित्युच्यन्ते। कला तस्य किञ्चित्कर्तृत्वहेतुः। अविद्या किञ्चिज्ज्ञत्वकारणम्। रागो विषयेष्वभिषङ्गः। कालो भावानामवभासनानवभासनात्मा क्रमः। नियतिर्ममेदं न ममेदमित्यादिनियमहेतुः। एतत्पञ्चकं चागमेषु स्वरूपावरकत्वात् कञ्चुकमित्युच्यते।" †

प्रतिपादितं च शैवागमसिद्धान्ते आणव-मायीय-कार्मभेदेन त्रिविधं

---

* "मञ्ञअरो सव्वण्णो पुण्णो णिच्चो असंकुअंतो अ।
विवरीओ व्व महेसो जाहिं ता होंति पंच सत्तीओ॥"

† उक्तं तत्रैव परिमले—"यदुक्तं श्रीमत्स्वच्छन्दे—।
मलप्रध्वस्तचैतन्यं कलाऽविद्यासमाश्रितम्।
रागेण रञ्जितात्मानं कालेन कलितं तथा॥
नियत्या यमितं भूयः पुंभावेनोपबृंहितम्।
प्रधानाशयसंपन्नं गुणत्रयसमन्वितम्॥
बुद्धितत्त्वसमासीनमहङ्कारसमावृतम्।
मनसा बुद्धिकर्माक्षैस्तन्मात्रैः स्थूलभूतकैः॥ ( १५-१६ पृ० )

मलं, स एवात्मनो जीवभावापादकत्वादणुत्व इत्युच्यते। तत्राणवं मलमज्ञानरूपं, मायीयं च कलादिपृथिव्यन्तं * कार्म्मं च † धर्म्माधर्म्मात्मकमिति शिवसूत्रविमर्शिन्यामाचार्य्याभिनवगुप्तप्रणीतायां ( ११-१५ पृष्ठेषु ) स्पष्टम्। तत्राज्ञानरूपमाणवमलमेवेतरयोर्मलयोः कारणम्। तत्र मायीयमलान्तर्भूता कालशक्तिः। महार्थमञ्जरी-परिमले तस्या मायाकार्य्यत्वेन मायाविभूतिरूपत्वमभिहितम् ‡। माया च परमेश्वरस्य मोहनी शक्तिश्चिदेकरसे तस्मिन् भेदकल्पिका। तदुक्तं§ तत्रैव—

"एकरसे स्वभावे उद्भावयन्ती विकल्पशिल्पानि।
मायेति लोकपतेः परमस्वतन्त्रस्य मोहनी शक्तिः॥" ( ४५ पृ० )

श्रीमदाचार्य्यवर्य्याभिनवगुप्तपादैरीश्वरप्रत्यभिज्ञाविमर्शिन्यां कलाऽविद्याकालरागनियतीः पूर्वोक्तस्वरूपा यथायथं निरूप्य एताभिरेव युक्तस्य परमेश्वरस्य मायावशेन प्रमातृतापरपर्य्यायं जीवत्वं समुपपाद्य—

"एते च प्रमातृत्वस्नतयैव भान्ति,—इति तस्यैव शक्तिरूपाः प्रतिप्रमातृभिन्ना एव, कदाचित्तु नटमल्लप्रेक्षादावीश्वरेच्छया एकीभवेयुरपि" इत्यनेनैतासामानन्त्यं प्रतिजीवं भिन्नत्वं कुत्रचिच्च कतिपय जीवान् प्रत्यभिन्नत्वं प्रतिपाद्येश्वरेच्छातिरेकेणासां स्वरूपमेव नास्तीति प्रत्यपादि ;—"नह्येषामीश्वरेच्छातिरिक्तं निजं किमपि जीवितमस्ति।" इति। ( ईश्वरप्रत्यभिज्ञाविमर्शिनी ३अ० १आ० ८का० )

वस्तुतस्तु शैवागमसम्मतानि शिवशक्त्यादितत्त्वानि षट्त्रिंशत्-

* "धर्माधर्मात्मकं कर्म्म सुखदुःखादिलक्षणम्।" ( १५ पृ० )

† "मलमज्ञानमिच्छन्ति संसाराङ्कुरकारणम।"
"अज्ञानाद्बध्यते लोकस्ततः सृष्टिश्च संहृतिः।" ( ११ पृ० )

‡ "मायाविभूत्यात्मकं कलादिपञ्चकम्।" ( ५० पृ० )

§ महार्थमञ्जर्यां १७ गाथायाम।

संख्याकानि * येषामन्यतमं कालतत्त्वम्—तानि सर्वाणि परमेश्वर-शक्तिरूपाण्येव। उक्तं चैतद्विमर्शिन्याम् ( ३अ० १आ० ३का० ):—

"परमेश्वरस्य हि परमार्थत एताः शक्तयो यस्तत्त्वग्रामः।" इति परिणामपरिणामिन्योरभेदाभिप्रायेणैतदुक्तमिति द्रष्टव्यम्।

कालकलादीनामीश्वरेच्छातिरिक्तं स्वरूपं नास्तीति निरूपितम्। सा ईश्वरेच्छा केति विशेषजिज्ञासायां क्रियातिरिक्ता सा न भवतीति प्रतिपादितं क्रियेच्छयोरभेदाभिधानेनेश्वरप्रत्यभिज्ञायां द्वितीयाधिकारान्ते २७ कारिकायाम् † उपपादितं चेच्छाया एव क्रियारूपत्वं विमर्शिन्याम् ( २अ० १आ० ८का० )। सा चेच्छा—

श्रीमदभिनवगुप्तपादैरेव शक्तिशक्तिमतोरभेदमभिप्रेत्य, ईश्वरादभिन्नेत्युक्तं विमर्शिन्याम्। ( २ अ० ४ आ० २ का० )। एतेषां मते कालः प्रमातृनिष्ठस्तद्द्वारेण प्रमेये सम्पद्यते—

"कालः क्रममासूत्रयन् प्रमातरि विजृम्भमाणस्तदनुसारेण प्रमेयेऽपि प्रसरति" इति (ईश्वरप्रत्यभिज्ञाविमर्शिनी ३ अ० १ आ० ८ का०)।

एषां सिद्धान्ते परेश्वरस्य द्वे शक्ती—ज्ञानशक्तिः क्रियाशक्तिश्चेति। तत्र क्रियाशक्तेः परिणामः सर्वं जगत्। शक्तिद्वारेण च सर्वोपादानं शम्भुरेव—

"श्रीमत्सदाशिवोदारप्रारम्भं वसुधान्तकम्।
यदन्तर्भाति तत्त्वानां चक्रं तं संस्तुमः शिवम्॥"

इत्यभिनवगुप्ताचार्य्य ईश्वरप्रत्यभिज्ञाविमर्शिन्याम् ( ३अ० १ आ०

---

* "तानि च यथा—शिवः, शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या, माया, कला, अविद्या, रागः, कालः, नियतिः, पुरुषः, प्रकृतिः, अहङ्कारः, बुद्धिः, मनः, श्रोत्रम्, त्वक्, नेत्रम्, जिह्वा, घ्राणम्, वाक्, पाणिः, पादः, पायुः, उपस्थः, शब्दः, स्पर्शः रूपम्, रसः, गन्धः, आकाशः, वायुः, तेजः, आपः पृथिवी।"—

† इत्थं तथा घटपटाद्याभासजगदात्मना।
तिष्ठासोरेवमिच्छैव हेतुता कर्तृता क्रिया॥

प्रारम्भे ) सर्वेषां पदार्थानां परमेश्वर एव प्रतिभासनप्रतिपादनेनैतेषामुपादानातिरेकेण पृथक्सत्ता नास्तीति सूचितम्। एवं च कालस्य विश्वान्तर्गततया तस्यापि परमेश्वरात् पृथक् सत्ता निरस्ता।

पञ्चरात्रशास्त्रान्तर्गतायामहिर्बुध्न्यसंहितायां ज्ञानस्वरूपस्य ज्ञान-
[पञ्चरात्रमतम्] गुणकस्य* च ब्रह्मणः शक्त्यादयोऽन्ये पञ्च गुणाः प्रोक्तास्तेषां च शक्त्यादीनां पञ्चानां—

एते शक्त्यादयः पञ्च गुणा ज्ञानस्य कीर्त्तिताः। ( २ अ० ६१ )

इति ज्ञानगुणत्वमुक्त्वा

"ज्ञानमेव परंरूपं ब्रह्मणः परमात्मनः।" (२ अ० ६२ )

इत्यनेन ब्रह्मणो ज्ञानस्वरूपत्वमुपसंहृतम्। शक्तिस्वरूपं च—

"जगत् प्रकृतिभावो यः सा शक्तिः परिकीर्त्तिता।" (२ अ० ५७ )

इति प्रतिपादितम्। एषां भगवच्छक्तिरेव लक्ष्मीरिति कोर्त्त्यते।† अस्य ब्रह्मणः स्वरूपानतिरिक्तत्वं‡ तस्मादभेदेऽपि भिन्नत्वं§ प्रतिपादितम्।

---

* ज्ञानं नाम गुणं प्राहुः प्रथमं गुणचिन्तकाः।
स्वरूपं ब्रह्मणस्तच्च गुणश्च परिगीयते॥ ( २ अ० ५६—५७ )
ते च शक्तैश्वर्य्यबलवीर्य्यतेजोरूपाः। ( २ अ० ५७—६१ )

† क्रियाख्यो योऽयमुन्मेषः स भूतिपरिवर्त्तकः॥
लक्ष्मीमयः प्राणरूपो विष्णोः सङ्कल्प उच्यते।
स्वातन्त्र्यमूल इच्छात्मा प्रेक्षारूपः क्रियाफलः॥
उन्मेषो यः सुसंकल्पः सर्वत्राव्याहतः क्रती। ( ३ अ० २८—३१ )
स्फुरणमत उन्मेषपदार्थः।

‡ "जगत्तया लक्ष्यमाणा सा लक्ष्मीरिति गीयते।" ( ३ अ० ८ )

§ "आत्मभूता हि या शक्तिः परस्य ब्रह्मणो हरेः।
दैवी विद्युदिव व्योम्नि क्वचिद्द्योतते च सा"॥ ( ५ अ० ५ )
श्मीलनोन्मेषाख्याः कालिक्के उन्मेषो व्याख्यातः।

सेयं भगवच्छक्तिर्द्विधा, क्रियाशक्तिर्भूतिशक्तिश्च। भूतिशक्तिर्नाम सृष्टिशक्तिः। क्रियाशक्तिरेव भूतिशक्तेः प्रवर्त्तिका। भगवतः सङ्कल्प एव प्रेक्षणरूपं प्राप्य पश्चात् क्रियारूपतां प्रतिपद्यते[1]। एवं च भगवत्सङ्कल्प इच्छात्मैव क्रिया भवति। तथाच भगवदिच्छैव क्रियाशक्तिः।

"सोऽकामयत बहु स्यां प्रजायेय" ( तै० उ० २।८ ) इति सृष्टेः पूर्वं भगवदिच्छा संङ्कल्पः। "स ईक्षत लोकान्नु सृजा इति ( ऐ० उ० १।१ )" "तदैक्षत बहु स्यां प्रजायेय" ( छा० उ० ६।२।३ ) इति सृष्टि-प्राक्कालिकं भगवतः स्रष्टव्यविषयपर्य्यालोचनं प्रेक्षणम्। तदेव परि-स्पन्दात्मना परिणतं क्रियारूपतां बिभर्त्ति। एतदेव पाञ्चरात्रशास्त्रे सुदर्शनमित्युच्यते[1]। एवं चैतन्मते इच्छैव जन्यज्ञानरूपेण क्रिया-रूपेण च परिणमते। नित्यज्ञानात्मकं विष्णुस्वरूपं तु एतस्माज्जन्य-ज्ञानादन्यदेवेति मन्तव्यम्। ( क्रमशः )

---

[1] "योऽसौ नारायणो देवः परमात्मा सनातनः।
अहंभावात्मिका शक्तिस्तस्य तद्धर्मधर्मिणी॥
ताविमावेकधर्माणौ भेदाभेदकभावतः।
पृथक्त्वेन च शास्त्रेषु जगद्धेतुतयोदितौ॥" ( ६ अ० १—२ )

तस्य स्यामिति संङ्कल्पो भावतोऽभावतोऽपि वा॥
स्थानस्थानमुयोग्येन रूपेण परिवर्त्तते।
यत्तत् प्रेक्षणमित्युक्तं दर्शनं तत प्रणीयते॥
वस्तुतः कालतो देशाशस्य स्वव्याहतिर्हि या।
पूज्या सात सुशब्दार्थस्तस्य दर्शमनीर्य्यते॥" ( अ० ७—८ )

"सोऽयं सुदर्शनं नाम सङ्कल्पः स्पन्दनात्मकः।
विभज्य बहुधा रूपं भावे भावेऽवतिष्ठते॥" ( ३ अ० ३० )

# व्योष:

[ पूर्वतोनुवृत्तः ]

व्याकरणटीकासूपलभ्यमानानि कियन्तिचिद्व्योषवाक्यानि पूर्व्वमेव समुपहृतानि प्रियपाठकमहाभागेभ्यः, इदानीमपराण्यपि कानिचन सुपद्ममकरन्दत उदाह्रियन्ते ।

(२२) तमर्चितं भूमिपतिं प्रजानां राज्ञां मतं सम्मतमेकवीरम् ।
वरं सुराणामपि राक्षसी तावपश्यतां वारि परित्यजन्तम् ॥

कस्मिंश्चिद्धस्तलिखिते पुस्तके सम्मतमित्येतस्य स्थाने सङ्गतमित्युपलभ्यते । मुद्रिते रावणार्जुनीये (११।५१) द्वितीयचरणस्य स्थाने "द्विजन्मनां संयतमेकवीरम्" इति तृतीयचरणस्य वरमित्येतस्य स्थाने 'बुधम्' इति च पाठो दृश्यते । तेन

तमर्चितं भूमिपतिं प्रजानां द्विजन्मनां सम्मतमेकवीरम् ।
बुधं सुराणामपि राक्षसी तावपश्यतां वारि परित्यजन्तम् ॥

इत्येव स्वारसिकः पाठ इति प्रतिभाति ।

(२३) द्विजातिलोकैरुपगीयसे त्वं शुभेन साम्ना रथन्तरेण । रावणार्जुनीये १०।२८ ।

(२४) क्षेमङ्करा ये कमलासनाद्यास्तेषामपि त्वं भव भद्रकारः । रावणार्जुनीये (१०।२७) क्षेमङ्करा इत्येतस्य स्थाने भद्रङ्करा इति पाठः ।

(२५) आढ्यम्भवं येन चिराय जित्वा धनेशमाक्षिप्य समग्रवित्तम् ।
भ्राता दुराढ्यम्भवमेव यस्य दुर्यानभाजा धृतपुष्पकेण ॥
( ४।१।२०५ )

(२६) स्वाहङ्कुरो यः क्षतदेववर्गः (४।२।८६)
रावणार्जुनीये नैवोपलब्धावेतावस्माभिः ।

(२७) तवासिता नेयमिहास्ति धन्य' त्वया न भुक्ता ग्रथितश्च तत्र।
( ४।१।२०५ )

रावणार्ज्जुनीये ( १३।६३ ) 'उवासित' नेदमिहातिधन्य' त्वया न भुक्तां ग्रथितश्च धन्यम्' इति पाठः। अत्र सुपद्ममकरन्दधृत एव पाठः साधीयान्।

(२८) कां कारिकां कर्त्तुमिहागतोऽसि
वादिश्च कां वक्तुमिदं वद त्वम॥ ( ४।२।८७)

रावणार्ज्जुनीये (१२।३६)"........इहागतस्त्वं कां वावदिं वक्तुम्" इति पाठः। अत्रापि मकरन्दधृत एव पाठः साधीयान्।

(२९) यावद्देदं प्रवीह्णोनां (?) प्रसभं ह्नन्ति निघृणाः (४।३।१२३)।
रावणार्ज्जुनीये (१३।१४) "यावद्देदं पुनर्ह्णीनान्" इति पाठः।

(३०) कुर्वन्तुदरपूरं ये मुनिमांसानि राक्षसाः।
चर्मपूरं दधत्यङ्गैस्ते बलन्तस्य वल्लभाः॥ (४।२।१२४)
रावणार्ज्जुनीये १३।१५।

(३१) गोष्पदप्रं कथं देवा वस्त्रक्नोपमथापि वा।
तत्र वर्षति यस्यासौ रक्षिता रक्षसां पतिः॥ ४।२।१२५
रावणार्ज्जुनीये ( १३।१६ ) गोष्पदप्रामिति पाठो लेखकानवधानमूलकः।

(३२) निमूलकाषं कषति सरित्पूर इव द्विपान् ४।२।१२८।
रावणार्ज्जुनीये (१३।१७) द्विपान् इत्येतस्य स्थाने द्रुमान् इति पाठः।

(३३) ग्रस्त्रघातमरीन् घ्नन्ति ४।२।१३३।

(३४) जर्द्ध्वपूरं निषङ्गा वा ते शरैर्युधि पूरिताः।
जर्द्ध्वशोषं विशुष्कास्ते दावलीढा इव द्रुमाः॥
अस्य प्रतापसन्तप्ता बाहुच्छायामुपाश्रिताः। (४।२।१३८)
रावणार्ज्जुनीये १३।२३) विशुष्कास्ते इत्यत्र विशुष्का ये इति पाठो

लिपिकरप्रमादकृत:। 'बाहुच्छायामुपाश्रिता:' इत्यत्र 'बाहुच्छाय' न ये श्रिता:' इति पाठ:।

(३५) वहन् पुरुषबाहं यो जीवनाश्रं प्रणश्यति ४।२।१३९ रावणार्ज्जुनीये १३।२१।

(३६) मृगनाशं न नष्टा ये वीच्चार्थं कुपिता युधि।
नृपा घृतविलायन्ते विलीना: शरतापिता:॥ ४।२।१४०

अत्र वीच्चार्थमिति व्यक्तमेव लिपिकरप्रमादकृत:। रावणार्ज्जुनीये (१३।२४) वीच्चामुमिति शुद्ध: पाठ उपलभ्यते, नृपा घृतविलायमित्येतस्य स्थाने पुन: नृपाघातविलायमिति पाठ: प्रामादिक:।

(३७) द्यङ्गुलोत्कर्षमङ्गानि छिन्दाने द्विषतां युधि ४।२।१४४। रावणार्ज्जुनीये (१३।२८) 'छिन्दाना द्विषतां रणे' इति पाठ:।

(३८) भ्रूक्षेपं यो दधात्येव * याचकेभ्यो वसुन्धराम्।
तस्य कृत्येषु युध्यन्ते नीर:पेषं कथं भटा:॥

रावणार्जुनीये १३।३१

भ्रूक्षेपमादधात्येष सेवकाय वसुन्धराम्।
तस्य कृत्यस्य युध्यन्ते नीर: पेयं कथं भटा॥

इति पाठ:। अत्र सुपद्ममकरन्दधृत एव पाठ: समीचीन:, परं 'याचकाय' इत्येतस्य स्थाने 'सेवकाय' इति पाठ: साधीयानिति प्रतिभाति।

(३९) प्रतिकूला नृपा येऽस्य द्यग्रहात्यासं विहन्ति तान्।
द्यग्रहानुतर्षमात्मानं मधुपाययते शुभान्॥ ४।२।१५०

सुपद्ममकरन्दस्यादर्शान्तरे चतुर्थचरणस्य—मधुपायमते शुभान् इति पाठ:। रावणार्ज्जुनीये (१३।३४) प्रथमार्धे विहन्ति इत्येतस्य स्थाने निहन्तीति पाठ:, द्वितीयार्धस्य स्थाने 'त्र्यग्रहात्यासं

* हस्तलिखितपुस्तके अक्षरमिदमविस्पष्टम्, वकारोऽपि स्यात् षकारोऽपि स्यात्।

तथा नम्रान् मधु पाययते शुभम्' इति पाठः। अत्र द्वितीयार्धे इग्रहात्पुतर्षमात्मानं मधु पाययते शुभम् इति वा, अग्रहतर्षं तथा नम्रान् मधु पाययते शुभम् ( शुभान् ) इति वा पाठः समीचीनः। प्रायेण काशिकागतान्येवोदाहरणानि रावणार्जुनीयकाव्ये पद्येन सन्दृब्धानुपलभ्यन्ते, मुद्रितायां च काशिकायां इग्रहात्यासम्, इग्रहतर्षमितुदाहरणद्वितयमुपलभ्यते न तु अग्रहतर्षमिति। आत्मानं पाययते इत्युक्तावात्मनेपदमपि सूपपद्यते, अतून् समूलघातं निहत्य रणश्रमापनोदायाकण्ठं मधु पिबतीत्यर्थोऽपि सङ्गच्छते, तेन प्राथमिक एव पद्यो ज्यायानित्यापाततः प्रतिभाति। परं द्वितीयीकेऽपि पद्ये प्रथमार्धेऽनम्राणां समुद्धरणं प्रतिपाद्य द्वितीयार्धे नम्राणां मधुपायनं प्रतिपादितम्, तेन च भोगसम्पादनेन तेषां तस्मिन् परमार्थत एवापरागाभावस्तेन क्रियाफलस्य कर्त्तृगामित्वादात्मनेपदसिद्धिः। इग्रहात्यासमित्युक्त्वा अग्रहतर्षमिति कथने वैचित्र्यमपि।

(४१) नामग्राहं समाख्याता यस्मै संसदि पार्थिवाः।
नामादेशं मुदे तेषां सम्मानमादिशत्यसौ॥ ४।२।१५१

मकरन्दस्यादर्शान्तरे सम्मानान् इति पाठः।

रावणार्जुनीये ( १२।२५ ) "येऽस्मै सपदि पार्थिवाः" इति "सम्मानादि दिशत्यसौ" इति च पाठः।

(४२) स्नावनीयानहं मन्ये तिर्यक्कारं गतान् नरान् (४।२।१५३)
(मकरन्दस्यादर्शान्तरे—गतार्थवानिति प्रामादिकः पाठः)

रावणार्जुनीयम् १२।२७।

(४३) मुखतःकारमाख्यासि देवांस्तान् विजितान् रणे।
( ४।२।१५४ )

रावणार्जुनीये ( १२।२८ ) 'देवानसिजितान् रणे' इति पाठः।

(४४) नानाकृत्वा गिरं भूतः कोपादित्यवदत् ततः। (४।२।१५४)
आदर्शे आदौ 'नानाकृत्य' इति विलिख्यानन्तरं शोधनावसरे

'नानाकृत्वा' इति कृतम्। 'भूत:' इति लिपिकरप्रमादकृत: "दूत" इति स्यात्।

रावणार्जुनीये (१३।३८) भूत इत्यस्य स्थाने दूत इति पाठ:। मत इत्येतस्य स्थाने पुन: इति पाठ:। मकरन्दे एकस्यैव श्लोकस्य मुखत:कारमिति प्रथमार्धम्, नानाकृत्वेति द्वितीयार्धम्। रावणार्जुनीये पुनरीदृश: पाठ:—

श्लाघनीयानहं मन्ये तिर्यक्कारं गतान्नरान्।
तिर्यक्कृत्वा गता ये तु न ते पश्यन्ति तं प्रभुम्॥
मुखत:कारमाख्यासि देवानसिजितान् रणे।
मुखत:कृत्य नाख्यासि राक्षसान् पक्षपातवान्॥

(४५) स्वामिनं ये समुद्दिश्य बहुधाकारमप्रियम्।
भाषितं न द्विधाकृत्वा न त्रिधाकृत्य वा त्वया॥ (४।२।१५४)

मकरन्दस्य केषुचिदादर्शेषु 'बहुधानावमप्रियम्' इति पाठ:, स स्फुटमेव लिपिकरप्रमादकृत:।

रावणार्जुनीयम् १३।४०।

(४६) ततोऽन्तिकाद् दृष्टमनिष्टदृष्टं दशाननो दर्शितभीमकायम्।
स्तोकादागतस्वैरमनार्थ्यमादृतं (?) दूरादुपेतं धृतयुद्धबुद्धिम्॥
(४।४।७)

रावणार्जुनीये (१८।१)

स्तोकाद्गतं वैरमनार्यचित्तं दूरादपेतं धृतयुद्धबुद्धिम्।
ततोऽन्तिकाद्दृष्ट···दृष्टं दशाननं दर्शितभीमकायम्॥

इति पाठ:। अनयो: संवादेनायमेव पाठ: कल्प्यते—

ततोऽन्तिकाद् दृष्टमनिष्टदृष्टं दशाननं दर्शितभीमकायम्।
स्तोकाद्गतं स्वैरमनार्य्यचित्तं दूरादुपेतं धृतयुद्धबुद्धिम्॥ इति।

(४७) मध्ये गुरुं स्यन्दनमादधानं दोष्णां सहस्रेण विचेष्टमानम्
(४।४।८)

रावणार्जुनीये (१९।४)—

मध्ये गुरुं स्यन्दन.................................... ।

दोष्णां सहस्रेण......शात् क्षिपन्स्तथात्मनेे लघ्वतमं दशास्य: ॥

(४८) शक्तिं दधानं महतीतमां तम् ४।४।२७।

रावणार्जुनीये ( १९।१९) महतीतरामिति पाठः ।

(४९) अपद्गति दूरमवाप्य वेगात् पतत्सु वृष्ट्यामुपलव्रजेषु ।

पत्काषिण: सादिगणा हताश्वा: पदातिभिस्तत्र समं विचेरु: ॥

(४।४।७३ )

रावणार्जुनीये ( १९।२६ ) द्वितीयार्धम्—'स्वपद्गति दूरमपास्य वेगात् पतत्सु पृष्ठ्यामुपलब्धजेषु' इति पठ्यते। तत्र 'उपलब्धजेषु' इति व्यक्तमेव लेखकानवधानमूलकः ।

(५०) सन्निपत्य करिणीव लीलया स्निग्धमिष्टकचितं गृहं यथा ।

( ४।४।८२ )

रावणार्जुनीये (१९।२४) सन्निपात्य इति पाठ: ।

(५१) सम्परीत्य वनमालभारिणी (४।४।८)

रावणार्जुनीये ( १९।२५ ) "गां प्रतीत्य वनमालभारिणीम्" इति पाठ: । अत्र 'गां परीत्य वनमालभारिणीम्' इति पाठ: समीचीनतया प्रतिभाति ।

(५२) स आयसेन प्रमदेन युक्त: (५।१।४)।

रावणार्जुनीयम् १३।१ ।

(५३) एकपदि प्रयाति संहतपुङ्खि मूर्च्छति ।

प्रहस्तेनोभयाहस्तिनिष्पिष्टसारथीनि ॥ ( ५।१।११९ )

(५४) कूर्पासकान् कार्दमिकान् दधानास्तथा परेषां स्वधिका विरेजु: ( ५।२।१२५ )

आदर्शान्तरे कार्पटिकान् इति पाठ: ।

रावणार्जुनीये ( १४।४२ )—कूर्पासिकान् कार्दमिकान् दधाना-

स्तथापरे शाकलिका विरेजुः' इति पाठः। 'लाक्षारोचनाशकलकर्द-माट्ठक्' इति सूत्रस्योदाहरणमिदं श्लोकार्द्धमिति शाकलिकशब्दो-ऽप्यत्रापेक्षित एव। तेन—'कूर्पासकान् कार्दमिकान् दधानास्तथापरे शाकलिकान् विरेजुः' इत्येव पाठः समीचीनः।

[ पदातयो भूमिभृतः पुरस्ताद्विवस्वानाः कम्पितमेदिनीकाः इति शेषार्धम्। ]

(५५) कात्रेयकं श्रौघ्नसमाथुरोद्धा सराष्ट्रियामान्त्वविकौदपानाः।
पदातयः शाकलिकादयस्ते जग्मुः पुरोवेगितमीश्वरस्य॥
५।३।६

रावणार्जुनीये ( १४।६३ )

कात्त्रेयसस्रौघ्नसमाथुरोत्साः सौराष्ट्रियाः पात्त्रविकौदपानाः।
पादातयः शाकलिकादयस्ते जग्मुः पुरो वेगितमीश्वरस्य॥

इति पाठः। "कत्त्र्यादिभ्यो ढकञ्" ( ४।२।९५ ) इति सूत्रेण कत्त्रिशब्दाड्ढकञ्-विधानादत्र कात्त्रेयकपाठ एव समीचीनः। वाह्लीकग्रामेभ्यश्च ( ४।२।११७ ) इति सूत्रस्थकाशिकायां शाकलिक-मान्यविकशब्दद्वयदर्शनान्मान्यविकौदपाना इति द्वितीयचरणे पठितव्यम्। तेन—

कात्त्रेयकस्रौघ्नसमाथुरोत्साः सौराष्ट्रिया मान्यविकौदपानाः।
पादातयः शाकलिकादयस्ते जग्मुः पुरो वेगितमीश्वरस्य॥

इति पठितव्यमिति प्रतिभाति।

औदपाना इत्यत्र उदपानशब्दात् "शुण्डिकादिभ्योऽण्" (४।३।७६) इत्यण्।

(५६) ह्रा कर्तीति ग्रामेयको नागरस्य लोकः ( ५।३।६ )।

रावणार्जुनीये ( १४।६२ ) "यद्राजकीयाः सह पर्वतीयैर्ग्रामेयको नागरकस्य लोकः" इत्युपलभ्यते।

(५७) तदैषमस्त्यं प्रविचारयन्तः काम्यं ययुः केचिददूरवाह्लाः।
ह्रस्त्यं तथा श्वस्तनमात्मवृत्तमन्ये चिरं सङ्कथयाम्बभूवुः॥
(५।३।१०)

रावणार्जुनीये ( १४।६१ ) तत्रैषमस्त्यमिति पाठः ।

(५८) 'पन्थके रेणुभिर्विना' [ इतरसंज्ञायामपि व्योषेण प्रयुक्तम् ] ( ५।२।५८ )

(५९) वृथा करोमि तस्याहमौपाध्यायकमागमम् ( ५।२।१०९ ) रावणार्जुनीये ( १५।२० ) व्यलीकरोमि इति पाठः । प्रकरण-पर्य्यालोचनया पुनः 'वृथा करोमि' इत्येव पाठः समीचीनतया प्रतिभासते । तथाच मन्दोदरीं प्रति रावणवचनम्—

वित्तमाकरिकं तस्य शौण्डिकादि च सुन्दरि ।
राज्यं पित्र्यं च विस्तारि ग्रहीष्यामि गतायुषः ॥
व्यलीकरोमि तस्याहमौपाध्यायकमागमम् ।
पैतृकं च यशः शुभ्रं वञ्चयित्वाद्य मायया ॥ इति ।

(६०) जनमर्जुनकं दृष्ट्वा (५।२।१२७ ) ।

रावणार्जुनीये (१५।३२) 'जनमर्जुनकं जित्वा' इति पाठः, स एव च समीचीनः । तथाच समग्रः श्लोकः—

जनमर्जुनकं जित्वा नियुक्तं पुरपालनें ।
आपूपिकानि रक्षांसि भोजयिष्यामि कामतः ॥

(६१) शालीकानिकयाष्टीकशाक्तिकप्रजसङ्कुलम् ( ५।३।२४९ ) । रावणार्जुनीये ( १५।३६ ) लिपिकरप्रमादाच्छालीकस्याकारस्त्रुटितः ।

(६२) न कर्णजाहं क्षतिवर्जनस्य यावत् प्रमाता युधि कर्णजातम् ( ५।४।८६ )

(६३) इतस्ततः सङ्गतिथैर्मनुष्यैः शिलीमुखैः पूगतिथैर्निरस्तैः ( ५।४।१२५ )

रावणार्जुनीये ( १६।५४ ) सङ्कटितैरिति निरस्तैरिति च पाठः । तत्र सङ्कटितैरिति पाठः स्फुटमेव लिपिकरप्रमादकृतः । निरस्तैरिति पाठस्तु समीचीन एव । ( क्रमशः । )

श्रीः ।

# चन्द्रलेखासट्टकम्

## प्रथमं यवनिकान्तरम् ।

(१) भद्दं देउ गआणणो भअवई भासा मुहे भाउ सा
भूदेवा कुसलं कुणन्तु कइणो* सव्वे पसीदन्तु णो ।
आनन्दाउलमाणसा सहिअआ सज्जन्तु णिम्मच्छरं
†अच्छेसुं परिकीलिउं रससुहासोत्तेसु सुत्तेसु‡ णो ॥१॥

( नाद्यन्ते ततः प्रविशति सूत्रधारः )

सूत्रधारः—

(२) पणमह सुइ§राअहंसएसुं
हरणअणेसु मुहम्बुजूसुएसुं ।
पअकमलपहाविअं उमाए
¶पढमणइम्मि अवङ्गभिङ्गिमालं ॥२॥

अवि अ

देवे चन्दसिखामणिम्मि पणए सल्लोअकल्लोलिणिं
चूडामण्डणलालिअं ||णिअपहारत्तं सुअग्गे ण जे ।

---

* कुसली + अच्छेसुप्परि ‡ 'सुत्तंस' § सुल ¶ 'पठमणइह्नि' इति क-पाठः। पठमणइम्मि इति ख-पाठः || पिअ०

---

(१) भद्रं ददातु गजाननो भगवती भाषा मुखे भातु सा
भूदेवाः कुशलं कुर्वन्तु कवयः सर्वे प्रसीदन्तु नः ।
आनन्दाकुलमानसाः सहृदयाः सज्जन्तु निर्मत्सरम्
अच्छेषु परिक्रीडितुं रससुधास्रोतःसु सूक्तेषु नः ॥ १ ॥

(२) प्रणमत शुचिराजहंसकेषु
हरनयनेषु सुखाम्बुजोत्सुकेषु ।
पङ्ककमलप्रभावितामुमायाः
प्रथमनतानपाङ्गभङ्गीमालाम् ॥ २ ।

( प्रविश्य पारिपार्श्विकः )

पारिपार्श्वकः। (१) आणवेदु भावो।

सूत्रधारः। (२) कस्स णट्टणं आढप्पइ तुम्हेहिं।

पारिपार्श्वकः (३) सट्टको नट्टिदव्वो।

सूत्रधारः। (सहर्षम्) (४) अयं अवसरो अम्हाणं पओअ-विसाणं दंसिदुं। णिहसो* खु सट्टओ णट्टआणं कईणं च विअड्ढदाए†। (विचिन्त्य)

सो सट्टओ सहअरो किल णाडिआए
ताण‡ चउज्जवणिअन्तरबन्धुरङ्गो।
§चित्तत्थसुत्तिअरसो परमेक्कभासो
विक्खम्भआदिरहिओ कहिओ बुहेहिं ॥५॥

कस्स उण सरस्सईणीसन्दो सट्टओ णट्टिदव्वो।

पारिपार्श्वकः। किं वि अच्छरीअं सुणादु भावो। वाअसवअणादो पञ्चमराओ उदञ्चइ, णिम्बविडपादो¶ मोअं उप्पज्जइ,

* णिअओ † विअड्ढ ‡ साणिं § सतिअ० ¶ ०विटपादो

(१) आज्ञापयतु भावः। [ "भवान्" इति मातृकायां पाठः। ]

(२) कस्य नर्त्तनमारभ्यते युष्माभिः।

(३) सट्टको नर्तितव्यः।

(४) अयमवसरोऽस्माकं प्रयोगविज्ञानं दर्शयितुम्। निकषः खलु सट्टको नर्त्तकानां कवीनाञ्च विदग्धतायाः।

स सट्टकः सहचरः किल नाटिकाया-
स्तस्याश्चतुर्जवनिकान्तरबन्धुराङ्गः।
चित्रार्थसूक्तिरसः परमेकभाषो
विष्कम्भकादिरहितः कथितो बुधैः ॥ ५ ॥

कस्य पुनः सरस्वतीनिष्यन्दः सट्टको नर्त्तितव्यः।

कारक्खरफलादो पीऊसरसो पसरइ जं देवमन्दिरबाहिरालिन्द-सम्मज्जणादिवावारमत्तपारिणाहिन्तो पारसवपसूहिन्तो* सञ्झासमअ-संफुल्लमल्लिआमहुरमअरन्दनीसन्दगब्भो सन्दब्भो पवट्टइ । (१)

सूत्रधारः । (२) मा एव्वं । ण खु णिन्दणिज्जा† तत्तभवन्तो पारसवा । जदो

जाणं ‡ बम्हणालोअपादजुअलीसुस्सूसणं भूसणं
जाणं णिम्मलकव्वचव्वणकहासंमीलणं कीलणं ।
वंसे जाण अ सुद्धगुत्तसुहओ सो रुद्दमुत्तामणी
जाओ §ताण थुईसु कस्स भुवणे जीहा निरीहा भवे ॥६॥

पारिपार्श्वकः । ( ३ ) तस्स रुद्दस्स सिरिअण्ठस्स अ सिस्सो रुद्ददासनामहेओ किल तस्स कई ।

सूत्रधारः । (४) ता उववज्जइ¶ । तरणिकिरणजालणिरत्थमन्दादो एव्व अरविन्दादो महुअराणन्दकन्दो पसरइ मरन्दनीसन्दो ।

* ०हिन्तो † णीदणिज्ज ‡ जंह § थाण ¶ उपपज्जइ

(१) किमपि आश्चर्यं पश्येति भावः । वायसनन्दनात् पद्मरागः उद्गच्छति, निम्बविटपाच्चोचमुत्पद्यते, कारस्करफलात् पीयूषरसः प्रसरति, यद्देवमन्दिरबाह्यालिन्दसम्मार्जनादिव्यापारमात्रपरायणात् पारशवपशोः सन्ध्यासमयसंफुल्लमल्लिकामधुरमकरन्दनिष्यन्दगर्भः सन्दर्भः प्रवर्तते । *

(२) मैवम्, न खलु निन्दनीयास्तत्रभवन्तः पारशवाः । यतः —

येषां ब्राह्मणलोकपादयुगलीशुश्रूषणं भूषणं
येषां निर्मलकाव्यचर्वणकथासंमीलनं क्रीडनम् ।
वंशे येषां च शुद्धगुणसुभगः† स रुद्रमुक्तामणि-
र्जातस्तेषां स्तुतिषु कस्य भुवने जिह्वा निरीहा भवेत् ॥

(३) तस्य रुद्रस्य श्रीकण्ठस्य च शिष्यो रुद्रदासनामधेयः किल तस्य कविः ।

(४) तदुपपद्यते । तरणिकिरणजालनिरस्तमन्दादेवारविन्दान्मधुकरानन्दकन्दः प्रसरति मकरन्दनिष्यन्दः ।

* गर्भाः सन्दर्भाः प्रभवन्ति । † शुद्धगुणसुभगः

पारिपार्श्वकः। (१) किं तारिसो ताण रुद्दसिरिअकण्ठाण सिक्खाविसेसो।

सूत्रधारः। (२) किं भणइ*।

बडदलगओवि रुद्दो
　　वक्खाणं जाण सुणिअ सिरअम्पं।
मन्दन्दोलिअचन्दं
　　फन्दन्तफणिन्दकुण्डलं देइ ॥ ७ ॥

पारिपार्श्वकः। (३) णमो महप्पाणं। तेण आवज्जिआ सज्जणा।

सूत्रधारः। (४) कहं।

पारिपार्श्वकः। (५) पच्चव्वज्जइ पुलओ
　　हिअअं उवणेइ आसणं सुहअं।
उवहरइ अग्घमच्छी
　　सज्जणकण्णादिहीण सुत्तीणं ॥ ८ ॥

---

* भणाइ

---

(१) किं तादृशस्तयोः रुद्रश्रीकण्ठयोः शिक्षाविशेषः।

(२) किं भण्यते—

वटतलगतोऽपि रुद्रो
　　व्याख्यानं ययोः श्रुत्वा शिरःकम्पम्।
मन्दान्दोलितचन्द्रं
　　स्पन्दमानफणीन्द्रकुण्डलं ददाति ॥ ७ ॥

(३) नमो महात्मभ्याम्। तेनावर्जिताः सज्जनाः।

(४) कथम्।

(५) प्रत्युद्व्रजति पुलको
　　हृदयमुपनयत्यासनं सुभगम्।
उपहरत्यर्घ्यमक्षि
　　सज्जनकर्णातिथीनां सूक्तीनाम ॥ ८ ॥

किञ्च—

(१) कव्वणिबन्धे कइणो*
घम्मअलं ओहरन्ति मुहलग्गं ।
आनन्दबाहसिसिरा
सिरअम्पसमीरणा खु विबुहाणं ॥ ९ ॥

अब्भत्थिअं †चाणेण । जह—

अगणिअ णवन्ति दोसं
अणिरूविअ णिअडदाकअं णिन्दं ‡ ।
§पम्हुसिअ तं ¶असूअं
रसिआ ओदंसअन्तु किदमिअं ॥ १० ॥

सूत्रधारः । (२) किं अण्णं । पाअडबन्धो एव्व रसिआणं आणन्दं कन्दलेइ । जदो

जह होइ भवरमाला
मालईमाला अ महुआणं ।

* 'कइणो' † चाणेण ‡ णिन्दं § पम्हुसिअ ¶ असूअं ।

(१) काव्यनिबन्धे कवि-
र्धर्मजलमपहरन्ति मुखलग्नम् ।
आनन्दबाष्पशिशिराः
शिरःकम्पसमीरणाः खलु सुधीनाम् ॥ ९ ॥

अभ्यर्थितं चानेन यथा—

अगणयित्वा नयेति दोषम्
अनिरूप्य निकृष्टताकृतां निन्दाम् ।
प्रस्मृत्य तामसूयां
रसिका अवतंसयन्तु कृतिमेताम् ॥ १० ॥

(२) किमन्यत् । प्राकृतबन्ध एव रसिकानामानन्दं कन्दलयति । यतः—
यथा भवति भ्रमरमाला
मालतीमाला च मधपानाम् ।

तह होइ अण्णभासा
पाअउभासा अ रसिआण ॥

सूत्रधारः । (१) णं तेण च्चिअ भणिअं—

भासा खु पाअडमई
विसओ सिरिमाणवेअचरिअसिरी ।
रसगब्भो सन्दब्भो
सज्जणपीदीणं जोव्वणं *एअं ॥

सूत्रधारः । (२) केण णिजुत्ता पुण पअट्टह सट्टअणट्टेण ।

पारिपार्श्वकः । (३) तस्स एव्व णिरन्तरोणमन्त-सिरिमन्त-सामन्त-†विअ - मउडन्त-‡णिवडन्त-माणिक्क-मणि-समूह-मोह-लेहा-पल्लविअ-पाअपीठस्स§-खण्डपरसु-सिहण्ड-ससिखण्ड-पण्डर-महामहन्त - महिअ-जस-पूर-कप्पूर-णिअर-पव्वआअद¶-भुवणन्तरालस्स अदि-धवल-हिअअ-फलिह-||पडिफलन्त-परमेसर-पअ-पल्लवस्स समर-मुहवलामोडि-गहिअ-जय-लच्छी-धम्मिल्ल-पल्लत्थ- मल्लिअ-मल्ल- परिमलासङ्ग- भिङ्ग- रिञ्छोली - संसङ्घ **लोलुहण्ड-मण्डलग्ग-मण्डिअ- पअण्ड-भुअदण्डस्स रिउवल-सलह-लेहि-चडुल- जाम्नाजाल-††ज्जलन्तअ-पआव-पावअ-पाअर-परिरक्खिअ -सअल- भुवणअलस्स अच्छिण्ण- दिण्ण-सुवण्ण-‡‡वदण-समिद्धि-

* गोरअ्खण † पिअ ‡ 'निपडन्त' § 'पाअवीढस्स' इति समीचीनम् ¶ आयत || फडि ** संसज्जअ †† आलअज्जलन्त ‡‡ दअण

तथा भवति अन्यभाषा प्राकृतभाषा च रसिकानाम् ॥

(१) ननु तेनैव भणितम्—

भाषा खलु प्राकृतमयी
विषयः श्रीमानवेतचरितश्रीः ।
रसगर्भः सन्दर्भः
सज्जनप्रीतीनां यौवनमेतत् ॥

(२) केन नियुक्ताः पुनः प्रवर्त्तध्वं सट्टकनर्त्तने ।

(३) तस्यैव निरन्तरावनमच्छ्रीमत्सामन्तपिककमुकुटान्तर्निपतन्माणिक्यमणिसमूहमयूखलेखा-

* चषकर इति ख-पाठः ।

समिद्ध-*मणि-मन्दिर-वलही-जाल-कीलन्त - सअल - दरिद्द - लोअस्स सव्वभूदाणुकम्पिणो सम्पदं किद†-करणिज्जदाए जोव्वणसुखं अणुहोन्तस्स राआहिराअपरमेसरस्स सिरिमाणविअस्स अत्थाणमण्डव-‡मण्डणेण पण्डिअमण्डलेण ।

किञ्च—

अस्सिं खु सट्टअवरे णिअभत्तुअस्स
§चक्केसरत्तणकराण गुणाण ठाणं ।
चारु¶समुव्वहइ तं किल चन्दलेहं
‖अङ्गेसरस्स तणअं सिरिमाणविओ ॥

सूत्रधार:। (१) अहो आअदा एव्व जवणिअन्तरे महाराअदेवीओ काढूण भूमिअं अय्यो अय्यवलहा अ। ता अम्हेहि **अविसेस-करणिज्जं ††सज्जीअदु ।

* समिन्ध † अ ‡ मण्डप § चक्केसु- ¶ चारुत्त ‖ अङ्गसरस्स ** अत्र "ता अम्हेहि वि सेसकरणिज्जं सज्जीअदु" (तत् अस्माभिरपि शेषकरणीयं सज्जायताम्) इति पाठ: समीचीनतया प्रतिभाति। †† संजीयदु

पल्लवितपादपीठस्य खण्डपरशुशिखण्डशशिखण्डपाण्डुर (सर्वत: प्रसर) त्कीर्त्तियश:पूरकर्पूरनिकर-पवित्रायमाणभुवनान्तरालस्य अतिधवलहृदयस्फटिकप्रतिफलितपरमेश्वरपदपल्लवस्य समरमुख-बलात्कारगृहीतजयलक्ष्मीधम्मिल्लपर्य्यस्तमल्लिकामाल्यबहलपरिमलासङ्गभृङ्गश्रेणीसंग्रथितनीली-कृतमण्डलाग्रमण्डितप्रचण्डभुजदण्डस्य त्रिपुरनगरभस्मीकृत्स्नाराधनावाप्तप्रताप-पावकप्राकारपरिरक्षितसकलभुवनतलस्य अच्छिन्नदत्तसुवर्णरत्नसमलङ्कृतमणिमन्दिरवलभीजाला-क्रीडत्सकलदरिद्रलोकस्य सर्वभूतानुकम्पिन: साम्प्रतं कृतकरणीयतया यौवनसुखमनुभवतो राजाधिराजपरमेश्वरस्य श्रीमानवितस्य आस्थानमण्डपमण्डनेन पण्डितमण्डलेन ।

अस्मिन् खलु सट्टकवरे निजभर्त्तृकस्य-
चक्रेश्वरत्वकराणां गुणानां स्थानम् ।
चारु समुद्वहति तां किल चन्द्रलेखाम्
अङ्गेश्वरस्य तनयां श्रीमानवित: ॥

(१) अहो आगतावेव यवनिकान्तरं महाराजदेव्यौ: कृत्वा भूमिकामार्य्य आर्य्यवल्लभा च । तदस्माभिर्विशेषकरणीयं सज्जायताम् ।

( इति परिक्रम्य निष्क्रान्तौ )

( ततः प्रविशति राजा देवी विदूषको विभवतश्च परिवारः )

राजा । ( स्वगतम् ) (१) अहो किअकरणिज्जाणं पि आसाए अणवसाणदा । जदो

सव्वे साहु पवट्टिदा खु पउरा* सन्तोसिआ बम्हणा
विक्तेहिं †कउसच्चएहि विहिदा देवा पसादुम्मुहा ।
पत्ता चेअ चउस्समुद्दरसणालङ्कारिणी मेदिणी
दाणिं सत्तसमुद्दमुद्दिअमिमं पत्थेइ मे माणसं ॥१४॥

( प्रकाशम् ) ( समन्तादवलोक्य सहर्षम् )

(२) देवि, इमस्सि सुरहिसमअ‡समारम्भसम्भरिज्जन्तसिरिमणहर-धरणिकमलिनीकमलाअन्तम्मि§ अम्हाणं महाणअरम्मि मअरन्दगण्डूसण-सम्पादेदि¶ यहिच्छ‖मुच्चलन्त**च्छव्वअरिञ्छोलिलञ्छिणं†† अच्छीण‡‡ (?) ।

* पउरा † कअ—क ; कभि—ख ‡ समए § कमलायमाणे ¶ देहि हिद हिच्छ—क । देहि यहिच्छ—ख । ‖ मुच्चन्त । ** च्छव्व । †† लञ्छिणं ‡‡ अच्छीणं ।

तथा भवत्यग्रभाषा
प्राकृतभाषा च रसिकानाम् ॥

(१) अहो कृतकरणीयानामप्याशाया अनवसानता । यतः—

सर्वे साधु प्रवर्त्तिताः खलु पौराः सन्तोषिता ब्राह्मणा
वित्तैः क्रतुसञ्चयैर्विहिता देवाः प्रसादोन्मुखाः ।
प्राप्ता चैव चतुःसमुद्ररशनालङ्कारिणी मेदिनी
इदानीं सप्तसमुद्रमुद्रितामिमां प्रार्थयते मे मानसम् ॥१४॥

(२) देवि ! अस्मिन् सुरभि*समयसमारम्भसम्भ्रियमाणश्रीमनोहरधरणीकमलिनीकमलायमाने अस्माकं महानगरे मकरन्दगण्डूषणं सम्पादयति यथेच्छमुच्चलत्षट्पदश्रेणिलाञ्छितः† (?) ।

* सुरभिसमय । † लञ्छितः ।

(१) एअं खु

लोलन्ताणङ्गतुङ्गद्धअपडपवणन्दोलिआआसगङ्गं
*खेलन्तुद्दामरामाचलणरणिअसुहाअन्तकं केलिजालं ।
कीलन्तासिसल्लोअं पअडिअमुरवाडम्बरं तम्बचूड-
क्कोडं घोलन्तकोलाहलमुहलदिसाचक्क†मेक्कं विभाइ ॥१५॥

देवी । ( सर्वतो विलोक्य सहर्षम् ) ( १ ) अय्यउत्त, किं वण्णीअदि इमाए णअरीए सुरहिसमअसमारम्भजनिअं सोहग्गं । एसा खु—

तारुण्णेण रमणिव्व ‡सुरूवरम्मा
जोण्हारसेन रअणिव्व फुरन्तचन्दा ।
फुल्लुग्गमेण §लदिएव्व पवालपुण्णा
रेहेइ हन्त णअरी मअणङ्गमेण ॥१६॥

---

* खेलदुद्दाम † दिसाअक्क ‡ सुरअ ।
§ इदिएव्व

---

(१) एतत् खलु
लोलदनङ्गतुङ्गध्वजपटपवनान्दोलिताकाशगङ्गं
खेलदुद्दामरामाचरणरणितसुखायमानं केलिजालम् ।
क्रीडदसिपल्लीकं प्रकटितमुरजाडम्बरं ताम्रचूड-
क्रोडं घूर्णमानकोलाहलमुखरितदिक्चक्रमेकं विभाति ॥१५॥

(२) आर्यपुत्र, किं वर्ण्यतेऽस्या नगर्याः सुरभिसमयसमारम्भजनितं सौभाग्यम् । एषा खलु—

तारुण्येन रमणीव सुरूपरम्या
ज्योत्स्नारसेन रजनीव स्फुरच्चन्द्रा ।
फुल्लोद्गमेन लतिकेव प्रवालपूर्णा
राजते हन्त नगरी मदनागमेन ॥१६॥

राजा—(१) अहो सव्वदो रमणीअत्तणं णअरीए*। तह अ-

†द्दुमन्तभमरच्छडाकलविराविआ वाविआ

‡फुरन्तमअणच्चणाविहवणन्दिरं मन्दिरं।

लसन्तणवणट्टई§ललिअणट्टणं पट्टणं

वलन्तमलआणिलाअमसिलाहिणो साहिणो ॥१७॥

विदूषकः—(२) भो वअस्स पेक्ख पेक्ख। मन्दमन्द-¶फन्दन्त-मलआणिल - केलि - घोलिरुप्पडिअ-||विसरन्त - बिसिनी - धूलि - पाली-**विउल-कंचण-विआण-सोहिणी भुअङ्ग-लोअ-††कर-कमल-सङ्गअ-गङ्गेअ-‡‡सीगमुहसङ्गलत्-सन्तद-कुङ्कुम-वारि§§धारा-¶¶सिच्चन्त-सअल-पहिअलोआ ||||वम्महकरप्फालिअ-धणुह-कोलाहल-मुहल - कउहामुहा दिवो ***विराअविअ-मुज्झन्त-सञ्चरन्त - मुद्धाहिसारिआ - चलण-झणझणाअन्त- णेउर-विराव-मुहराविअ मार-वीर विजअ-भेरी-मणहरा मअं वि मएदि रइं वि रमएदि आणन्दं वि आणन्देइ दप्पं वि दप्पेइ इअं††† महाणअरी।

* णअरीए † द्दुमन्तभमरच्छटा ‡ फरन्त...च्चणा § इन्त अ ¶ फुरन्त || विसन्त ** विउल इति पाठान्तरम्। ††लोल इति पाठान्तरम्। ‡‡ सीहहमसङ्गलस—क, सीहमुहंग-सङ्गलसत्—ख §§ चिरिचिरिआ इति पाठान्तरम्। ¶¶ सिच्चत...वहिअ ||||पम्महकरम्फालिअं *** विराअविग ††† लइं।

(१) अहो सर्वतो रमणीयत्वं नगर्याः। तथाहि—

भ्रमद्भ्रमरच्छटाकलविराविता वापिकाः

स्फुरन्मदनार्चनाविभवनन्दनं मन्दिरम्।

लसन्नवनर्तकीललितनर्तनं पत्तनं

वलन्मलयानिलागमश्लाघिनः शाखिनः ॥१७॥

(२) भो वयस्य पश्य पश्य। मन्दमन्दस्पन्दमानमलयानिलकेलिघूर्णशीलोत्पतित-विसरद्बिसिनीधूलीपालीविपुलकाञ्चनवितानशोभिनी भुजङ्गलोककरकमलसङ्गतगाङ्गेयशृङ्गमुख-सङ्गलत्सन्ततकुङ्कुमवारिधारासिच्यमानसकलपथिकलोका* मन्मथकरास्फालितधनुःकोलाहल-

* अत्र 'चिरिचिरिआधारा' इत्यधिकं क्वचित् पुस्तके।

चेटी—(१) इदं पि पेक्खदु* महाराश्रो। एसो क्खु मन्दमरु-अन्दोलिअ†पल्लवहत्थसञ्जाभिस्सेहिं महुर-महु-रस-मत्तमहन्तपरि-मलन्ध-मधुअर-माला-मञ्जरी‡सिञ्जिआरावेहिं मरगआरामो महाराअस्स महुमासोदारवट्टिणिं अत्तणो समिद्धिं §दंसेदु विअ आआरं करेइ।

राजा—( विलोक्य ) (२) साहु भणिअं चन्दणिआए।

विदूषकः—(३) दासीए धीदे उच्छिट्ठभक्खिणि ण तुज्झ एव्व ¶वअणं अहिणन्दणिज्जं मह वि वअणं अहिणन्दीअदि वअस्सेण।

चेटी—( सावज्ञं हसति )।

विदूषकः—(४) भो वअस्स गच्छम्ह मरगअ||उज्जाणम्।

( इति सर्वे परिक्रामन्ति )

राजा—( दक्षिणाक्षिस्पन्दनं सूचयन् ) देवि,

(५) फन्दए पअल** पोम्ह..।।लिअं

दाहिणं मह मिदं†† विलोअणं।

* वि पेक्ख † पल्लवत्थ ‡ मञ्जरी § आमोदंसिअ ¶ वअणं || उज्जाणम् ** पक्ख †† मितं

मुखरकलमुखा दिवी विरागवेगसुखभासस्वरमुग्धाभिसारिकाझणझणायमानपुरविराजमानपौ-लसमारवीरविजयसिरीमनोहरा मदमपि मदयति रतिमपि रमयति आनन्दमप्यानन्दयति दर्पमपि दर्पयति इयं महानगरी।

(१) इदमपि पश्यतु महाराजः। एष खलु मन्दमारुतान्दोलितपल्लवहस्तसंज्ञाभिर्मे-मधुरमधुरससर्वतःरसरत्परिमलान्धमधुकरमालामञ्जुशिञ्जितारावैः मरकतारामो महाराजस्य मधुमासोदारवर्तिनीमात्मनः समृद्धिं दर्शयितुमिवाकारं करोति।

(२) साधु भणितं चन्दनिकया।

(३) दास्याः पुत्रि उच्छिष्टभक्षिणि न तवैव वचनमभिनन्दनीयं ममापि वचनमभिनन्द्यते वयस्येन।

(४) भो वयस्य गच्छामो मरकतोद्यानम्।

(५) देवि!

स्पन्दते प्रचलपक्ष्ममालिकं

दक्षिणं मम इदं विलोचनम्

किं फलं अह विचिन्तिएहि किं*
केण देव्वसरणी मुणीअदि† ॥१८॥

विदूषकः—(१) भो वअस्स, जह दासीए धोदाए वअण सिलाहणिज्जं तह मह वि चओरस्स बम्हणस्स जइ सिलाहीअदि वअणं ता कहेमि ‡।

राजा—(२) वअस्स, को§ सन्देहो कहेहि।

विदूषकः—(३) सुणादु वअस्सो। एसो जह्वा मिट्ठ¶भुञ्जन्तबम्हणलोअकोलाहलो विअ कोइलकोलाहलो पमोदं उप्पादेइ महाणसधूमप्पसरोव्व ‖कुसुमुप्पडन्तमहुअरगणो णअणपीदिं करोइ बहुलज्जभज्जन्तसरिसवगन्धो विअ पुप्फगन्धो घाणं आणन्देइ।

राजा (सस्मितम्) (४) सच्चं एदं।

देवी—(सहर्षम्) (५) अज्जउत्त, देव्वेण च्चिअ जाणीअदि।

विदूषकः (६) किञ्च मए वि एक्केण बम्हणेण।

देवी—(७) अय्य चओरअ, किं तुए जाणीअदि।

* की † देवसरणिं मनीअदि ‡ कहेहि § का ¶ भुजन्त ‖ कुसमप्फुडन्त।

किं फलमथ* विचिन्तितैः किं
केन दैवसरणिर्ज्ञायते ॥ १८ ॥

(१) भो वयस्य, यथा दास्याः पुत्र्या वचनं तव श्लाघनीयं तथा चकोरस्य ब्राह्मणस्यापि यदि श्लाघ्यते वचनं तत् कथयामि।

(२) वयस्य कः सन्देहः? कथय।

(३) शृणोतु वयस्यः। एष खलु यथा मृष्टभुञ्जानब्राह्मणलोककोलाहल इव कोकिलकोलाहलः प्रमोदमुत्पादयति। महानसधूमप्रसर इव कुसुमोत्पतन्मधुकरगणो नयनप्रीतिं करोति, बहुलाज्यभर्ज्यमानसर्षपगन्ध इव पुष्पगन्धो घ्राणमानन्दयति।

(४) सत्यमेतत्।

(५) आर्यपुत्र, दैवेनैव ज्ञायते।

(६) किञ्च मयाप्येकेन ब्राह्मणेन।

(७) आर्य चकोरक, किं त्वया ज्ञायते।

* वितर्कितैः।

विदूषकः—(१) होदि पुव्वं एव्व, वअस्सस्स चउस्सिन्धुबन्धबन्धुरं वसुन्धरं दाऊण अपरितुट्ठेण * विहिणा पुणो मत्तसमुद्दमुद्दिश्र' एश्र' वअस्सस्स भूमिश्र'चले बन्धिउं अश्रं आरम्भो कीरइत्ति भो भअवं विहे पुणों एव्वं एव्व होहि ।

चेटी - (२) एसो मरगआरामो । पविसदु महाराओ ।

( सर्वे उद्यानप्रवेशं नाटयन्ति )

( नेपथ्ये वैतालिकयोरेकः )

वैतालिकः—(३) जअ जअ महाराअ-राआहिराअ-परमेसर पाअ-†पारिजाअपल्लव-च्छाआ-णिम्म-विरूार-णिरत्थ-सन्दाव - पअण्ड - पआव पखिण्डअजण-कप्प-पादव‡ § वम्महमण हरङ्गलावणगुण णिगलिअसअल-महिलामाणस सिरिमाण्णिवत मुहदाइणी होउ¶ महाराअस्स आराम-लच्छी। पेक्खदु दाव महाराओ -

‖अप्पाणं वित्थरन्तं महुअरवइणो **पाणगोट्ठीणिएओ

††दोलव्वाणं विडाणं सअलपिअमहिलाण संगीअसाला ।

---

* 'अक्विदत्थेन' ( अकृतार्थेन ) इति पाठान्तरम् † पारिजाअ ‡ पादप § मम्मह ¶ होइ ‖ अत्ताणं ** वअणो †† दोलव्वाण ।

---

(१) भवति । पूर्वमेव वयस्यस्य चतुःसिन्धुबन्धबन्धुरां वसुन्धरां दत्त्वापि अपरितुष्टेन विधिना पुनः सप्तसमुद्रमुद्रितामिमां [ वयस्यस्य भूमिकाचले बद्ध्वा ] अयमारम्भः क्रियते । भो भगवन् विधे! पुनरपि एवमेव भव ।

(२) एष मरकताराम: । प्रविशतु महाराजः ।

(३) जय जय महाराज राजाधिराज परमेश्वर पादपारिजातपल्लवच्छायानित्यविस्तार-निरस्तसन्ताप प्रचण्डप्रताप पखिण्डतजनकल्पपादप मन्मथमनोहराङ्गलावण्यगुणनिगडितसकलमहिला-मानस श्रीमानवित । सुखदायिनी भवतु महाराजस्य आरामलक्ष्मीः । पश्यतु तावन्महाराजः ।

आत्मानं विस्तृण्वन्तं मधुकरपतेः पानगोष्ठीनिकेतो

दोलव्यानां विटानां सकलप्रियमहिलानां सङ्गीतशाला ।

(१) कीलाठाणं पडोराअलपवणकिसोराण सेणाणिवेसो
·एसो तेल्लोक्कवीरस्स अ रइवइणो भाइ आरामदेसो ॥ १९ ॥

*किञ्च एत्थ सन्निहिदे महाराए -

पच्चुव्वज्जइ चञ्चलीअणिवहो †फुल्लुप्पडन्तो जवा
कूजन्ता अ कुणन्ति कोइलउला सोत्ताभिअं साअदम् ।
सिग्घं अग्घमुपाहरन्ति ‡मअरंदुग्गारिणो पाअवा
§दाणिं पल्लवचामलेहि लदिआ वीअन्ति वाआहआ ॥२०॥

विदूषकः—(२) साहु गीअं मञ्जु अण्ठमहुरकण्ठेहिं वन्दीहिं ¶ । पेक्खदु दाव वअस्सो महुसमअवित्थारिअं मरगआरामसमिद्धिं ‖ ।

* अत द्वितीयः इति पाठ असमीचीनतया प्रतिभाति, अन्यथा अनुपदमेव बक्ष्यमाणस्य "साहु गीअं मञ्जु अण्ठ-महुर कण्ठेहिं वन्दीहिं" इति विदूषकवचनस्यानुपपत्तिः ।
† फुल्लं फडन्तो । ‡ मअरंदुग्गारिणा इति क-पाठः, मअरन्दोग्गारिणा इति ख-पाठः ।
§ दाणीं ¶ वन्देहि ‖ समद्धि ।

(१) क्रीडास्थानं पटीराचलपवनकिशोराणां सेनानिवेश
एष त्रैलोक्यवीरस्य च रतिपतेर्भाति आरामदेशः ॥१९॥

किञ्चात्र सन्निहिते महाराजे,

प्रत्युद्व्रजति चञ्चरीकनिवहः फुल्लोत्पतन् जवात् *
कूजन्तश्च कुर्वन्ति कोकिलाः † श्रोतामृतं स्वागतम् ।
शीघ्रमर्घ्यमुपाहरन्ति मकरन्दोद्गारिणः पादपाः
इदानीं पल्लवचामरैर्लतिका वीजन्ति वाताहताः ॥२०॥

(२) साधु गीतं मञ्जुकण्ठमधुरकण्ठाभ्यां वन्दिभ्याम् । पश्यतु तावद्वयस्यः मधुसमय-विस्तारितां‡ मरकतारामसमृद्धिम् ।

* जवात्
† "कूजन्ति च कुर्वन्ति कोकिलकुलानि" इति समीचीनतया प्रतिभाति । ‡ विजृम्भिता ।

राजा—( समन्तादवलोक्य ) (१) वअस्स, साहु तुए भणिदं। इह हि—

विभाइ मल्लिलङ्गुलीकिसलपाडलं पाडलं
समुल्लसइ फुल्लिआ पवणणोल्लिआ मल्लिआ।
*दिसाउ सुरहेइ णं दरविआसरं केसरं
समुव्वहइ सम्पअं †पहिअकम्पअं चम्पअम् ॥२१॥

अवि अ—

पक्खन्दोलणमारुएण भसलो‡ आणन्दअन्तो महुं
पज्जत्था कुसुमाउ पासगमिअं§पाएइ पाणीसरिं।
¶उग्गाउं महुरं च माहवमहावन्दी जसं ||कोइलो
माअन्दाण मरन्दसारलहरीसारस्सअं **सेवइ ॥२२॥

विदूषकः—(२) भो वअस्स ††आमूलपुप्फिअस्स बालरत्तासोअस्स मरगअवेदिआए‡‡ §§उवविसिअ मलयमहिहरादो ¶¶उवागअस्स

* दिसाओ † वहिअ ‡ 'भमलो' इति पाठान्तरम्। § पाएइ ¶ उग्गाउं || कोअलो ** सेवदि †† पुप्फिअस्स ‡‡ वेदिआअं §§ उप ¶¶ उपा।

(१) वयस्य, साधु त्वया भणितम्। इह हि
विभाति मल्लिकाङ्गुलीकिसलयपाटलं पाटलं
समुल्लसति फुल्ला पवननुन्ना मल्लिका।
दिशः सुरभयत्यं सद् दरविकासरं केशरं
समुद्वहति सम्पदं पथिककम्पदं चम्पकम् ॥ २१ ॥

अपि च

पक्षान्दोलनमारुतेन भ्रमरः* आनन्दयन्† मधुं
पर्यस्तानि कुसुमानि पार्श्वगतानि ‡ पाययति प्राणेश्वरीम्।
उद्गातुं मधुरं च माधवमहावन्दी यशः कोकिलो
माकन्दानां मरन्दसारलहरीसारस्वतं सेवते ॥२२॥

(२) भो वयस्य, आमूलपुष्पितस्य बालरक्ताशोकस्य मरकतवेदिकायामुपविश्य मलय-

* भ्रमर † आनन्दयन्तो ‡ कुसुमान् पार्श्वगतान्।

मह्नुसमअफुडन्तणवकुसुमपरिमलबाहुलअं घेत्तूण* परिसरे ठिअस्स मलयाणिलस्स देंति† परिसरं पत्तस्स सेवावसरं देहि। पेक्खम्ह मरगआरामलच्छि‡।

राजा—(१) तह ( इति सर्वे यथोचितमुपविशन्ति )।

देवी—(२) अहं §वड्ढावइस्सं अय्यउत्तं।

एदे चूसिअचोल¶बालमहिलाभालिन्दुसेआअमा
　　पिज्जन्ता जणणासिआहि मलिणीणालीअकेलीअरा।
लीलालालिअकेरलीचिहुरआ आणन्दणीसन्दिणो-
　　रोमञ्चुग्गमणाणुमेअचलणा कीलन्ति वाअङ्कुरा ॥२३॥

राजा—(३) अहं वि तुमं ||वड्ढावइस्सं

अत्ताणं वि बुभुक्खिदाण पुढमं दाऊण णागाण तो
　　तुङ्गा मङ्गलचन्दणाहि**ण उणो†† कादूण पाअं खणा।

* घत्तूण † देहि।

‡ मूले 'मरगआरामलच्छी' इति पाठ उपलभ्यते। अस्माभिस्तु छायासंवादेन 'लच्छि' इति पाठः कल्पितः। प्राकृते लच्छीशब्दस्य द्वितीयाबहुवचने 'लच्छी' इत्यपि पदं सम्भवति, तेन छायायां 'लक्ष्मीम्' इत्येतस्य स्थाने 'लक्ष्मीः' इति पाठेऽपि सर्वं समञ्जसं भवति।

§ वड्ढापयिस्सं ¶ पाल || वड्ढापयिस्सं ** णन्दि-खपाठः †† द्विभिउणी।

मलयधरादुपागतस्य मधुसमयस्फुटन्नवकुसुमपरिमलप्राभृतं गृहीत्वा परिसरे स्थितस्य मलयानिलस्य सेवावसरं देहि। पश्यामो मरकतारामलक्ष्मीम्।

(१) तथा।

(२) अहं वर्धयिष्याम्यार्यपुत्रम्—

एते चूषितचोलबालमहिलाभालेन्दुस्वेदागमाः
पीयमाना जननासिकाभिर्नलिनीनालीककेलीकराः।
लीलालालितकेरलीचिकुरका आनन्दनिष्यन्दिनो
रोमाञ्चोद्गमनानुमेयचलनाः क्रीडन्ति वाताङ्कुराः ॥२३॥

(३) अहमपि त्वां वर्धयिष्यामि

आत्मानमपि बुभुक्षितानां प्रथमं दत्त्वा नागानां तत-
*स्तुङ्गान्मङ्गलचन्दनाद्रेः पुनः कृत्वा पातं क्षणात्।

* तुङ्गा मङ्गलचन्दनाद्रिभङ्गाः कृत्वा पातं क्षणात्।

*एणिहं गण्हिअ सोरहेक्कणिलयं कन्दप्पमित्तन्तरं
तं आलिङ्गिउमूसुआ परिसरं पत्ता अ चेत्ताणिला ॥२४॥

देवी—(१) पेक्खदु दाव अय्यउत्तो सोहग्गं कालस्स ।
किसलइदासोअलदा†
कीरमुहाभोअ-कीसुअ-च्छाआ ।
कीलन्ति केवि‡ दिवसा
केसरखलमाणवालपवमाणा ॥२५॥

राजा—(२) किं §भणाइ—
महुअरकलकलमुहले
मलआणिलभङ्गिसङ्गअतरङ्गे ।
महुमासणईसोत्ते
¶मअरन्दमए णिमज्जेइ भुवणं ॥२६॥

विदूषकः—(३) भो वअस्स किं पि वञ्चिदो म्हि जदो पुव्वं एव्व अम्हाणं घरए परम्पराए समागअं पण्डिअत्तणं कइत्तणं‖ च **पहेसु पडिरोहअभआदो अम्हवम्हणीसअणिज्जेक्कपादसंठविआए ††

* एसो गण्हिअ † लता ‡ केऽपि § फणइ ¶ माअन्दमए णिमज्जइ ‖ कइत्तणं ** वहिसु
†† णिज्जक्कपाअ सट्ठविआअ

इदानीं गृहीत्वा सौरभैकनिलयं कन्दर्पमित्रान्तरं
त्वामालिङ्गितुमुत्सुकाः परिसरं प्राप्ताश्च चैत्रानिलाः ॥२४॥

(१) पश्यतु तावदार्य्यपुत्रः सौभाग्यं कालस्य । यतः—
किसलयिताशोकलताः कीरमुखाभोगकिंशुकच्छायाः ।
क्रीडन्ति केऽपि दिवसाः केसरखलन्बालपवमानाः* ॥२५॥

(२) देवि, किं भणसि—
मधुकरकलकलमुखरे मलयानिलभङ्गिसङ्गततरङ्गे ।
†मधुमासनदीस्रोतसि मकरन्दमये निमज्जति भुवनम् ॥२६॥

(३) भो वयस्य, किमपि वञ्चितोऽस्मि । यतः, पूर्वमेवास्माकं गृहे परम्परया समागतं पण्डितत्वं कवित्वं च । पथिषु प्रतिरोधकभयादस्मद्ब्राह्मणी० ‡ शयनीयैकपाद § संस्थापितायां

*खलन्मान इति खपाठः । † किञ्चिद ‡अस्मद्ब्राह्मणि इति ख-पाठः § ०पार्श्वं ।

*मंजुसिआए †णिहाविअ लोहसालाए गाढं बन्धिअ मुद्दं पि दाऊण साडं पि समुद्दे संगण्ढिअ आअदो (?)। ता अज्ज तुवं तुज्झ कइत्तणस्स अद्धं मे देहि जेण अहं वि तुम्हाणं कण्णपुडस्स पीऊसगण्डूसणं करिस्सं।

( इति हस्तौ प्रसारयति )

( चेटी )। (१) अज्ज पडिगण्ह अहं दे देमि।

विदूषकः। (२) आ दासीए धीदे को उण पण्डिदो पारिआअं उज्झिअ एरण्डादो अहिलसिदं कामिज्जदि। अहव तुवं तुज्झ कइत्तणं दंसेहि। तदो पडिगिण्हिस्सं।

देवी। (३) चन्दणिए दंसेहि अत्तणो ‡छेअत्तणं। किञ्च सा§ पडिहा जा ठाणे पसरइ, सा णीदी जा काले उज्जलइ, सा इत्थिआ जा भट्टमंणरहे वट्टइ, सा मेत्ती जा अणत्थे ओलम्बइ।

चेटी। (४) जं भट्टिणी आणवेदि।

विदूषकः। (५) जइ अत्तणो छेअत्तणं¶ दंसेदुं ववसिदासि, ता जमअं कादव्वं मलआणिलो वण्णिदव्वो सद्धरा अ वुत्तं।

* मञ्जुसिआर्ध। † णिआविअ। ‡ छउत्तणं। § आदर्शयोर्नास्ति। ¶ छइत्तणं।

मञ्जूषिकायां निधाय लोहसालया गाढं बद्धा मुद्रामपि दत्त्वा *वाटामपि समुद्रे संगृह्यागतः (?)। तदद्य त्वं तव कवित्वस्यार्धं मे देहि येनाहमपि युष्माकं कर्णपुटस्य पीयूषगण्डूषणं करिष्यामि।

(१) आर्य, प्रतिगृहाण, अहं ते ददामि।

(२) आः दास्याः पुत्रि, कः पुनः पण्डितः पारिजातमुज्झित्वा एरण्डादभिलषितं कामयते। अथवा त्वं तव कवित्वं दर्शय ततः प्रतिग्रहीष्यामि।

(३) चन्दनिके! दर्शयात्मनो वैदग्ध्यम्। किञ्च सा† प्रतिभा या‡ स्थाने प्रसरति, सा नीतिः या काले उज्ज्वलति, सा स्त्री या भर्तृमनोरथे वर्तते, सा मैत्री या अनर्थे अवलम्बते।

(४) यद् भट्टिनी आज्ञापयति।

(५) यद्यात्मनो वैदग्ध्यं दर्शयितुं व्यवसितासि, तद् यमकं कर्त्तव्यं मलयानिलो वर्णयितव्यः स्रग्धरा च वृत्तम्।

* वाटामपि। † आदर्शयोर्नास्ति। ‡ प्रतिभायाः।

चेटी। (१) तह। सुणाहि तुवं।

बाला *वालालितण्हापसमणकुसला चन्दणाहिस्स तुङ्गा
सीगा सीगारविज्जा† विअरणगुरुणो मन्थरं विप्फुरन्तो।†

लोलं लोलंबआलं‡ परिमलअरलं भामअन्ता हरन्ता
माणं माणंसिणीणं णवसुरहिसिरोबन्धवा गन्धवाहा§ ॥२७॥

राजा। (२) साहु चन्दणिए साहु। जदो जमएवि सुहओ सद्दो सुअमो अत्थो।

विदूषकः। (३) जह एव्वं जिअं देवीए पराजिअं वअस्सेण। (पुरोऽवलोक्य) अह्वो अमच्चो सुमई दुवारे।

राजा—(४) किं सुमई। पवेसेहि णं।

* लीलालि।

† बिन्दा इति क-पाठः।

‡ लोलम्भणोल।

§ गन्धवाभा।

(१) तथा। शृणु त्वम्।

बाला व्यालालितृष्णाप्रशमनकुशलाः चन्दनाद्रेः* तुङ्गान्
शृङ्गान् शृङ्गारविद्यावितरणगुरवः मन्थरं विस्फुरयन्तः†।
लोलं रोलम्बजालं परिमलतरलं भ्रामयन्तो हरन्तो ‡
मानं मनस्विनीनां नवसुरभिश्रीबान्धवा गन्धवाहाः ॥२७॥

(२) साधु चन्दनिके साधु! यतो यमकेऽपि सुभगः शब्दः सुगमोऽर्थः।

(३) यदेव जितं देव्या पराजितं वयस्येन। अहो अमात्यः सुमतिर्द्वारि।

(४) किं सुमतिः? प्रवेशयैनम्।

* सतुङ्गाः शृङ्गाः। † स्फुरन्ति।

‡ भ्रमन्त

विदूषकः—( परिक्रम्य सुमतिना सह प्रविश्य )

(१) एसो सुमई।

सुमतिः। (२) जेदु देवो*।

राजा। (३) सुमदे किं।

सुमतिः। (४) देव सिन्धुणाहामच्चो सुस्सुदो दट्ठुकामो चिट्ठइ।

राजा। (५) ता अविलम्बिअं आणेहि णं।

सुमतिः। (६) जं देवो आणवेदि ( इति निष्क्रम्य सुश्रुतेन सह प्रविश्य )

सुश्रुतः। (७) जेदु देवो†।

राजा। (८) सुस्सुद अवि कुसलं सिन्धुणाहस्स।

सुश्रुतः। (९) सम्पदं देवस्स कुसलाणुजोएण। किं च, महाराअ देवस्स सिन्धुणाहस्स चिरसेवापसादिएण समुद्देण दिण्णो चिन्तामणि-जातीओ को वि महामणी। तं च सअलचिन्तिदत्थदाणकुसलं महार-आणं महाराअप्पसादविन्तएण सिन्धुणाहेण महाराअस्स सिरिमाणवेअस्स

---

* आदर्शयोः "एसो सुमई जेदु देवो" इति विदूषकवाक्यम्।

† आदर्शयोः "जेदु देवो" इति सुमतिवाक्यम्।

---

(१) एष सुमतिः।

(२) जयतु देवः।

(३) सुमते! किम्?

(४) देव! सिन्धुनाथामात्यः सुश्रुतो द्रष्टुकामस्तिष्ठति।

(५) तदविलम्बितमानयैनम्।

(६) यद् देव आज्ञापयति।

(७) जयतु देवः।

(८) सुश्रुत! अपि कुशलं सिन्धुनाथस्य।

(९) साम्प्रतं देवस्य कुशलानुयोगेन। किञ्च महाराज देवस्य सिन्धुनाथस्य चिरसेवा-प्रसादितेन समुद्रेण दत्तश्चिन्तामणिजातीयः कोऽपि महामणिः। तत्* च सकलजनचिन्तितार्थ-

---

* तं च

पाहुदीकरेहित्ति दाऊण पेसिओ अहं। ता जिगाउ एसो चिन्तामणी णं महाराअ*मस्सिहिलाहेण, होउ अ महाराअपसादग्गहणेण सिन्धु-णाहो सअलमहिवालमण्डलसिलाहणिज्जो ( इति चीनांशुकनिगुण्ठितचिन्तामणिं काञ्चनभाजने निक्षिपति। )

राजा। (१) सुमदे तुवं एव्व तुज्झ सहाअं† सुस्सुदं जहोइदं सम्भाविअ पेसेहि सिन्धुणाहसआसम्।

सुमतिः। (२) जं देवो आणवेदि (इति निष्क्रान्तौ।)

विदूषकः। (३) भो वअस्स आणवेहि अस्स महामणिणो णिउल-मवणेदुम्।

राजा। (४) वअस्स जं दे रोएइ।

विदूषकः। (मुद्रामवमुच्य निगुलमपनयति)।

राजा। (सकौतुकम्)। (५) अहो पभापसरो। अज्ज हि

अच्छेरं§ असुअस्स अच्छमणिणो दीहेहि¶ मोहेहि णं

तेल्लोक्कं णवपोम्मराअरअणुक्किस्सं व लक्खिज्जए।

---

* महाराअस्स णिहि-। सहाअं।

‡ "सुमतिसुश्रुतौ" इति ग्रंथः। § अच्छहिं ( आश्चर्यः )। ¶ दीहेहि।

---

कुशलं महारत्नं महाराजप्रसादविहिं न सिन्धुनाथेन महाराजस्य श्रीमानवीतस्य प्राभृतीकृत इति दत्त्वा प्रेषितोऽहम्। तद् जयत्वेष *चिन्तामणि[र्नु]महाराजसन्निधिलाभेन। भवतु च महाराज-प्रसादग्रहणेन सिन्धुनाथः सकलमहीपालमण्डलश्लाघनीयः।

(१) सुमते, त्वमेव तव सखायं सुश्रुतं यथोचितं सम्भाव्य प्रेषय सिन्धुनाथसकाशम्।

(२) यद् देव आज्ञापयति।

(३) भो वयस्य, आज्ञापय अस्य महामणेर्निगुलमपनेतुम्।

(४) वयस्य, यत्ते रोचते।

(५) अहो प्रभाप्रसरः। अद्य हि—

आश्चर्यमसुर्य्याच्छमणेर्दीर्घैर्मयूखैरेतत्

त्रैलोक्यं नवपद्मरागमणोत्कीर्णमिव लक्ष्यते।

---

* मम।

एसो वासरदीवधूसरच्छई* सूरो विदूरोसिओ
    सञ्झाए कवलीकिदोव्व सहसा नट्ठो अअं आदवो ॥२८॥

विदूषकः। (१) भो वअस्स अगणिएहिं अणग्घेहिं उम्मीलन्त-बहलदीहमोहलेहुज्जअ†-खज्जोआविअ-सहस्सरस्सीहिं महारअणसहस्सेहिं पूरिअं खु दे कोसवरअं। किं ताणं वि अहिओ अणग्घप्पहाओ‡ जेणं अच्छरीयं करेसि।

राजा। (२) वअस्स एसो खु चिन्तामणित्ति पसिद्धो असाहारणो एव्व। जदो—

पत्थेइ जं जं सअलो जणो वि
    हत्थे अअं तस्स खु देइ तं तं।
मन्दारकप्पद्दुमकामहेणु-
    सन्ताणआणं गणिओ अ मज्झे ॥२९॥

विदूषकः। (३) अम्मो§ पण्डिआणं पि ¶बुद्धी अन्धपरम्परं अणुवट्टइ। जदो तुए ‖एदाए सिलाए दाणविअड्ढदा वणीअदि। परमत्थदो उण

* धूसरच्छई। † लिहुज्जोअ। ‡ अणग्घप्पहाओ।
§ कपुस्तके 'अम्मो' इति नास्ति। खपुस्तके 'अहो' इति पाठः। ¶ बुद्धीए। ‖ एदाहि।

एष वासरदीपधूसरच्छविः सूर्यो विदूरापसृतः
    सन्ध्यया कवलीकृत इव सहसा नष्टोऽयमातपः ॥२८॥

(१) भो वयस्य* अगणितैरनर्घैरुन्मीलद्बहलदीर्घमयूखरेखोद्यतखद्योतीकृतसहस्ररश्मिभिः महारत्नसहस्रैः पूरितं खलु ते कोशरत्नम्। किं तेषामप्यधिकोऽर्घ्यप्रभावः येनाश्चर्यं करोषि।

(२) वयस्य एष खलु चिन्तामणिरिति प्रसिद्धोऽसाधारण एव। यतः—

प्रार्थयति यद् यत् सकलो जनोऽपि
    हस्तेऽयं तस्य खलु ददाति तत् तत्।
मन्दारकल्पद्रुमकामधेनु-
    सन्तानकानां गणितश्च मध्ये ॥२९॥

(३) अहो पण्डितानामपि बुद्धिरन्धपरम्परामनुवर्त्तते यतस्त्वया एतस्याः शिलाया दान-

* अगणनीयैः।

ससस्स विसाणोब्भवो आआसस्स पसूणोब्भवो मिअतिण्हिआए* सलिल-रूवत्तणं एदस्स सिलाविसेसस्स अभिमददाणपण्डिच्चं चाणत्यन्तरम् ।

राजा । (१) मा एव्वं भण । अचिन्तणिज्जो क्खु मणिमन्तोसहीणं पहावो ।

विदूषकः । (२) भो वअस्स जइ एव्वं इदं मे कहेहि कहं पुण एदस्स अचेदनस्स उवलविसेसस्स दाणं सम्भवइ ।

राजा । (३) वअस्स एआरिसाणं अप्पच्चक्खचारिणीओ अहिदेवआओ विज्जन्ति ।

विदूषकः । (४) जुज्जइ । ता अहं किं पि पत्थेमि णं मज्झारा-अणं । (विचिन्त्य अपवार्य) भो वअस्स एणह्नि इह महीअले जा कण्णआणं रअणभूदा † कण्णआ तं पुरदो दंसेहि त्ति पत्थेमि ।

राजा । (५) जं अहिरुइदं वअस्सस्स ।

विदूषकः । (प्रार्थनामौनितमणिं भक्तिसन्निपति)

(ततः प्रविशत्यपटीक्षेपेण‡ नायिका)

(सर्वे सकौतुकमवलोकयन्ति)

---

* तिण्हिआए । † भूदा ‡ अपटाक्षेपेण

---

विदग्धता वर्ण्यते । परमार्थतः पुनः शशस्य विषाणोद्भव आकाशस्य प्रसूनोद्भवः मृगतृष्णिकायाः सलिलरूपत्वम् एतस्य शिलाविशेषस्याभिमतदानपाण्डित्यं चानर्थान्तरम् ।

(१) मा एवं भण । अचिन्तनीयः खलु मणिमन्त्रौषधीनां प्रभावः ।

(२) भो वयस्य यद्येवमिदं मे कथय । कथं पुनरेतस्याचेतनस्योपलविशेषस्य दानं सम्भवति ।

(३) वयस्य, एतादृशानामप्रत्यक्षचारिण्योऽधिदेवता विद्यन्ते * ।

(४) युज्यते । तदहं किमपि प्रार्थये एतन्महाराजम् । भो वयस्य इदानीमिह महीतले या कन्यकानां रत्नभूता कन्यका तां पुरतो दर्शयेति प्रार्थये ।

(५) यदभिरुचितं वयस्यस्य ।

---

* चारिण्योऽपि देवता विद्यन्ते । † प्रार्थयामि ।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| March, 1932 | १८५४ शकीये फाल्गुने १४श-वर्षस्य ११श-संख्या | Vol. XIV. No 11. |
|---|---|---|

## दीक्षान्तभाषणम् *

[ निबन्धकः—श्रीविधुशेखरभट्टाचार्य्यः ]

भद्रं वः सोम्या दीक्षान्तस्नानकामा विद्यार्थिनो गुरुकुलविश्वविद्यालयस्य । अवसितो वो ब्रह्मचर्यवासः प्राप्तश्च समावर्तनसमय इति यत्सत्यं पदमिदमतिमहतः प्रमोदस्य । विहाय गुरुकुलं गन्तव्यमिदानीमायुष्मद्भिरिति किञ्चिदाभाषणीयाः स्थ ।

इदं वो गुरुकुलं सर्वस्याप्यापतति नेत्रपथम् । इयमस्य होमशाला । इयं यज्ञवेदिः । इमे मठाः । इमानि गेहानि । एतानि चाभितस्तानि तान्यपराण्यनेकानि वस्तूनि । यः पुनः कश्चिदेतावदस्य वेद, न स मन्ये वेद सम्यग् गुरुकुलस्य । रूपमात्रमेतदस्य, शरीरमात्रमेतदस्य । न मातुर्मातृत्वं न वा पितुः पितृत्वं रूपं शरीरं वापेक्षते । न हि तस्मिन् विकले

* हरिद्वारे गुरुकुलविश्वविद्यालये, संवत् १९८८ ।

माता अमाता भवति पिता वा अपिता। एवमन्यथाभूतेष्वपि तेषु तेषु पदार्थेषु न गुरुकुलमगुरुकुलं भवति। अन्यदेव हि तत् किञ्चिद् येन माता माता, पिता वा पिता। एवं तदपि किञ्चिदन्यदेव तत्तेभ्यो येन गुरुकुलं गुरुकुलम्। स आत्मा। स द्रष्टव्यः। आत्मदर्शी हि श्रेयः पश्यति। तस्मिन्नेव च सत्यात्मनि स्याच्छरीरमपि। किं नाम शरीरं यद्येतद्विनाकृतमात्मना। त्यज्यते दह्यते वा तल्लोके। विकृतं हि तदन्यदपि विकरोति। अस्त्यात्मा गुरुकुलस्य। स खलु रूपस्यान्तरोऽबाह्योऽमूर्त्तो भावमयो वा मनोमयो वा। अत एव मनसा वेदितव्यः। प्रयातु वः कश्चित् कृत्यानुरोधात् पारेऽपि पारावारस्य, तिष्ठतु वैव मूर्धन्युत्तुङ्गस्य पर्वतस्य, न खलु तेनात्मना तत्रापि नाधिवसेदेव गुरुकुलम्। न वायं न युज्येत तेन समीहितेन फलेन। न चास्ति यत्कश्चिदपश्यन्नप्यात्मानं गुरुकुलस्य, केवलमिहावस्थानादेव गुरुकुलवासफलमविकलमवाप्नोतीति। पलालमेवायमाहरति तथा कुर्वन्, न तु धान्यम्।

कः पुनरयमात्मा गुरुकुलस्य। कृतमनेनेन प्रश्नेन। नायं न विदितोऽयमत्रत्यानाम्, विशेषेण तु युष्मादृशानां ब्रह्मचारिणाम्। अन्विष्यतां वैव स्वचेतसि। पृच्छ्यतां वाचार्यः। अथापरोऽपि कश्चिद् ब्रूयात्, मन्ये सोऽपि शक्नोति वक्तुं समासेन यदस्ति कश्चित् स भावश्चित्ते यः समुत्पद्यते सम्यगवगच्छतोऽर्थतत्त्वं गुरुकुलस्य शब्दस्य। समुद्भासयति सारं वा सर्वस्वं वा समग्रायाः संस्कृतेर्भारतवर्षस्य। यः प्रवर्तयति पुरुषं त्यागे, न तु भोगे। प्रेरयति जनं सृष्टौ श्रेयसो न तु प्रेयसः। प्रेषयति पुमांसमुपकाराय विश्वस्यापि भुवनस्य, प्रदर्शयति पन्थानं सत्यस्य, अधिगमयति च तेन यदधिगन्तव्यं नाम जीवितस्य। स एवात्मा गुरुकुलस्य।

विद्यते यस्मान्यत्र कुत्रापीति, मन्यमानाश्चैवं स्पर्धन्ते च विकत्थन्ते च, नूनं तेऽसारेऽसारदर्शिनः स्वयमात्मानं वञ्चयन्ति। अतिमहत्यपि हि विद्यमानेऽर्थे तमनादाय स्तोकमात्रं किमप्यादाय ते तृप्यन्ति। नूनं निरर्थकस्तेषां स तावान् ब्रह्मचर्यवासो येऽविदित्वैव तमात्मानमनूचानमानिः नस्तब्धाः समावर्तन्ते।

उक्तमेतन्मनीषिभिः शक्यं चैतत्परीक्षितुमन्वहं येन केनापि यच्चित्तमेव मानवानां कुशलाकुशलयोः, किं वा बहुना बन्धमोक्षयोरपि मूलम्। चित्तमेव कुशलं कुशलं प्रसूते, चित्तमेव त्वकुशलमकुशलम्। एतत्तत् कुशलं चित्तं येन कश्चित् कञ्चिन्मरणादपि रक्षेत्, तदर्थं च प्राणानपि परित्यजेत् स्वकीयान्। एतत्पुनरकुशलं चित्तं येन स एव पुरुषस्तमेव पुरुषं स्वयमेव कदाचिद् व्यापादयेत्। एतत्तत् कुशलं चित्तं येन कश्चित् कदाचित् किञ्चित् प्रयच्छति कस्मैचित् कराभ्यामात्मनः। एतत्पुनरकुशलं चित्तं येन स एव पुरुषस्ताभ्यामेव कराभ्यां कदाचित् स्वयं परस्वमादत्ते। शान्ते चेतसि पुरुषः कुलिशकठोरं पाषाणफलकमप्यधिशयानो गाढं प्रस्वपिति। स एव पुनः क्षुब्धे चेतसि कुसुमकोमलेऽपि तल्पे उद्स्तपर्यस्तैरङ्गैर्जाग्रदेव यापयति यामिनीं सर्वाम्। चित्तमेवैतद् येन स महात्मा महात्मा। चित्तमेव चेदं येन दुष्टेन परः पुरुषो दुरात्मा।

एवं च स्थिते वस्तुतत्त्वे किं तेन शतमपि वर्षाणां गुरुकुले ब्रह्मचर्यवासेन, किं वा तेन परःसहस्राणामपि तेषां तेषां विषयाणां शास्त्राणां वाध्ययनेन, न चेत्तेन संस्क्रियते चित्तम्। असंस्कृते च चित्ते का प्रत्याशा सुखस्य शान्तेर्वा। विनिपातस्त्वेव शतमुखः प्रादुर्भवेत्। तादृशेन हि चित्तेन पुरुषः स्वयं नश्यन्नन्यानपि नाशयति।

सोऽयं चित्तस्य संस्कारो नाम तस्य मलापनयनम्। स्वच्छस्यापि प्रकृतिपरिशुद्धस्यापि चित्तस्य मलमागन्तुकम्। गगनस्येव धूमादि। तच्च मलं क्लेशाः—रागद्वेषमोहाः, क्लिश्नन्ति ह्येते शरीरिणाम्। रागो नाम कामः। स च प्रसूतिरितरयोर्द्वयोरिति तत्प्राधान्यात् त्रितयमप्येतत्

काम इति मन्यते। स च कामः सर्वानर्थबीजं मूर्त्तमिव मरणमिति मार इत्युच्यते। मारो मृत्युरित्यनर्थान्तरम्, केवलं शब्दत एतौ भिन्नौ ते न त्वर्थतोऽपि।

सुविदितमेतत्सर्वेषां यन्न तावत् स भगवान् बुद्धो बुद्धोऽभवद् यावन्न तेन विजितो मारः। सोऽयं मारविजयो वा कामविजयो वा बुद्धस्यातिमहदवदानम्। अतिमहान्तमेतदर्थं द्योतयति। न केवलं तस्यैवासीत् स संग्रामो मारेण। नन्वेकैकोऽपि पुरुषाणामन्वहमनुक्षणं चाक्रम्यते चाहन्यते च तेन। स चेन्न शक्यते हन्तुं, किं न हन्यतेऽस्माकम्। अतो युक्तमिदं यत् तदवदानं भगवतो बुद्धस्य तद्वा भस्मीकरणं मारस्य देवदेवेन तथातिहृदयङ्गमं सविस्तरं चोपवर्णितं कविभिश्चित्रितं च चित्रकरैः। तथाह्येतज्जनानामुद्बोधाय कल्पेत।

किं पुनरिष्टं बुद्धत्वेन यदधिगन्तव्यं मारविजयात्। स्पष्टमेतत् तेषामेव प्रतिवचनाद् ये तत् कामयन्ते।

"बुद्धो भवेयं जगतो हिताय।"

"बुद्धो भवेयं सर्वसत्त्वसुखसम्पत्तये।"

"अनेन चाहं कुशलेन कर्मणा<br>भवेय बुद्धो न चिराय लोके।<br>देशेय धर्मं जगतो हिताय<br>मोचेय सत्त्वान् बहुदुःखपीडितान्॥"

तदेतन्न कस्यचिदात्मनो वा पुरुषविशेषस्य वा देशविशेषस्यैव वा, अपि तु सर्वस्यापि जगतः सर्वस्यापि सत्त्वस्य हितं सुखं च यदिदम्, एष्टव्यं च पुरुषैः। किं नोच्यतामस्माभिः सह प्र_ादेन।

"स्वस्त्यस्तु विश्वस्य" इति।

किं न चिन्त्यतामस्माभिरहरहस्तर्पणप्रवर्तितैः

"तृप्यतु भुवनत्रय"मिति

"आब्रह्म स्तम्बपर्यन्तं जगत् तृप्यत्वि"ति च।

किं न विमृश्यतां रहसि सह तैः "सर्वभूतहिते रतैः"

"यत् किञ्चिज्जगतो दुःखं तत्सर्वं मयि पच्यताम्।
बोधिचित्तशुभैः सर्वैर्जगत् सुखितमस्तु च॥" इति,

अथवा

"न कामयेऽहं गतिमीश्वरात् पराम्
अष्टर्द्धिसिद्धिमपुनर्भवं वा।
दुःखं प्रपद्येऽखिलदेहभाजा-
मन्तःस्थितो येन भवन्त्यदुःखाः॥" इति।

किमथवा न भाव्यताम्—

"मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षामहे"

इत्यनेनार्षेण वचसा मैत्री भावना।

एतत्तज्जगतो हितं च सुखं च यत्पुरुषस्यात्मनो हिताय च सुखाय च सम्पद्यते। न हि दह्यमानेष्वन्येष्वङ्गेषु अतथाभूतेनाप्येकेनाङ्गेन सुखं केनाप्यनुभूयते। न हि पादे मे सुखं शिरसि मे वेदनेत्यनुभवति कश्चित्।

नूनं यूयमिच्छथ विद्वत्त्वम्। एष्टव्यमेवैतत्, कः संशयः। सन्ति त्वेके, विद्वांस एव ते, ये विदन्त्यन्यत् कुर्वन्त्यन्यत्। ये विदन्तोऽपि कर्तव्यं न केवलं तन्न कुर्वन्ति, प्रयस्यन्ति वा यावच्छक्यं कर्तुम्, अपि तु तद्विरुद्धमेव कुर्वन्ति। ये हि जानन्तोऽपि हेयं, न केवलं तन्न जहति, यतन्ते वा तद् हातुम्, अपि तु तदुपाददत एव। सत्यं वदेत्यक्षरग्रहणादारभ्योपाध्यायैरसकृत्पाठ्यमाना अपि स्वयं च स्वशिष्यान् पुनः पुनः परिपाठयन्तोऽपि कियन्तो नाम ते ये सततं सत्यं वदन्ति। किमेतेषां वैदुष्येणातिमहतापि। वरमज्ञः सद्वृत्तः, न तु प्राज्ञो दुर्वृत्तः। स्यात् स्थितिर्लोकस्य कानिचिद् दिवसान्यज्ञेनापि तथाभूतेन, न त्वेकमपि दिवसं प्राज्ञेनापि तादृशेन। स हि क्षणात् प्रलयमपि समुत्पादयेत्।

ज्ञानं कर्म चेति सहैतद् द्वयमृध्नोति, नान्योन्यं विनाभूतम्। किं तेन ज्ञानेन यन्नानुगम्यते कर्मणा। किं वा तेन कर्मणापि यन्नानुगच्छति

ज्ञानम् । न तत् स्तोकं नाम ज्ञानं यदधिगम्यते लोके । लेशतोऽप्येतच्चेदाचर्येत नूनं तत् सम्पद्येत भूयसे श्रेयसे । न पुनस्तत् प्रायेण दृश्यते । ज्ञानमन्यदाचरणं चान्यदित्यतिमहाननर्थोऽयमत्यन्तमुपेक्ष्यते साम्प्रतिकेषु विश्वविद्यालयेष्वपि । तत्र ह्यधिकारिणो ज्ञानमात्रं प्रदायैव कृतं करणीयमिति मन्यमानास्तृप्यन्ति । विद्यार्थिनोऽपि तदेवोपादाय लब्धं यल्लब्धव्यमिति सन्तुष्यन्ति । आचारं पुनरेतस्य नाधिकारिणो न वा विद्यार्थिनो मनागपि चिन्तयन्ति । किं बहुना चिन्तनस्य प्रयोजनमपि न तेषां चित्तमारोहति । अत्रैव भिद्यतेऽत्यन्तं गुरुकुलं वर्तमानेभ्यो विद्यालयेभ्यो विशेषेण तु विश्वविद्यालयेभ्यः । गुरुकुले तूपनीतो ब्रह्मचारी प्रथमत एवाचार्येण विनीयत आचारे । तच्च विनयनं ज्ञानपूर्वकम् । यद्यदेव शिक्षते तदेवाचरति पश्यन् परितः सर्वानपि गुरुकुलवासिनः सममाचार्येण तथैवाचरतः । स चैवमाचरंस्तत्सामर्थ्यमुपार्जयति येनातिदुष्करमप्यात्मनो भविष्यद् गृहमेधिव्रतं विनैवायासेन सम्यक् पालयितुं प्रभवति ।

ऋषयो ब्रुवन्ति दृढं चेदमुपपन्नं, यत् सन्ति चत्वारि ऋणानि । गृहीतान्येतानि युष्माभिर्जन्मत एव । धारयथ यूयं किमपि देवेभ्यः किमप्यृषिभ्यः किमपि पितृभ्यः किमपि च मनुष्येभ्यः । चिन्त्यतां शान्तेन चेतसा किमिदमभिप्रैतीति । मोचनीयो वस्तेभ्य आत्मा । अवश्यमनुष्ठेयो यज्ञः, कर्तव्य उत्सर्गो देवोद्देशेन सर्वथा परित्यज्य स्वार्थसम्पर्कम् । अवश्यमुपार्जयितव्यं ज्ञानम्, अवश्यं परिपालनीयो विद्याप्रवाहः परिप्राप्तः परम्परया ऋषिभ्यो ये हि तदर्थं परःसहस्राः शरदस्तपांसि तेपिरे । अवश्यमनुष्ठेया गृहस्थधर्माः, तेन चैष्टव्यमात्मनः सुप्रजस्त्वम्—तथा खलु कर्तव्यं यथा प्रजा सुप्रजा भवति शुभाय लोकस्य । एवमपाक्रियन्ते त्रीणि ऋणान्याद्यानि । चतुर्थमृणं मनुष्येभ्यः । अत्रापि बहूनि करणीयानि । स चेत्पुरुषो नापरं किञ्चित्कर्तुं प्रभवेद्, अन्ततो द्वयमिदं तेनावश्यं कर्तव्यम् । देयस्तेभ्यो वासः, देयं चाशनम् । द्वयमप्येतत

प्रथमं प्रयोजनं प्राणभृताम्। मा भूवंस्ते कदाचित् कथञ्चिद् वञ्चिता अन्ततो वासेनाशनेन च। हन्तैतावदपि तु न साम्प्रतं प्रदीयते तेभ्यः।

नूनं जीवितव्यं युष्माभिः। को नाम न जिजीविषति लोके। कथं पुनर्जीवितव्यम्। दस्यमस्यापि प्रतिवचनमृषिभिरेव। प्रदर्शितस्तैः स पन्था, यस्मात् प्रशस्ततरो नापरः कश्चिदद्यापि केनचिदुद्भावितश्चिन्तितो वा। आहुस्ते—

"कुर्वन्नेव हि कर्माणि जिजीविषेच्छतं समाः॥" इति।

कथं पुनः कर्तव्यानि कर्माणि। यथा कृतान्यर्जुनेन कुरुक्षेत्रसंग्रामे। यथा वायमुपदिष्टस्तत्रभवता वासुदेवेन। यथा वा क्रियन्ते तानीदानी-मत्रभवता मूर्त्तेनेव श्रीकृष्णार्जुनसंवादेन स्थितप्रज्ञेन जीवद्बोधिसत्त्वेन महात्मना गान्धिना।

ननूपदिष्टं नैष्कर्म्यं भारतवर्षे। अवितथमुच्यते यदुपदिष्टं नैष्कर्म्य-मिति। न पुनः प्रष्ठा प्रतिपन्नस्तस्यार्थः। नैष्कर्म्यं नाम न जातु कर्मा-करणं बोधयति, अपि तु कर्मयोगम्। उपदिष्टोऽप्यर्जुनो नैष्कर्म्यं प्रवृत्त एव संग्रामे न त्वस्मान्निवृत्तः। अन्वहमनुक्षणं चाग्रतो युष्माकमपि महान् संग्रामः। स वो जेतव्यः। न चास्त्वन्यत् किञ्चित्साधनमस्मि-न्नन्तरेण कर्म।

सर्वे वयं स्रष्टारः। एको महानपरः क्षुद्रः, इयानेव विशेषः। एतत् तत् कर्मैव येनानुदिनमेव केनचित् किञ्चित् सृज्यते, सृष्ट्वा च तेन प्रकाश्यते स्वात्मा। सोऽयं सविता समर्पयंस्तापं तिरस्कुर्वंस्तमः समुद्भासयंश्च लोकं प्रतिवासरमेव काञ्चिदातनोति सृष्टिं नवीनाम्। तया चैव स्वात्मान-मेव प्रकाशयति। क्व नामास्त्वेष सविता यद्येतस्य कर्मैव तन्निरुध्यते। कर्मणैव हि प्रकाश एतस्य।

द्वेधा चेयं सृष्टिः। दैवी चासुरी च। सा दैवी या सम्पदे। सा पुनरासुरी या विपदे। सुकरा सृष्टिरासुरी। सा हि क्षणेनैव प्रलयमपि कुर्यात्। या तु दैवी सा दुष्करा, अथवा अतिदुष्करा। न ह्यन्तरेण

तपो दैवी सृष्टिः सम्पद्यते। विनैव तपसा सृष्टिरिति न जातूपनिषत्सु दृश्येत। न च तपो नाम सुकरम्।

सृष्टिभेदात् स्रष्टापि द्वेधा भिद्यते। प्रेयस्कामः श्रेयस्कामश्च। प्रेयस्कामः प्रीतिमात्रमीहमानो नान्यत् किञ्चिद् गणयति स्वसृष्टौ। श्रेयस्कामस्तु स्रष्टा स्वसृष्ट्या विश्वस्य श्रेयोमात्रं कामयते। तद्विचार्यता-मायुष्मन्तो गभीरं स्वचेतसि प्रवृत्यतां च सृष्टौ। आत्मैव वो दीपः। आत्मैव वः शरणम्। चरत सर्वे आत्मदीपा आत्मशरणाः।

अस्ति कोऽपि पुरुषस्तमस्तमःपरायणः, स तमसस्तमो गच्छति। अस्त्यन्यस्तमोज्योतिःपरायणः, स तमसो ज्योतिर्गच्छति। अस्त्यपरो ज्योतिस्तमःपरायणः, स ज्योतिषस्तमो गच्छति। अस्ति चेतरो ज्योति-र्ज्योतिःपरायणः, स ज्योतिषो ज्योतिर्गच्छति। भूयास्त यूयमायुष्मन्तो ज्योतिर्ज्योतिःपरायणाः, ज्योतिर्ज्योतिःपरायणाः।

---

## प्रातःकृत्यम्

[ निबन्धकः—श्रीसतीन्द्रचन्द्र-तर्कतीर्थः ]

स्मृतीतिहासपुराणादीनां वेदार्थोपनिबद्धतयावश्यमेवाङ्गीकरणीयं प्रामाण्यम्। तन्त्रस्यापि स्वयं शिवेनोक्तत्वात् पुराणादि-प्रामाण्याच्च प्रामाण्यमविवादम्। ये नामाऽन्मथ्य वेदमखिलं समनुभूय च स्पष्टं तदुप-दिष्टकृत्यवैशिष्ट्यमभीष्टमाचरन्तः कष्टमपाकृत्य तत्कृत्यसत्यतां प्रतिपाद-यन्तः, पर्य्यालोच्य च कातर्य्यमार्य्यवर्य्या विगतमात्सर्य्याः ससौन्दर्य्य-मार्य्याणां कार्य्यजातं सहधैर्य्याः पुनः पुनरतिनिपुणमनुसन्धाय प्रत्यक्षी-कृत्य च तत्कृत्यफलमविकलं, योगमाहात्म्यात् परमाणुपरममहत्त्वपर्य्यन्त-

दुरधिगमं प्रत्नमूलतत्त्वसमन्वितं विज्ञानबहुलमलं निबन्धैर्विविधं शास्त्रम् । तेषां हि वचननिचयेषु योगजबलसङ्कलितेषु वाङ्निष्पत्तिर्व्वा वादो वा प्रतिवादो वा कारणानुसन्धानं वा कथं कथमिति विविदिषा वा वक्रकर्कशतर्को वा "आज्ञा गुरूणामविचारणीये" त्यनुशासनशासनाञ्चावतरन्ति कथमपि सतश्चेतसि । यथादिष्टे सत्यनुष्ठिते कर्म्मणि यथानियममिदानीन्तनास्तदानीन्तना इवावनीतले पुष्कलं फलमालभन्ते सन्ततमित्यत्रान्ततो हन्त ! पञ्चषान् मासानाचरन्तस्तदाचारं भवन्तोऽपि प्रमाणम् ।

अत एव वाचस्पतिमिश्रैरुच्चैरुद्घोषितं सांख्यतत्त्वकौमुद्यां "आर्षन्तु विज्ञानं योगिनामूर्द्धस्रोतसाञ्च न लोकव्युत्पादनायाल" मिति । अपिच मनुराह स्म भगवान् भगवतो मानसतनयो "हैतुकान् वकवृत्तींश्च वाङ्मात्रेणापि नार्च्चये" दिति । तस्मादेव मुनिजनानुशिष्टमिदमिदानीमालोचनीयं 'प्रातःकृत्य' माप्रमाणं नवासङ्गतमिति ।

आशय्योत्थानं पुनः शय्यारोहणपर्य्यन्तं प्रतिक्षणमनुरूपमार्य्याणां कर्म्मस्तोममतो व्याहरन्ति स्म शास्त्रकृतो निबन्धेषु युक्तितर्काद्यवतारपुरःसरम् । तत्रापि विविधकर्म्मकलापनिमित्ततया प्रातःकृत्यमादौ स्म कीर्त्तयन्ति । तथाच तन्त्रशास्त्रोपदेष्टा भगवानाह स्म महेश्वरोऽपि—

प्रातःकृत्यं विना मन्त्री नाधिकारी सुकर्म्मसु ।
तस्मादादौ प्रवक्ष्यामि प्रातःकृत्यं वरानने ॥

तथाच पुराणसंहितादिष्वपि—

ब्राह्मे मुहूर्त्ते उत्थाय स्मरेद् देववरानृषीन् । ( वामन० )
ब्राह्मे मुहूर्त्ते उत्थाय चिन्तयेदात्मनो हितं
धर्म्मार्थकामान् स्वे काले यथाशक्ति न हापयेत् । ( याज्ञ०

---

रात्रेस्तु पश्चिमे यामे मुहूर्त्तो यस्तृतीयकः ।
स ब्राह्म इति विख्यातो विहितः संप्रबोधने ॥ [ आह्निक० ]

यामिनी तु द्वौ दण्डौ रात्रिशेषस्तु ब्राह्मं मुहूर्त्तकं विदुः । इति विशेषः ।

ब्राह्मे मुहूर्त्ते बुध्येत धर्म्मार्थमनुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च । ( मनु० )
ब्राह्मे मुहूर्त्ते उत्थाय धर्म्ममर्थञ्च चिन्तयेत् ।
कायक्लेशं तदुद्भूतं ध्यायीत मनसेश्वरम् ॥ ( कूर्म्म० )
गृहमेधिनि यत्प्रोक्तं स्वर्गसाधनमुत्तमम् ।
ब्राह्मे मुहूर्त्ते चोत्थाय तत्सर्व्वं सम्यगाचरेत् । ( विष्णु०
ब्राह्मे मुहूर्त्ते उत्थाय मानसे मतिमान् नृप ।
विबुध्य चिन्तयेद्धर्म्म मर्थञ्चास्याविरोधिनम् ॥
अपीडया तयोः काममुभयोरपि चिन्तयेत् ।
परित्यजेदर्थकामौ धर्म्म पीडाकरौ नृप ।
धर्म्म मप्यसुखोदर्कं लोकविद्विष्टमेव वै ॥ ( विष्णु० )

चिन्तनीयमर्थं विशिष्य पुनः स एवाह—

उत्थायोत्थाय बोद्धव्यं किमद्य सुकृतं कृतम् ।
दत्तं वा दापितं वापि वाक् सत्या चापि भाषिता ॥
उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम् ।
मरणव्याधिशोकानां किमद्य निपतिष्यति ॥ इति । (विष्णु०)

तथाह्येतावता पर्य्यवसितमिदमिदानीं—समतीतप्रायायां रजन्याम् अर्थात् रात्रेः पश्चिमयामीयतृतीयमुहूर्त्ते निद्राविद्रवणसमनन्तरं (शयान एव शय्यायां चिराचारपद्धत्याऽन्यथा वा) निजं हितं चिन्तयन् श्वस्तनदिनसुख-साधनमनुसन्दधत् परमेश्वर-मुनिगणेश्वरानुगृहीतस नु-कीर्त्तयेदपि सञ्चिन्तयेत् । अत एव कूर्म्म वामनविष्ण्वादिपुराणीयां "ध्यायीत मनसेश्वरं" "स्मरेद् देववरानृषीन्" "मानसे मतिमान् नृपे" त्यादि-रीतिमनुसृत्यैव स्मृतिनतिस्तुत्यात्मकं सत्त्वसत्तायै प्राञ्च उच्चैरुच्चरन्ति प्रतिदिनं प्रातः ।

प्रभाते यः स्मरेन्नित्यं दुर्गादुर्गाक्षरद्वयम् ।
आपदस्तस्य नश्यन्ति तमः सूर्य्योदये यथा ।

ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रः शनी राहु-केतू (१) कुर्व्वन्तु सर्व्वे मम सुप्रभातम् ॥

अहल्या द्रौपदी कुन्ती तारा मन्दोदरी तथा ।
पञ्च कन्याः (२) स्मरेन्नित्यं सौभाग्यं तस्य वर्द्धते (३) ।

पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः ।
पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्द्दनः ॥

कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षेः स्मरणं (४) कलिनाशनम् ॥

यदीच्छसि क्षयं नेतुं पापं जन्मशतार्जितम् ।
प्रातरुत्थाय भूपाल ! कुरु गोविन्दकीर्त्तनम् ॥

अहं देवो न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक् ।
सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान् ॥

हरे मुरारे मधुकैटभारे गोपाल गोविन्द मुकुन्द सौरे ।
यज्ञेश नारायण कृष्ण विष्णो निराश्रयं मां जगदीश रक्ष ॥

जानामि धर्म्मं न च मे प्रवृत्तिर्जानाम्यधर्म्मं न च मे निवृत्तिः ।
त्वया हृषीकेश हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥

लोकेश चैतन्यमयाधिदेव श्रीकान्त विष्णो भवदाज्ञयैव ।
प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्त्तयिष्ये ॥

अर्ज्जुनः फाल्गुनो जिष्णुः किरीटी श्वेतवाहनः ।
बीभत्सुर्विजयः कृष्णः सव्यसाची धनञ्जयः ॥

एतान्यर्ज्जुननामानि प्रातरुत्थाय यः पठेत् ।
उद्यतेष्वपि शस्त्रेषु हन्ता तस्य न विद्यते ॥

कार्त्तवीर्य्यार्ज्जुनो नाम राजा बाहुसहस्रधृक् (५) ।

येन सागरपर्यन्ता धनुषा निर्जिता मही ॥
योऽस्य संकीर्त्तयेन्नाम प्रातरुत्थाय मानवः ।
न तस्य वित्तनाशः स्याल्लब्धञ्च लभते पुनः ॥
शयनादुत्थितो यस्तु कीर्त्तयेन्मधुसूदनम् ।
कीर्त्तनात्तस्य पापानि नाशमायान्ति शेषतः ॥
शिवः काशी शिवः काशी काशी काशी शिवः शिवः ।
इति जल्पन् नरो नित्यं काशीवासफलं लभेत् ॥

एवमन्यञ्च प्रातःस्मरणीयं विविधं स्तोत्रं, महात्मचरितं सूर्य्यादिद्वादशनामप्रभृतिकमपि । तदनन्तरञ्च "नरस्य दक्षः श्वासश्च स्त्रियो वामः प्रशस्यते" इत्यादितन्त्रोक्तनियमानुसारेण परीक्ष्य श्वासं सामान्यतः शुभमशुभञ्च विज्ञाय "सुप्तोत्थितं मुखं दृष्टं लभते वाञ्छितं फलम्। न हानिः कलहो नैव कण्टकेष्वपि भिद्यते। निवर्त्तते सुखेनैव सर्व्वोपद्रववर्जितः" इत्यादि प्राणतोषिणीधृततन्त्रीयवचनमयेन पुमान् दक्षहस्तेन वामभुजेन च नारी स्वमुखं त्रिर्माज्जयित्वा "वामे वा दक्षिणे वापि यत्र सञ्चरते शिवः। तत्पादमग्रतः कृत्वा निःसरेन्निजमन्दिरात्" इति स्वरोदयोपदेशविशेषादुच्चरन् भगवन्नाम निर्भूत्य दक्षिणे पार्श्वे पुरुषो वामे च रमणी * शयनादुत्थाय कृत्वा सुखमासनं कुलकुण्डलिनीं प्रबोधयेत्; यथा—मूलाधारकमलस्थितस्वयम्भूनामधेयशिवलिङ्गवेष्टितां सार्द्धत्रिवलयाकारां कोटिविद्युत्प्रभाभास्वां सर्पाकृतिं शतलक्षसिताशुसुशीतलां महाशक्तिस्वरूपिणीं सर्व्वदेवमयीं साक्षादमृतविग्रहां साधकाभीष्टदायिनीं प्राण- ( हंसः ) मन्त्रेण निश्वासोच्छ्वासाभ्यां प्रबोध्य ध्यायेत्—

ध्यायेत् कुण्डलिनीं सूक्ष्मां मूलाधारनिवासिनीम् ।
तामिष्टदेवतारूपां सार्द्धत्रिवलयान्विताम् ।

---

* नारदपञ्चरात्रानुसारेणायं विशेषः

निशावसाने शयनात् स्मृत्वा नारायणं विभुम् ।
उत्थाय दक्षिणाङ्घ्रिं न वामपादं न्यसेद् भुवि ॥

कोटिसौदामिनीभासां स्वयम्भूलिङ्गवेष्टिताम् ।
तामुत्थाप्य महादेवीं प्राणमन्त्रेण साधकः ।
उद्यद्दिनकरद्योतां यावच्छ्वासं दृढासनः ।
अशेषाशुभशान्त्यर्थं समाहितमनाः शिवम् ।
तत्प्रभापटलव्याप्तं शरीरमपि चिन्तयेत् ।

अत्रैव भङ्ग्यन्तरं रुद्रयामले ; यथा—

तडित्कोटिप्रभादीप्तां चन्द्रकोटिसुशीतलाम् ।
सार्द्धत्रिवलयाकारस्वयम्भूलिङ्गवेष्टिताम् ।
उत्थापयेन्महादेवीं महावक्त्रां मनोन्मनाम् ।
श्वासोच्छ्वासादुद्गच्छन्तीं द्वादशाङ्गुलरूपिणीम् ।

ततः सेयं प्रबुद्धा कुलकुण्डलिनी मेरुदण्डमध्ये या सुषुम्णा नाडी, तन्मध्ये वज्रिणी, तत्र चित्रिणी, तन्मध्ये ब्रह्मनाडी, अस्याश्च नाड्या मध्यच्छिद्रवर्त्मना ऊर्द्ध्वं क्रमशः स्थितं—मूलाधार-स्वाधिष्ठान-मणिपूरा-नाहत-विशुद्धा-ज्ञाख्यानि षट्चक्राणि विभिद्य भ्रूमध्यादुत्थितशुभ्रद्वादशदलकमले समुपविष्टः—तदुपर्य्यधोमुखं छत्राकारेणावस्थितं यद् धवलसहस्रदल-कमलं सहस्राराभिधानं तत्र नीचैर्विराजमानः—परमगुरुर्महेश्वरोऽपि मिथो मिलित्वा क्रीडत इति ध्यात्वा स्तवं वाचयेद् यथा—

नमस्ते देवदेवेशि योगेशप्राणवल्लभे ।
सिद्धिदे वरदे मातः स्वयम्भूलिङ्गवेष्टिते ।
प्रसुप्तभुजगाकारे सर्व्वदाकारणप्रिये ।
कामकलाहिते देवि ममाभीष्टं कुरुष्व च ।
सर्व्वदा रक्ष मां देवि ! जन्मसंसारसागरात् ।
इति कुण्डलिनीस्तोत्रं ध्यात्वा यः प्रपठेत् सुधीः ।
मुच्यते सर्व्वपापेभ्यो भवसंसाररूपकैः ।
इति स्तोत्रं पठित्वा तु प्रणमेद् भक्तिपूर्व्वकम् ।

अपिच मेरुदण्डस्य मूलदेशाद् मध्यब्रह्मवत्मना क्रमश ऊर्द्ध मुत्थाय गलपृष्ठे वक्राकारेण तालुपर्य्यन्तं पुनरूर्द्ध मुत्थाय शङ्खिनीनाड्या उपरि शुभ्रवर्णं सुधाप्लावित सुविस्तीर्णमेकं सहस्रदलपङ्कजं तिष्ठत्यधोमुखं, तस्य नीचैर्भ्रूमध्यादुत्थितं द्वादशदलकमलं, तत्रापि कर्णिकापीठे वलक्षो गुरु * रुपविष्टः—तत्परिधेयं च वासः सितं कण्ठे कुसुमदाम, चन्दनै-रनुलिप्तं शरीरं, वरमभयञ्च भुजयुगले, सहास्यमास्यं वामोरोरुपरि च समुपविष्टा रक्तवर्णा गुरुपत्नी तमेवं सुचिन्तितं शिवसममलौकिकं गुरुवर्य्यं, ताञ्चालौकिकीं रक्तवर्णां गुरुजायां मन्त्रदातुर्गुरोस्तत्पत्न्याश्च नाम संयोज्य ध्यायेत्—

ॐ शुद्धस्फटिकसङ्काशं द्विनेत्रं द्विभुजं गुरुम् ।
वराभयकरं शान्तं स्मरेत् तन्नामपूर्व्वकम् ॥
शशाङ्कायुतसङ्काशं वराभयलसत्करम् ।
शुक्लाम्बरधरं श्रीमत्कुङ्कुममाल्यानुलेपनम् ॥
वामोरौ गुरुशक्त्या च युतं देवाख्यमव्ययम् ।
शिवेनैक्यं समुन्नीय ध्यायेत् परगुरुं धिया ॥ ( याम० )
ब्राह्मे मुहूर्त्ते चोत्थाय चिन्तयेद् गुरुदैवतम् ।
स्वमूर्द्धनि सहस्रारे शिवाख्ये परमात्मनि । ( गौतमीय० )
कर्पूराभं स्मरेत् तत्र श्रीगुरुं निजरूपिणम् । (ताराप्रदीप०)

आचारादुपदेशाच्च गुरुं निरुक्तरूपेण ध्यात्वा सभक्ति प्रणमेदेकतानो यथा—

* रजनीशेषयामस्य शेषार्द्धमरुणोदयः । तदा साधक उत्थाय मुक्तस्वापः कृतासनः ॥ ध्यायेच्छिरसि शुक्लाब्जे द्विनेत्रं द्विभुजं गुरुम् । श्वेताम्बरपरीधानं श्वेतमाल्यानुलेपनम् । वराभय-करं शान्तं करुणामयविग्रहम् । वामेनोत्पलधारिण्या शक्त्यालिङ्गितविग्रहम् । स्मेराननं सुप्रसन्नं साधकाभीष्टदायकम् । एवं ध्यात्वा साधकेन्द्रो मानसैरुपचारकैः । पूजयित्वा जपेन्मन्त्री वाग्भवं बीजमुत्तमम् ।* यथाशक्ति जपं कृत्वा समर्पय दक्षिणे करे । ततस्तु प्रणमेद् धीमान् मन्त्रेणानेन सद्गुरुम्

ॐ अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ।
ॐ अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥
ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्त्तिं
द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ।
एकं नित्यं विमलमचलं सर्व्वदा साक्षिभूतं
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥
इति स्तुत्वा गुरुं स्वापे ध्यायेदिष्टाञ्च देवताम् ।
गुरुदेवतयोरैक्यं भावयेच्च धियाकुलः ।
इष्टार्थप्रार्थनां कृत्वा आज्ञां संप्रार्थयेत् ततः ।
इष्टदेवञ्च भूमौ च तस्यां श्वासानुसारतः ।
विन्यस्य पादमुत्थाय कुर्य्यादावश्यकी क्रिया ॥

( शिवार्च्चन० )

ततस्तु कराङ्गन्यासपुरःसरं प्राणायामं विधाय मातृकान्यासादिपूर्व्वकमिष्टां देवतां ध्यात्वा जप-जपसमर्पणं प्रणामादिकं कुर्य्यात् । ततोऽभीष्टं संप्रार्थ्य तदादेशमुररीकृत्य पूर्व्ववत् "यत्राङ्गे चरते वायुस्तदङ्गस्य करस्तथे" त्यादि सूक्ष्मस्वरोदयवचनाच्छ्वासश्चेद्दक्षिणाङ्गे तदा दक्षकरेण अन्यथा चेद्वामेन, भूयो भूयो मुखं संमार्ज्य ॐ प्रियदत्तायै भुवे नमः' इत्यनेन पृथिवीं, 'ॐ कुलवृक्षेभ्यो नमः' इत्यनेन हरीतक्यादिकुलवृक्षांश्च * प्रणम्य शय्यातः पादक्षेपकाले—

ॐ समुद्रमेखले देवि पर्व्वतस्तनमण्डले ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ।

* हरितकी तथा धात्री निम्बाम्बत्थकदम्बकाः ।
कुम्भ, वटविल्वौ च तिन्तिडी नवमः स्मृतः । ( वैष्णवीयतन्त्र० )

धरणीमेव नमस्कृत्य दुर्गा-गणेश्वर-महेश्वर-कार्त्तिकेय-श्रीकृष्ण-राम-मधुसूदन-वासुदेव-प्रभृत्यभिधानं समुच्चरन् संस्मृत्य तांश्च प्रणिपत्य गृहादतिसावधानं बहिर्गच्छेत्। परन्तु प्रातरुत्थाय—

श्रोत्रियं सुभगामग्निं गाञ्चैवाग्निचितं तथा।
प्रातरुत्थाय यः पश्येदापद्भ्यः स विमुच्यते। ( छन्दोग० )
रोचनां चन्दनं गन्धं मृदङ्गं दर्पणं मणिम्।
गुरुमग्निं रविं पश्येन्नमस्येत् प्रातरेव हि ( कात्यायन० )

इत्यादिप्रमाणानुसारेण शुभदर्शनमवलम्बेत। यदि च दैवादवलोक्यते प्रथमं प्रातः पापीयान् नास्तिको दुर्भगा नारी, काणः खञ्जोऽन्धश्छिन्ननासिको नग्नो वा कपटस्तदा तद्दिने नानाविधमकुशलमुपतिष्ठते * श्रोत्रियादिशुभसन्दर्शने च सुखं शान्तिर्विजयश्च स्वयमागच्छन्ति। निर्विघ्नं निर्विवादं समतिवाहितो भवति दिवसः।

ये ह्येवमनुष्ठाननिरता नियतमनुपालयन्ति मुनिगणगौरवमवगम्य सम्यगप्रमत्ताः प्रातःकृत्यादिकं ते हि दीर्घमायुः प्रतिभाप्राखर्य्यं नैरुज्यमिन्द्रियानुकूल्यं यशश्च वर्चो विविधमन्यदपि मङ्गलमिह लभन्त इति नित्यं तत्कृत्यकारकानवलोक्य गुरुभिरुपदिष्टैरनुष्ठीयतामिष्टमीप्सुभिः सर्व्वैरधिकारिभिरार्य्यवर्य्यैरिति शम्।

---

* पापिष्ठं दुर्भगां मद्यं ( मत्तं ) नग्नमुत्कृत्तनासिकम्।
प्रातरुत्थाय यः पश्येत् तत् कलेरुपलक्षणम्। ( छन्दोग० )

# व्योषः

[ पूर्वतोऽनुवृत्तः ]

(६४) कराः सपात्राः पतिता निकृत्ता महीतले तावतिथा हि राज्ञाम् (५।४।१३६)।

रावणार्जुनीये (१६।५५) कराः सगात्राः पतिता निकृत्ता महीतले तावतिथे गजानाम् इति पाठः। अयमेव पाठः समीचीनतया प्रतिभाति।

(६५) मायां प्रति प्राक् परिषद्धलानाम् (५।४।२६०)।

रावणार्जुनीये (१६।६५) प्राज्ञात्मनां यां परिषद्धलानामिति पाठः।

(६६) रजस्वलक्ष्मांशुशिरावशेषं शिवा पपौ फेनिलमेत्य रक्तम् (५।४।२६०)

रावणार्जुनीये (१६।६३) 'क्ष्मांशु' इत्येतस्य स्थाने 'क्ष्मासु' इति शुद्धः पाठः।

(६७) न यत्र पापप्रति नर्मदां तां पश्येम राजेति कयाचिदूचे (४।३।७)

(६८) तिष्ठद्गु तारा इव कान्तिभाजो
वहद्गु पद्मिन्य इवाब्जनेत्राः। (४।३।१४)

रावणार्जुनीये (४।८) तिष्ठद्गुतारा इति वहद्गुपद्मिन्य इति च समस्तः पाठः, स चाशुद्धः।

(६९) कर्णार्पितेन्दीवरखण्डमेकं
मध्येकपोलं प्रतिबिम्बसक्तम्।
पुरन्ध्रिमध्यं समुपागताया
व्यराजताखण्डमिवाबलायाः॥ (४।३।१७)

रावणार्जुनीये (४।९) प्रतिबिम्बमुक्तमिति पाठान्तरमप्युपलभ्यते।

(७०) वयं पुरेत्तिष्महि सप्तसिन्धु
प्रभो यथा पञ्चनदं तथाद्य । (४।३।१५)

रावणार्जुनीये (४।१२) 'पुरैत्तामहि' इति पाठः ।

(७१) दूरादुपेतं पयसां दृदा या
तथान्तिकादागतमस्ततापम् ।
कृच्छ्राद्वास जननीव पुत्र
करोत्यलं दर्शनतोऽपि लोकम् ॥ (४।३।३३)

रावणार्जुनीयम् (४।२८) ।

(७२) घ्नन्तः पुत्रास्तुरङ्गिणः पाणीकृत्य कशां मृगव्रजम् ।
तं वागुरया परे पुरः प्राध्वंकृत्य कृतार्थतां ययुः ॥ (४।३।५५)

रावणार्जुनीये (३।४१) 'पुरः' इत्यत्र पुनरिति पाठः ।

(७३) जलाभिषेकाहितशीतकम्पा
स्त्रीस्तोकभाजं सहसाभ्युपेता ।
उपेक्षमाणं बकधूर्तमन्या
समालिलिङ्गाशु विमुच्य मानम् ॥
तिमिकतिपयसंयुते समन्ता-
दलियुवतिव्रजसेविताब्जराशौ ।
पयसि करिवशेव काचिदुत्का
भ्रमति पुराम्र सखीजनं विशङ्क्य ॥ (४।३।६७)

( विशङ्क्य इत्येतस्य स्थाने विशङ्का इति पाठान्तरम् )

रावणार्जुनीये (४।५०–५१) प्रथमश्लोकस्य द्वितीयचरणस्य स्थाने "सहमैत्य पो···" इति 'बकधूर्त'मित्येतस्य स्थाने 'नरधूर्तम्' 'तिमिकतिपये'त्येतस्य स्थाने 'कतिपयतिमि', अन्तिमस्य च चरणस्य स्थाने 'भ्रमति पुरा नु सखीजनं विशङ्का' इति पाठः ।

(७४) युवखलीतिरिवाब्जिनीव रेजे (४।३।६६)

रावणार्जुनीये (४।५६) युवखलतिरिवाब्जिनी विरेजे इति शुद्धः पाठः ।

(७५) उद्गात् कठकालापं प्रत्यष्ठात् कठकौथमम् ।
यस्य यज्ञो द्विजातीनां तद्विद्यातिभिरन्वितम् ॥ (४।३।११६)

रावणार्जुनीये ( ७।४ ) 'येषां यज्ञो' इति पाठः ।

(७६) मार्दङ्गिकपाणविकं गदापरिघपट्टिशम् ।
दधानं राक्षससभं विवेश सचिवैः सह ॥ (४।३।१२१)

रावणार्जुनीयम् ( ७।३ ) ।

(७७) दिवानिशं परिभ्रम्य काकोलूकमिव क्षितौ ।
मन्यमानं मदाद्धर्त्तुं जनं कीटपिपीलिकम् ॥ (४।३।१२२)

रावणार्जुनीयस्य सप्तमसर्गस्य पत्रमेकं पतितम्, तत्रैवासीच्छ्लोको-ऽयमिति प्रतीयते । मुद्रितस्य रावणार्जुनीयस्य ४५ पृष्ठस्था पादटीका द्रष्टव्या ।

(७८) युष्माकं यादृशं यानमस्माकं तत्र तादृशम् ।
यौष्माकीणं धनुर्धन्यमास्माकीनं ततोऽधिकम् ॥
युष्मदीयं गृहाण त्वमस्मदीयमहन्त्विदम् ।
मामकं त्वं गृहाणेदमहं गृह्णामि तावकम् ।
तावकीनो रथः कान्तो मामकीनश्च शोभनः ॥ (५।३।३४)

रावणार्जुनीये ( १५।२-४ ) चरणानां व्यात्यासः परिलक्ष्यते । तथाहि—

यौष्माकीणं धनुर्धन्यमास्माकीनमतोऽधिकम् ।
अस्मदीयं गृहाण त्वं युष्मदीयं ममास्त्विदम् ॥
यौष्माकं यादृशं यानं नास्माकं भद्र तादृशम् ।
मामकं त्वं गृहाणेदमहं गृह्णामि तावकम् ॥
तावकीनो रथः कान्तो मामकीनोऽतिशोभनः ।
इत्यालापाञ्जनस्तत्र कुर्वाणः समनह्यत ॥

सुपद्ममकरन्दीया प्रथमा पङ्क्तिर्व्यक्तमेवासमीचीना । तत्र युष्माक-मित्येतस्य स्थाने यौष्माकम्, अस्माकमित्यत्र च आस्माकमिति युज्यते ।

(७९) पाश्चाधिकं जलं नद्याः ( ५।३।३६ ) ।

रावणार्जुनीये (१५।७)

(८०) वियत्तुरीयं भविता विमुच्य स्थितस्तुरीयास्तमहाद्रिभङ्गे (४।४।२०) ।

रावणार्जुनीये (५।७) 'विमुच्य' इत्यत्र 'प्रमुच्य', 'महाद्रि' इत्यत्र च 'महीध्र' इति पठ्यते ।

(८१) त्वां ब्रह्महणभ्रूणहणावुपेतो मन्ये भवेतां प्रणिपत्य पूतौ ।
तथाश्वमेधेन विशुद्धदेहः स वृत्रहाभूद्दिवि देवराजः ॥
(४।१।१५१)

ब्रह्महण इत्यत्र णकारस्तु व्यक्तमेव प्रामादिकः । रावणार्जुनीये (११।४५) ब्रह्मह्नभ्रूणह्नाविति शुद्धः पाठ उपलभ्यते, परं तत्र 'मन्ये' इत्येतस्य स्थाने 'मध्ये' इति पठितम् । मन्ये इत्येव पाठः साधीयान् ।

[ पत्रिकायाः २३६ पृष्ठे 'व्यानमातिशयिकेन रसेन' इति व्यापककाव्यगतत्वेन यदुदाहृतं तद् ग्रन्थवृत्तिसंशोधकानामनवधानतामूलमवबोद्धव्यम् । शिशुपालवधे दशमसर्गे त्रयोविंशश्लोक एतदुपलभ्यते । ]

---

# सर्वप्रत्ययमाला

[ शङ्करार्य्यविरचिता ]

तद्धितप्रत्ययानां तु रूपाद्यर्थपुरःसरम् ।
वक्ष्यामि संग्रहेणात्र तद्धितार्थः सुदुस्तरः ॥ १ ॥
इञ् प्रत्ययस्त्वकारान्तादपत्यार्थे विवक्षिते ।
द्रौणिर्दाशरथिः कार्ष्णिर्भैमसेनिश्च रावणिः ॥ २ ॥
वैराटिर्वारुणिः प्रा··· नाकुलिः पाकशासनिः ।
स्त्रीभ्यो ढक्प्रत्ययोऽपत्ये कौन्तेयः काद्रवेयकः ॥ ३ ॥

वैनतेयोऽथ गाङ्गेयो राधेयो रौहिणेयवत् ।
मैत्रेयो द्रौपदेयश्च कैकसेयस्तथैव च ॥ ४ ॥
आम्बिकेयो रौक्मिणेयो हैडिम्बेय इतीदृशाः ।
अण् प्रत्ययस्त्वपत्यार्थे तदस्यार्थेऽपि च कचित् ॥ ५ ॥
पुत्रपौत्रौ प्रपौत्रश्च वंश्यस्तस्य धनादिकम् ।
अण् प्रत्ययो वदत्यत्र तदुदाहरणं यथा ॥ ५ ॥
पाण्डवः पाण्डुपुत्रः स्याद् धार्तराष्ट्रस्तथात्मजः ।
कालिङ्गो मागधो मात्स्यः पाण्ड्यो वाङ्गश्च (?) कौरवः ॥ ६ ॥
ण्य-प्रत्ययेन कौरव्यो ण्य-लोपे कुरवः स्मृताः ।
दित्यदित्युपरि ण्यः स्याद् दैत्यादित्यौ च तत्सुतौ ॥ ८ ॥
पत्युत्तरपदाद् ण्यः स्यात् प्राजापत्यस्तु तत्र तु ।
अञ् स्यादुत्सादिशब्देभ्य औत्सस्तस्य सुतो भवेत् ॥ ९ ॥
नञ् स्नञौ प्रत्ययौ स्यातां स्त्रीपुंसाभ्यां यथाक्रमम् ।
स्त्रैणं पौंस्नं तदुद्भूतं कामादिकमिहोच्यते ॥ १० ॥
काण्डा( शा ?) यनादयः शब्दाः फअन्ता बादरायणः ।
द्रौणायनः फगन्तः स्यादपत्यार्थे विवक्षिते ॥ ११ ॥
गोत्रापत्ये बिदादिभ्यः शब्देभ्योऽण् प्रत्ययो भवेत् ।
आनन्तर्य्य ऋषिभ्यः स्याद् बैदः पौत्र ऋषेर्भवेत् ॥ १२ ॥
यञ् स्यादङ्गिरसोऽपत्ये काव्यो बोध्यस्तथा भवेत् ।
अण् प्रत्ययः शिवादिभ्योऽपत्यमात्रे विवक्षिते ॥ १३ ॥
नदीनां मानुषीणां च यानि नामानि शिष्यते (?) ।
अवृद्धादिपरस्तेभ्योऽण् प्रत्ययो यामुनो यथा ॥ १४ ॥
ऋष्यादिवाचिशब्देभ्योऽपत्येऽर्थेऽण् प्रत्ययो भवेत् ।
वासिष्ठो माठरश्चैव वासुदेवश्च नाकुलः ॥ १५ ॥
संख्या-सं-भद्रपूर्वो यो मातृशब्दस्ततोऽण् भवेत् ।
द्वैमातुरस्तथैव स्यात् त्रैमातुर उदाहृतः ॥ १६ ॥

कन्यास्थाने कनीनं स्यात् कानीनस्तत्सुतो भवेत् ।
प्रकृतेश्च कनीनः स्यात् कानीनः कर्ण उच्यते ॥ १७ ॥
पैतृष्वस्रीय इत्येवमपत्ये छण् पितृष्वसुः ।
मातृष्वस्रीय इत्येवं मातृष्वसुरपत्यके ॥ १८ ॥
राजन्यो राजशब्दाद् यत् क्षत्राद् घञ् क्षत्रियो भवेत् ।
स्याद्राजक्षत्रियैर्जातौ राजन्यः क्षत्रियः क्रमात् ॥ १९ ॥
अपत्येऽर्थे कुलीनः स्यात् कुल्यः कौलेयकस्तथा ।
तथा महाकुलाच्छब्दादञ् खञौ खश्च वा ततः ॥ २० ॥
अपत्येऽर्थे यथा. माहाकुलीनोऽप्येवमञ् खञौ ।
अपत्ये दुष्कुलाच्छब्दाड्ढक् भवेत् खश्च वा ततः ॥ २१ ॥
दौष्कुलेयो ढकि स्यात् खे दुष्कुलीन इति स्मृतः ।
स्वसृ-शब्दादपत्येऽर्थे परश्छण् प्रत्ययो भवेत् ॥ २२ ॥
छण् प्रत्ययार्थः सर्वत्र स्वस्रीयस्तनयस्ततः ।
भ्रातृशब्दात् सपत्नेऽर्थे भवेद्व्यन्प्रत्ययस्ततः ॥ २३ ॥
सपत्नः शत्रुपर्यायो भ्रातृव्यः कण्टकः स्मृतः ।
कौशल्यात् फिञपत्येऽर्थे कौशल्यायनिरुच्यते ॥ २४ ॥
नक्षत्रयुक्ते कालेऽण् स्याच्चैत्रो मासस्तथैव च ।
आषाढः श्रावणो ज्यैष्ठो वैशाखस्त्वेवमादयः ॥ २५ ॥
अण् प्रत्ययो भवेत्तेषु यैस्तु संस्क्रियते परम् ।
मारीचं पायसं घार्तं सार्पिषं दाधिकं तथा ॥ २६ ॥
शूलेन संस्कृतं शूल्यम् उखायामुख्यमुच्यते ।
संस्कृतं दाधिकं दध्ना क्षैरेयं क्षीरसंस्कृतम् ॥ २७ ॥
स्थालीपाको भवेच्छुक्राद् घञ् शुक्रियं हविस्तथा ।
महेन्द्रियो महेन्द्राद् घो माहेन्द्रोऽण् प्रत्ययो भवेत् ॥ २८ ॥
सोमाद् ट्यण् प्रत्ययः सौम्यम् अमृतव्यं पित्र्यमत्र यत् ।
वास्तोष्पतीयमेवं स्याद् गृहमेधीयमेव च ॥ २९ ॥

मरुत्वतीयमैन्द्रं च शुनासीरीयमित्यपि ।
तदस्य देवतेत्यर्थे सर्वत्राऽत्रावगम्यताम् ॥ ३० ॥
समूहे जनता तल् स्याद् बन्धुता च सहायता ।
समूहेऽण् प्रत्ययः शौकं कौकं बाकमितीदृशम् ॥ ३१ ॥
अचित्तत्वादिके ठञ् स्यात् समूहे हस्तिधेनुके ।
आपूपिकं शाष्कुलिकं हास्तिकं धैनुकं त्विति ॥ ३२ ॥
छप्रत्ययान्तमश्वीयं समूहेऽश्वस्य वर्णितम् ।
राजन्यकं राजकं च समूहेऽर्थे समीरितम् ॥ ३३ ॥
धनुः प्रहरणं यस्य धानुष्कस्तत्र वुञ् भवेत् ।
तथा शाक्तीक-याष्टीकौ स्याद् (?) ईकक्प्रत्ययो भवेत् ॥ ३४ ॥
आध्यात्मिकं देहभवं भूतजं त्वाधिभौतिकम् ।
देवाज्जातं तु यद्वस्तु तद्भवेदाधिदैविकम् ॥ ३५ ॥
लौकिकं वैदिकं तद्वद् विज्ञेयं पारलौकिकम् ।
अध्वन्यमध्वनीनं तु हिते यत्खावुदीरितौ ॥ ३६ ॥
अभ्यमित्र्याभ्यमित्रीणौ हिते यत्खौ तथैव च ।
आत्मनीनो हिते खान्तः शब्दो विश्वजनीनवत् ॥ ३७ ॥
तथैव सर्वभूतीनः (?) सर्वभूतहिते रतः ।
पाणी तु सर्वकर्मीणौ रणे शूरस्य वेगिनः ॥ ३८ ॥
सर्वाङ्गीणः पदान्याभो सङ्गीणो तु तरुत्वचौ (?) ।
शरीरावयवाद् यत् स्याद् दन्त्यमोष्ठ्यं शिरस्यवत् ॥ ३९ ॥
ठक्प्रत्ययः कर्मणि स्यात् कर्मशूरस्तु कर्मठः ।
आतिथेयोऽतिथौ साधुर्वसतौ वासतेयवत् ॥ ४० ॥
पाथेयं पथि पान्थानां हिते स्यात्तण्डुलादिकम् ।
तदस्यास्तीति तत्रास्मिं तेन निर्वृत्तमेव च ॥ ४१ ॥
निवासस्तस्य चेत्यर्थे विहिताः प्रत्यया यथा ।
तदस्याऽस्ति तदस्मिन् चेत्यर्थे स्युर्मतुबादयः ॥ ४२ ॥

मतुपो वतुबादेशाद् रूपभेदोऽस्ति कुत्रचित् ।
गोमान् धीमान् वपुष्मांश्च बुद्धिमान् मतुबिष्यते ॥ ४३ ॥
वतुबन्तोऽपि विज्ञेयो हिमवान् ऋतवानिति ।
भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ॥ ४४ ॥
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ।
मतुबर्थौ विनीनौ च प्रत्ययौ तद्धितौ यथा ॥ ४५ ॥
कवची कुण्डली चक्री तनुत्राणी भवेदिनिः ।
एकाक्षरात् कृतो जातेः संख्यायां च न तौ स्मृतौ ॥ ४६ ॥
ठनन्तः स्यात् कावचिको दाण्डिकश्छात्रिकस्त्विति ।
युसन्तो मतुबर्थः स्यादहंयुश्च शुभंयुवत् ॥ ४७ ॥
सकारान्ताद् विनिर्ज्ञेयो माया-मेधा-स्रजो विनिः ।
सान्तः पयस्वी तेजस्वी वर्चस्वी च यशस्विवत् ॥ ४८ ॥
मायावी विनि मेधावी स्रग्वी वाग्मी मिनो भवेत् ।
वाचो ग्मिनिर्भवेत्तस्मिन् यः प्रशस्तं तु भाषते ॥ ४९ ॥
बहुभाषिणि कुत्सायां प्रत्ययावालजाटचौ ।
तौ तु वाचाल-वाचाटावसम्यग्बहुभाषिणौ ॥ ५० ॥
ऊष-मुष्क-मधोरः स्यादूषरं क्षेत्रमस्य तु ।
मधुरं पायसं काष्ठं सुषिरं मुष्करः पशुः ॥ ५१ ॥
र-प्रत्ययान्तो नखरो मुकुरः पाण्डरस्त्विति ।
इलजस्तु तुन्दिलः स्यात् तुन्दीत्यत्र विकल्पतः ॥ ६२ ॥ *

( क्रमशः )

---

* प्रबन्धोऽयं प्राचीनः, परमादर्शपुस्तकस्य प्रमादपरिपूर्णतया बहुषु स्थलेषु ग्रन्थस्य स्वरूप-सिद्धः पाठो दुःशक एव समुन्नेतुम्। क्वचित् पाणिनीयं तन्त्रमनुसरति ग्रन्थकर्तृ-महाभागः, क्वचित् पुनस्तन्त्रान्तरम्। अस्माभिस्तु केवलं स्वकीयमवलम्बितमशोधनपुरःसरं संमुद्र्यते। प्रबन्धसमाप्त्यनन्तरं पुनर्विचारादिकं यथाक्रमं करिष्यते। पण्डितप्रवराणां राम-लिङ्गशास्त्रिमहोदयानां कृपया समधिगतोऽयं प्रबन्ध इति तेभ्यो भूरि कृतज्ञतामुपहरामः।

श्रीः

# चन्द्रलेखासट्टकम्

## प्रथमं यवनिकान्तरम्

( पूर्वानुवृत्तम् )

राजा । ( सविस्मयम् ) अहह—

(१) अहो महिअले* कहं †अविरलुज्जला विज्जुला
तहिं ‡फुरइ पुण्णिमा कहमहो वहन्ती कुहुं§ ।
अहो कणअकुम्भए अवि कहं दरिद्दत्तणं
घणे पुलिणमण्डले कह णई ण सन्दीसइ ॥ ३० ॥

अवि अ

सुहगन्धो तमबन्धो सविलासा णीलणीरअवलासा¶
अअलङ्को हरिणङ्को अदिट्ठपुव्वं खु दीसए सव्वं ।
कुह वि अहो पल्लविओ कोरइओ कुह वि कुह वि मञ्जरिओ
को एसो सम्पदाओ कुसुमाउह||विअअसिद्धविज्जाए ॥ ३१ ॥

नायिका । ( स्वगतम् ) ( २ ) अहो ||वम्महलोअमारोविदम्हि काए वि देवआए । एसो खु भअवं ||वम्महो एसा अ देवी रई एसो अ परिअणो ।

* ही † अविरलज्जला ‡ फुरस § कुहम् ¶ ०विलासा || युह || मम्मह ।

(१) अहो महीतले कथमविरलोज्ज्वला विद्युत्
तस्यां स्फुरति पूर्णिमा कथमहो वहन्ती कुहूम् ।
अहो कनककुम्भकेऽपि* कथं दरिद्रत्वं
घने पुलिनमण्डले कथं नदी न सन्दृश्यते ॥ ३० ॥

अपि च

सुखगन्धस्तमोबन्धः सविलासा नीलनीरजपलाशा
अकलङ्को हरिणाङ्कोऽदृष्टपूर्वं खलु दृश्यते सर्वम् ।
क्वाप्यहो पल्लवितः कोरकितः क्वापि क्वापि मञ्जरितः
क एष सम्प्रदायः कुसुमायुधविजयसिद्धविद्यायाः ॥ ३१ ॥

(२) अहो मन्मथलोकमारोपितास्मि कयापि देवतया । एष खलु भगवान् मन्मथः, एषा च देवी रतिः, एष च परिजनः ।

* कनककुम्भयोरपि ।

देवी। (१) अभिजाअकुलसम्भवा कावि कण्णआ।

विदूषकः। ( सावधानं निरूप्य ) (२) भो वअस्स पेक्ख पेक्ख। चक्कवट्टिमहिसीपदलाहचिण्हबन्धुराइं इमाए अब्भुदकण्णआए अङ्गाइं।

राजा। ( अपवार्य ) (३) वयस्स मा एव्वं भण

अहमहमिआगएहिं
*पेम्माउलिएहिं लक्खणेहिं †पि।
जहठाणसंठिएहिं‡
आलिङ्गिअमङ्गअं किसङ्गीए ॥ ३२ ॥

नायिका। ( राजानमवलोक्य स्वगतम् ) (४) किं ण खु एदं पेक्खिअ अदिट्ठपुरुवस्स अवत्थन्तरस्स पत्तं होइ मे चित्तं।

राजा। (५) वअस्स

णेत्तन्दोलणचोलिदव्व गलिओ ईसीसिकण्णोउरो
लावण्णकुसुममञ्जरीविलसिओ सेओ ललाडन्तरे।
सोहासङ्घुक्खणोसुआइ व करे लग्गाणि पुप्फाणि से§
ता मण्णे कुसुमग्गहम्मि मणिणा णीदा इयं एदिणा ॥ ३३ ॥

* पेम्मउलाएहिं † वि ‡ सट्ठिएहिं § ०ब्भिलसिओ लग्गाणपुप्फाणम।

(१) अभिजातकुलसम्भवा कापि कन्यका।

(२) भो वयस्य पश्य पश्य। चक्रवर्त्तिमहिषीपदलाभचिह्नबन्धुराणि अमुष्या अद्भुतकन्याया अङ्गानि।

(३) वयस्य मा एवं भण—

अहमहमिकागतैः प्रेमाकुलितैर्लक्षणैरपि।
यथास्थानसंस्थितैरालिङ्गितमङ्गं कृशाङ्ग्याः ॥ ३२ ॥

(४) किं नु खल्वेतं प्रेक्ष्याननुभूतपूर्वस्यावस्थान्तरस्य पात्रं भवति मे चित्तम्।

(५) वयस्य,

नेत्रान्दोलनचालित इव गलित ईषदीषत्कर्णपूरः
लावण्यकुसुममञ्जरीविलसितः स्वेदो ललाटान्तरे।
शोभासंधुक्षणोत्सुकानीव करे लग्नानि पुष्पाण्यस्या-
स्तन्मन्ये कुसुमग्रहे मणिना नीता इयमनेन ॥ ३३ ॥

( स्वगतम् ) (१) अहो इह ठिदाए वि से आढत्तणिव्वहणो अहिणि-
वेसो । जदो—

पुस्से पसूणणिअरेहि तहि लुएहिं
खिसे *सिरीसअसिरीहसिरे करम्मि ।
णेत्तेण किञ्चि परिकुञ्चिअचञ्चलेणं
आदेइ मज्झ मण फुल्लमिअं रसोल्लम् ॥ ३४ ॥

( इति सस्पृहमवलोकयति )

नायिका । ( अधोमुखी ) (२) कीस उण अअण्डे ऊरू मे †वेवन्ति ।

राजा । ( स्वगतम् )

(३) पत्तेसु मज्झ णअणेसु मुहम्बुअं से
पाअम्बुअं ‡पडिगआ खु अवङ्गमाला ।
हंसाउलाउ कमला कमलन्तरम्मि
§भिङ्गच्छडव्व परिरिङ्ग धावमाणा ॥ ३५ ॥

---

* सिसीस † वेपन्ति ‡ परिगआ § भिङ्गच्छडा व ।

---

(१) अहो *इह स्थिताया अप्यस्या आरब्धनिर्वहणो अभिनिवेशः । यतः
† पुष्पैः प्रसूननिकरैस्तस्मिल्लूनैः ‡
क्षिप्ते शिरीषश्रीहसनशीले करे ।
नेत्रेण किञ्चित् परिकुञ्चितचञ्चलेन
आदत्ते § मम मनः फुल्लमिदं रसार्द्रम् ॥ ३४ ॥

(२) कस्मात् पुनरकाण्डे ऊरू मे वेपेते ।

(३) प्राप्तयोर्मम नयनयोर्मुखाम्बुजमस्याः
पादाम्बुजं प्रति गता खलु कटाक्षमाला ।
हंसाकुलात् कमलात् कमलान्तरे
भृङ्गच्छटेव परिराजति¶ धावमाना ॥ ३५ ॥

---

*इहागताया † पूर्णैः ‡ तस्मिल्लूनैः § आददाति ¶ परिव्रजति ।

विदूषकः । ( राजानं निरीक्ष्य निर्वर्ण्य अपवार्य ) (१) भो वअस्स ण केवलं लक्खणाइं तुज्झ णअणाइं पि किं पि पेम्मपरवसाइं से अङ्गं आलिङ्गन्ति ।

राजा । ( अपवार्य ) (२) वअस्स केवलं इमाए जोव्वणोब्भेद-*तरङ्गाणं पलोएमि । पेक्खदु दाव

उद्भिंसिअ थणकुम्भं उम्मज्जंतेण जोव्वणगएण † ।
कूलङ्कसरसभरिआ सरसिव्व तरङ्गिआ पवालङ्गी ॥ ३६ ॥

नायिका । ( सविषादं स्वगतम् ) (३) किं करोमि ण सक्कुणोमि एत्थ ठाउं ।

देवी । ( निर्वर्ण्य स्वगतम् ) (४) अदिट्ठपुरुवजणदंसणेण इमाए विसादो विअ लक्खीअदि । ता एव्वं दाव । ( प्रकाशम् ) भद्दे एहि एत्थ ‡ उवविस । ( इति नायिकां हस्ते गृहीत्वा स्वासनार्धे उपवेशयति ) ।

नायिका । ( उपविश्य स्वगतम् ) (५) अणुग्गहीदम्हि देवीए रईए । अह्वो सुहओ एदाणं समवाओ ।

* तरङ्गणं पुणेएमि † उम्मज्जतेण जोव्वणगईंणं ‡ उपविस ।

(१) भो वयस्य, न केवलं लक्षणानि, तव नयने अपि, किमपि प्रेमपरवशान्यस्या अङ्गान्यालिङ्गतः ।

(२) वयस्य केवलमस्या यौवनोद्भेदतरङ्गाणा* प्रलोकयामि । पश्य तावत्—

उद्भिन्नस्तनकुम्भमुन्मज्जता यौवनगजेन ।
कूलङ्कषरसभरिता सरसीव तरङ्गिता प्रवालाङ्गी ॥ ३६ ॥

(३) किं करोमि न शक्नोम्यत्र स्थातुम् ।

(४) अदृष्टपूर्वजनदर्शनेनास्या विषाद इव † लक्ष्यते । § तदेवं तावत् । भद्रे एह्यत्र उपविश ।

(५) अनुगृहीतास्मि देव्या रत्या । अहो सुभग एतेषां समवायः ।

* ०तरङ्गिणी † स्तन ‡ उपलक्ष्यते § भवतु तावत् ।

( नेपथ्ये )

वैतालिकः । (१) जअ जअ तिभुवणेक्कणाह लोअलोअणचन्द सुन्दर-मन्दाविअकन्दप्पमाण माणवेअ * सुहाअ साअन्तणसंझा होदु देवस्स । अज्ज खु

+एसा बन्धुरबन्धुजीअकलिआसोहा णिदाहंसुणो
‡रिञ्छोलीपडिबिम्बआण लहरीवुन्देसु§ सन्दीसइ ।
सिग्घं¶ ओदरिउं णहाउ दिणलच्छीए समुद्दोदए
माणिक्केहि मणोहरेहि ||रइआ** सोवाणवीहिव्व से ॥२७॥

किञ्च—

सेरं सेरंधिसत्थो ++विलिहइ सिहिणे चित्तलप्पत्तलेहं
रामाणं णेत्तलच्छीकसणिअरमणाआणमग्गन्तराणं ।
आलक्खिज्जन्त‡‡कालाअरुवहल§§अमुद्दामधूमन्धआरो
गेहेसुं देइ मेत्तिं रअणिमुहमहं तुग्गमाणन्दमाणं ॥ २८ ॥

* सुन्दरमन्दाविअकन्दप्पमाणवेअ + एसो ‡ रिञ्छोलीपडिबिम्बअ § पुन्देसु ¶ इरआ || उदरउं ** सोहाणा ++ विलहइ ‡‡ काआ §§ अबदाम ।

(१) जय जय त्रिभुवनैकनाथ लोकलोचनचन्द्र सौन्दर्य्यमन्दीकृतकन्दर्पमान मानवेन्द्र सुखाय सायन्तनसन्ध्या भवतु देवस्य । अद्य खलु

* एषा बन्धुरबन्धुजीवकलिकाशोभा निदाघांशोः
श्रेणी प्रतिबिम्बानां लहरीवृन्देषु सन्दृश्यते ।
शीघ्रमवतरितुं नभसो + दिनलक्ष्म्याः समुद्रोदके
माणिक्यैर्मनोहरै ‡ रचिता सोपानवीथीवास्याः ॥ २७ ॥

किञ्च

स्वैरं § सैरन्ध्रीसार्थो विलिखति स्तने चित्रवत्पत्रलेखां ¶
रामाणां नेत्रलक्ष्मीकृष्णीकृतरमणायमानमार्गान्तराणाम् ।
|| आलक्ष्यमाणकालागरुबहलतमोद्दामधूमान्धकारः
गेहेषु ददाति मैत्रीं रजनिमुखे महान्तमानन्दमासाम् ** ॥ २८ ॥

* एषो । घन ‡ रचिरा § सैरन्ध्रिसार्थं ¶ रेखां || आलिख्यत् ** महदुमानन्दमासाम् — क, महोन्नमानां तपसाम — ख ।

नायिका। ( सानन्दं स्वगतम् ) ( १ ) अह्मो सो एव्व एसो जस्स जसं सव्वदा तादो वण्णेदि। ( सस्पृहमवलोक्य ) सरिसं* खु तादस्स वअणं।

देवी। (२) अज्जउत्त † इमाअं अब्भुदकसआए ‡ बहिणिआअं ¦ मिव मे हिअअं सिणिज्जइ। किन्तु, अभिजाआ खु एसा। ता अन्तेउरे एव्व ठाउं उइदा। अनुजाणादु अय्यउत्तो अन्तेउरं णेदुं।

राजा। ( ३ ) देवि एत्थ किमहं पुच्छिदव्वो जं §अहिरुइदं देवीए।

देवी। ( उत्थाय ) (४) एहि भद्दमुहि अन्तेउरं पविसम्ह।

नायिका। ( उत्थाय ) ( आत्मगतं नायकं सानुरागं तिर्यक् पश्यन्ती सपरिवारया देव्या सह निष्क्रान्ता )

राजा। ( सनिर्वेदम् )

(५) मज्झम्मि इन्त पडिऊण पमोअव'ञ्का
सज्झाकरालमुहभीसणसण्णिवाआ।
देवाण ¶दाणवघडव्व दिसाण मज्झं ॥
पीऊसपाणविहदी सहसा करेदि ॥ १९ ॥

* सरिदं † इमाअं ‡ बहिणिआ अंमिव § अहिरुचिदं ¶ दाणवघट'व || मज्झ।

(१) अहो स एवैष यस्य यशः सर्वदा तातो वर्णयति। सदृशं खलु तातस्य वर्णनम्।

(२) आर्य्यपुत्रास्यामद्भुतकन्यायां भगिन्यामिव मे हृदयं स्निह्यति। किन्तु, अभिजाता खल्वेषा तदन्तःपुर एव स्थातुमुचिता। अनुजानात्वार्य्यपुत्रोऽन्तःपुरं नेतुम्।

(३) देवि अत्र किमहं प्रष्टव्यः, यदभिरुचितं देव्याः।

(४) एहि भद्रमुखि, अन्तःपुरं प्रविशावः।

(५) मध्ये हन्त पतित्वा प्रमोदवल्या
सन्ध्या करालमुखभीषणसन्निपाता।
देवानां दानवघटेव द्वयोर्मम
† पीयूषपानविहतीः सहसा करोति ॥ १९ ॥

( प्रमोदवल्ल्या ? ) † पीयूषपानविहतिं।

( समन्तादवलोक्य )

अह वा ·

(१) मुहे राउवभिओ णअणसुहओ दीसइ फुडं,
णिडालग्गो लग्गो अणुसरइ सेए उडुगणो ।
सरोआणिं *दाणिं अणुकुणइ कोसे सिहिणिअं
†पिआसारिच्छेण मह ‡फुडइ सञ्झा §सुहअरी ॥ ४० ॥

विदूषकः । ( निरूप्य ) (२) भो वअस्स ¶एता खु अम्हाणं तिभुवणलोहणिज्जा ||रूविणी अब्भुट्टकसआ समासादिआ । पुणो किं निस्सारिण **इमिणा मणिणा कज्जं । गहिएसु ††तंडुलेसु किं तुसेहि करणिज्जं ।

राजा । (३) गोसस्स, मा मा एव्वं । किं इन्दिराअ गहिआअ मुउन्देण णाहिणन्दीअदि‡‡ दुद्धवारिही§§ ।

(४) ता उद्धरेहि णं मणिराअं पुणो वि अम्हाणं अणुग्गहिउं¶¶ । देवाराहणमन्दिरे अग्गणत्थं ठाविऊण गच्छम्ह ||||सञ्झं वन्दिउं ।

( इति निष्क्रान्ताः सर्वे )

(५) इअ चन्द्रलेहाअ पढमं जवणिअन्तरं ।

---

* णाणिं † पिआ ‡ फुडइ § सुहअरि ¶ एसा || रूपिणी ** इमिणा इमिणा †† तंदुलेसु ‡‡ नन्दिअदि §§ वारिहि ¶¶ अणुग्गहिउं |||| सञ्झं वन्दिउम् ।

अथवा

(१) मुखे राजीवेन्दो नयनसुभगो दृश्यते स्फुटं
ललाटाग्रे लग्नामनुसरति स्वेदानुडुगणः ।
सरोजानामिदानीमनुकरोति * कोशं स्तनः
† प्रियासादृश्येन मम स्फुरति सन्ध्या सुखकरी ॥ ४० ॥

(२) भो वयस्य एतः खल्वस्माकं त्रिभुवनलोभनीया रूपिणी अद्भुतकन्यका समासादिता । पुनः किं निःसारेणामुना मणिना कार्य्यम् । गृहीतेषु तण्डुलेषु किं तुषैः करणीयम् ।

(३) गोसंज्ञ मा मैवम् । किमिन्दिरायां गृहीतायां मुकुन्देन नाभिनन्दति दुग्धवारिधिः ।

(४) तदुद्धर एनं मणिराजं पुनरप्यस्मान् ‡ अनुगृहीतुं देवाराधनमन्दिरे अग्रस्थाने स्थापयित्वा गच्छामः सन्ध्यां वन्दितुम् ।

(५) इति चन्द्रलेखायां प्रथमं यवनिकान्तरम् ।

---

* कोशस्तनं † प्रियासादृश्येन ‡ गृहीतं ।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| April, 1932. | १८५४ शकीये चैत्रे<br>१४श-वर्षस्य १२श-संख्या | Vol. XIV. No 12. |


## हरप्रसाद-संख्या

## महाप्राणशास्त्रिवृत्तम्


[ निबन्धकः—श्रीपञ्चानन-तर्करत्न-भट्टाचार्य्यः ]


श्रूयते हि "समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकै" रिति, विचारितञ्चेदं वाक्यं भगवता बादरायणेन भगवता चाचार्य्येण ।

प्राणो ह्यणुः, व्यापकश्चाधिदेवतात्मतयेति । इदमेव चान्तरुपाददानाः शरीरपरिमाणमात्मानमार्हता मन्यन्ते । यथाभवतु, वयमत्र प्रत्यक्षं प्रकारान्तरं किञ्चिदुदाहरामः ।

इदं हि साम्यं न बाह्यपरिमाणेन, प्रत्युत क्षुद्रत्वं महत्त्वज्ञानेन विज्ञाप्यते प्राणस्य—न खल्वयं लाघिमा वा महिमा वा तदाकृतिविशेषमधितिष्ठति, किं तर्हि प्रकृतिमेवेति। तथाहि भवति कश्चित् प्राणः प्लुषिशरीरचारी मशकशरीरचारी वा जनानामुद्वेजयिता, परश्चोद्वेजयिता च प्रीतिकरश्च व्यष्ट्यपेक्षया वा भावापेक्षया वा, तथापि पशुरूपो न श्रेयान् यथा हस्ती। नैतेन प्राणस्वरूपं सम्यगुपदर्शितं भवतीत्युत्तरं वाक्यं मम पभिश्चिभिर्लोकैरिति। यस्य हि सञ्चारस्त्रैलोक्यगोचरया श्रिया विश्वजनगोचरया सद्वृत्त्या च सफलीभूतः, स हि सर्वतो महान्। अत्र त्रैलोक्यञ्च देवपितृमनुष्यलोकाः इति बोध्यम्। एतेनोपदर्शनेन लाघिममहिमानौ तरतमभावेनावगम्यौ। यतो लोके क्षुद्रप्राणोऽयं महाप्राणोऽयमिति भवति भेदव्यपदेशः।

प्लुषिमशकवत् क्षुद्रप्राणाः संख्यातीताः प्रत्यहं कोटिश उत्पद्यन्ते म्रियन्ते च, नहि तत्र भवति काचिच्चर्चा। महाप्राणास्तु कियन्त एव येषां विश्वसञ्चाराः सद्वृत्तयः कीर्त्यादिरूपेण समुल्लसन्ते।

विशेषस्त्वेषः, यदिदं प्राणमहत्त्वं नोत्पत्त्यवसरे स्थूलदृशां ज्ञानगोचरतामापद्यते, उत्पत्तिरत्र शरीरविशेषावच्छेदेन प्रादुर्भावः। तथाच जायमानो हि पुरुषो महाप्राणो वा क्षुद्रप्राणो वेति न निर्णेतुं शक्यते भविष्यद्दृष्टिशून्यैः प्राकृतपुरुषैः। तथापि, क्रमेणायमुपचीयमानः स्वमहिम्ना आज्वल्यते। तथाभूतस्य सुगृहीतनाम्नः सुप्रसिद्धस्य स्वर्गतमहामहोपाध्यायहरप्रसादशास्त्रिमहोदयस्याभिरूपभूयिष्ठे महति कुले जन्म राजकीयपदगौरवं कीर्त्या विश्वविश्रुतिर्विविधविद्यावैदग्ध्यं मेधातिशयः पुरावृत्ताभिज्ञानगरिमा काव्यकलाकौशलान्तःप्रवेशपाटवमलङ्कारवैचक्षण्यञ्चेवमाद्यो गुणपरम्परा विदिता एव सर्वेषाम्। तेन नास्य महाप्राणतां विवरीतुं न मेऽयं प्रयत्नः; यः पुनर्मामकस्तत्सम्बन्धस्तन्मयी काचन महाप्राणतावार्त्तात्र प्रस्तूयते।

व्याकरणकाव्यालङ्कारशास्त्रेषु भट्टपल्लीविद्वन्मूर्द्धन्यानां पूज्यपाद-

महामहोपाध्यायराखालदासन्यायरत्नभट्टाचार्य्यमहाशयाध्यापकानां परम-पूजनीयजयरामन्यायभूषणभट्टाचार्य्यमहाशयानामन्तेवासितया शास्त्रि-महाशयस्य सतीर्थता कैशोरे तावदधिगतास्माभिः। तदानीं शास्त्रि-महाशयस्य शरदिति नाम्ना प्रसिद्धिरस्मास्वासीत्।

स खलु ततः पूर्व्वमस्मद्ग्रामीण-मुग्धबोधव्याकरणकाव्यादि-सुपण्डितस्य श्रीरामन्यायवागीशभट्टाचार्य्यस्य काँठालपाड़ास्थिते विद्यालये मुग्धबोधव्याकरणं कियन्तिचन काव्यान्यधिजगे। तस्मिंश्चाद्ये गुरौ परलोकमुपेयुषि, भट्टपल्लेय्व तदीयसंस्कृताध्ययनप्रकर्षस्य क्षेत्रमभूत्।

कलिकाताराजकीयसंस्कृतमहाविद्यालयपाठनिरतस्यापि तस्य विशेष-बुभुत्सयेयं प्रवृत्तिः। राजकीयविद्यालयपाठबाधावसरे शास्त्रि-महाशयस्यास्मद्गुरूपसत्तिरभवत्। अस्माकं गुरुभिरपि "क्रिया हि वस्तूपहिता प्रसीदती"ति मत्वा तदध्यवसायमनुरुन्धद्भिरेवाध्यापितम्। प्रत्यक्षीकृता चास्माभिस्तस्यान्यदुर्लभा गुरुभक्तिः। तथाहि विद्वदग्रे-सराणामप्यस्मद्गुरूणां दौर्व्विध्यं तदीयं मुनिजनोचितमन्तःकरणमपीडय-दपि, शास्त्रिमहाशयस्यान्तःकरणं पीडयाम्बभूव। तदीयदौर्व्विध्यस्य कथ-ञ्चित् प्रतीकाराथ, संस्कृतशास्त्रविदुषामन्येषाञ्च राजकीयसाहायकलाभाय शास्त्रिमहाशयस्य प्रयत्नो मया चिरमेव स्मरणीयः कीर्त्तनीयश्च। यथा-यथं वत्सरनिर्द्देशासमर्थेनापि मयानुमीयते, यदतीताः पञ्चाशच्छरदः इति यदा स्यार् पडगारनामा प्रेसिडेन्सिविभागस्य मण्डलपतिरासीत्। यस्य 'कमिशनर' इति मूलभाषान्तरम्। प्रथमलब्धराजकीयकृत्यः शास्त्रिमहाशयः स्वगुणेन तमावर्जयन् संस्कृतविद्यालयं मुनिवृत्तांस्तद-ध्यापकांश्च प्रदर्शयितुं भट्टपल्लीमानैषीत्। वृत्तिकार्श्येनाप्यनवसीदतो विद्यादानधृतव्रतान् सदाप्रफुल्लस्मेराननान् जरतोऽस्मद्गुरूनुपदर्श्य शास्त्रि-महाशयेन, तथा भूतार्थवर्णनमाचरितं यथासौ मण्डलपतिर्व्विस्मय-विमुग्धश्च श्रद्धानम्रश्च बभूव। ततश्च नैहाट्या मिउनिसिप्यालिटीति प्रसि-द्धाया भट्टपल्लीग्रामादिघटितायास्तदानीन्तननागरिकसमितेर्मासिकवृत्ति-

दानव्यवस्था च बहुषु भट्टपल्ली-संस्कृतविद्यालयेषु तेनाकारि। नागरिक-समितिवृत्तिरिति कृत्वा सा तु बहुभिर्विद्वद्भिस्तदानीमुपेक्षिता। गतेषु कतिपयेषु वर्षेषु दशाविपर्य्ययातिरेकेण पुनर्लिखिता शास्त्रिमहाशयमतीव क्षोभयामास। यथा तथा वा भवतु अस्मद्गुरूणां संसारभरणक्लेशो यथा न स्यात् तदर्थं शास्त्रिमहाशयस्य स्थिरदृष्टिरप्रतिरुद्धासीदिति तु परमार्थः।

आकैशोरं मयि तस्य प्रीतिरासीत्। न्यायशास्त्राध्ययनसमये कानिचित्तदानीं दुर्लभानि हस्तलिखितपुस्तकानि शास्त्रिमहाशयेन मह्यमर्पितानि। पश्चाद् यदा भट्टपल्लीसंस्कृतविद्यालयं संस्थापयतां तत्र राजकीयसाहाय्यकलाभार्थं यत्नः समभवत्, तदा शास्त्रिमहाशय एवास्मत्प्रीत्या च संस्कृतविदुषां दौर्विध्यसमवेदनया च संस्कृतविद्याप्रतिष्ठाकाम्यया च यत्नममुं विविधान्तरायप्रतिहन्यमानमपि कथमपि सफलीचकार।

यदा चायं राजकीयसंस्कृतविद्यालयाध्यक्ष आसीत् तदा दौर्विध्यदुःखार्त्तानां संस्कृतविदुषां यथा कथमपि वृत्तिसौकर्य्यं स्यात् तदर्थं यत्नवतश्चास्य सहृदयपुरुषस्य नवीनपदत्रयसृष्टिस्तत्र च मदुविषया चर्चा नाद्यापि विस्मर्य्यते।

राजद्रोहीति कृत्वा परैरपवादितस्य मे महामहोपाध्यायोपाधिप्राप्तिविघ्नं तल्लाभे चास्माकमप्रवृत्तिमस्मन्मतानपेक्षया च तत्प्रदापनं तत्र मे राजकीयवृत्त्यनुपादानवस्त्राद्युपहाराग्रहणावार्त्तयान्यथा सम्भावयतां राजकीयप्रधानपुरुषाणां संशयनिराकरणं सार्द्धाप्रवर्त्तितविवाहवयोनिर्द्धारणविधिप्रतिवादाय मत्कृततदुपाधित्यागे शास्त्रिमहाशयस्य दुःखमिश्रितमानन्दमप्यनुस्मरामि।

एवं बहुषु कर्मसु स्वार्थसाधननिरपेक्षा परोपकारप्रवृत्तिरशरणदीनसंस्कृतविद्वत्साहाय्यकप्रयत्नोऽलीकप्रियभाषणाद्वैमुख्यम् अप्रियसत्यभाषणादरश्च बहुशोऽस्माभिरुपलब्धानि।

यदि च सर्व्वेषु विषयेषु नावयोरैकमत्यमासीत्, क्वचिद् वादे अपक-

मेव प्रत्युदितमस्माभिः, तथापि महानुभावस्य शास्त्रिमहाशयस्य मयि न विद्वेषो जातः ।

शास्त्रिमहाशयः खलु नारिकेलवदन्तःस्निग्धो बहिश्च कठिनायमान आसीत् ।

धनादिषु सत्यपि कथञ्चिदासङ्गे संस्कृतविद्यायां तन्मूलके वानुशीलने तदीयं मनो न्यमाङ्क्षीदिति मे प्रत्यक्षगोचरो वादः ।

स खलु प्रतीच्यशिक्षापन्नोऽपि नात्मीयां पुरातनाचारपद्धतिं विजहौ । नित्यनैमित्तिकदेवपित्र्यादिकर्मानुष्ठानाय कलिकातानगरीमपहाय नैहाटी-स्थिते स्ववासभवने गमनं स्वयञ्च श्रद्धया तदनुष्ठानमित्यसकृदस्मादृशां प्रत्यक्षम् ।

"येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यते ॥"

इति मनुवचनं श्रद्धयाऽनुसरन्नेव प्रत्यक्षीकृतः शास्त्रिमहाशयः ।

न खलु तस्य प्लुषिमशकवदुद्वेजकत्वं नापि हस्तिवदज्ञानविमूढत्वम्, किन्तु त्रिषु लोकेषु देवपितृमनुष्येषु समत्वं सविचारभक्तिश्रद्धाप्रीति-प्रवणतया व्यवहारसाम्यं किल तस्य महाप्राणत्वम् इत्यवधारित-मस्माभिः प्रत्यक्षकार्य्येण । आशास्यते तत्पुत्रास्तत्पदाङ्कानुसारिणो भूयासुरिति ।

लब्धप्रायपुरुषायुषोऽपि कृतकृत्योऽपि महाप्राणोऽयं स्मृतिशेषतामगम-दिति व्यथां यावन्मरणमनुभविष्यामीत्यलम् ।

# हरप्रसादस्मृतिः

[ निबन्धकः—महामहोपाध्याय-श्रीभागवतकुमारशास्त्री ]

भवतः प्रतिभाभासीज्ज्ञानातन्त्रेषु तन्त्रिता ।
हरप्रसाद इत्यहन् यथार्हंशब्दशाब्दितः ॥
विप्लुतप्रज्ञतत्त्वानां त्वमुद्धर्ता धरातले ।
मन्ये कान्यपि रत्नानि समुद्धर्तुं स्वर्गतः ॥

हा हन्त ! शोकाश्रुवर्षप्लुतमिदं भारतं वर्षम् ! दैन्यभावापन्ना स्वर्भारत्या भारती ! अकाण्डे पण्डितप्रकाण्डं भवन्तमस्मत्तः समाच्छिद्य क्रौरात्म्यमात्मनाऽद्धा प्रकटितं कृतान्तहतकेन ! धन्यास्तु सा विबुधानां पुरी प्रस्थितोऽसि यत्र बुधानां प्रेष्ठ । अधन्येयं धरित्री, ध्रियसे नापीह समुद्धृतप्रत्नकथासमुच्छ्वासैः ।

हा धिग् ! शून्यभूतमिव भाति तत्रभवतो भवने तदन्तिमं दर्शनम् । सायं मया समुपागतं तव पादमूलम् । परितः प्रततास्तापनीयग्रन्थाः । कक्षीकृत्य स्वालम्बं काष्ठयष्टिद्वन्द्वं प्रवृत्तस्ते साम्प्रतः पादचारः । स्मित-मधुरस्निग्धदृष्ट्याऽभिनन्द्य मां समागतं नियोजितवानस्यासन्नप्रघणे । समाप्ते च पादचारे समासादितं त्वया निजमासनम् । सपदि प्रस्तुता-स्तापनीयकथाः । समनन्तरञ्च समासञ्जिता विश्वविद्यालयप्रसङ्गाः । लक्षितं मया विस्मयविमुग्धेन विलक्षणं ते तत्सूक्ष्मबुद्धिप्राखर्य्यम् । स्वादिताश्च स्वान्तःकरणैः प्रकृतेषु तत्तद्विषयेषु सरसास्ते वचोभङ्ग्यः । याममेकमेव यापयित्वा प्रतियातं मया निजं निकेतनम् । प्रातरुत्थाय श्रुता दुःश्रवा जनश्रुतिर्गतोऽसि यशःशेषतां विश्रुतयशाः । तदा प्रतीतं मया सर्व्वथा दुरत्यया कालगतिरिति । सत्यमुक्तं सौगतैः 'यत् सत् तत् क्षणिक'मिति ।

आसीच्च मे चेतसि—याते भवति कथाशेषतां चिरस्यास्तमिता इदानीं तास्ताः कथाः। क्व या लप्स्यन्ते पुनस्त्वादृशाः साहित्येतिवृत्तरसिकाः? कैर्वाऽरप्स्यन्ते ते च ते च प्रस्तावाः? के नामाद्य विद्याचतुष्टये भारतीषु प्राचीनभारतीषु भवन्निभाः सम्भृतसम्भाराः? केषां खलु परिज्ञातानि तानि तानि तत्त्वविज्ञानानि? केभ्यश्च रोचतामधुना प्रत्नमूला भारतहितैषणा? अहो सर्व्वत्र साम्प्रतं भारतीयशिक्षासौधकल्पना भित्तिं विनैव वर्द्धते। मन्ये साधु कृतं भवता दैवहतमिदं विहाय सनातनं निकेतनं प्रस्थितवता। समलंकरोतु भवांस्तत्रैव वैखानसमण्डले चिरं वरासनम्। सफलीभवतु प्राङ् निर्य्याणाद्दिनकतिपयान्तरे दृष्टस्त्वया वरणीयः स स्वप्नः।

विदाङ्कुर्व्वन्त्विदमत्रभवन्तः—एकदा निशीथे दृष्टो हि स्वप्ने शास्त्रिपादेन भुवं विहाय विहायसोऽजिहानस्तदीयात्मा द्युलोके वैखानसानामाश्रमं समुपगतः। उपतिष्ठते यावदसौ तदाश्रमद्वारे तावत् प्रत्युद्गन्तुमनुपागच्छति दिव्यवपुश्चिरसहयोगी भूतले प्रत्नतत्त्वसमाकलने कियच्चिरं स्वरारूढः पण्डितप्रवर आशुतोषतर्कतीर्थः। निशाम्य तं विस्मयविस्फारितनेत्राः क्षणं तिष्ठन्ति तत्रभवन्तः शास्त्रिपादाः। कस्यायमाश्रमः? कथमत्र भवान्? के नामात्रान्ये? किमनुष्ठानमाश्रमवासिनाम्? इत्येवंप्रायैः प्रश्नैरनुपदं तर्कतीर्थमसावाकुलीकरोति। सर्व्वेऽत्र बृहद्व्रतधरा ब्रह्माभ्यासपरास्त्रिलोक्याः कल्याणाय निर्ग्रन्था अपि ग्रन्थराशिषु कृतश्रमा वसन्त्यस्मिन्नाश्रमे गुरुं विखनसमुपासीनाः—सहासमित्यावेदितं तर्कतीर्थेन। ततः प्रविष्टास्तेन सार्द्धं शास्त्रिपादास्तदाश्रमम्। दृष्टवांश्चात्र स्वस्वासने समुपविष्टान् ब्रह्मव्रतांस्तांस्तान् वैखानसान्। शून्यमास्ते पुनरेकं तत्र वरासनम्। कस्येदमिति पृष्टवते शास्त्रिमहोदयाय भवदर्थमेवेदमित्युक्त्वा साकूतमीक्षितं तन्मुखं तर्कतीर्थेन। तदाकर्ण्य यावच्चकितचकित आस्ते शास्त्रिमहाभागस्तावदिह निद्राभङ्गस्तस्य निवर्त्तयति तं स्वप्नवृत्तान्तम्।

यथा तथा वा स्वप्नतत्त्वविदो मन्यन्तां नूनं गतोऽयं महाभाग इदमेव वैखानसं वरासनं समलङ्कर्तुम्। शोच्या सम्प्रति भूतलेऽस्मिन् विदुषां परिषत्। शोच्या वयं तादृशमहदयसुहृद्वियोगात्।

स्मरामि हन्त प्रथमयौवने प्राप्तविद्यो वृत्तिप्रेप्सया त्वामेव शरणं प्रपत्स्ये, त्वञ्च मां हस्ते गृहीत्वा स्वयं नेष्यसि वङ्गवासिकलेजाध्यक्षस्य गिरिशचन्द्रवसुजस्य गृहान्, तत्र च लप्स्ये त्वद्वचनात् तद्विद्यालये संस्कृताध्यापकस्य पदम्। स्मरामि पुनर्मासकतिपयान्ते दास्यसि मे वैष्णवतत्त्वानुशीलनाय राजकीयवृत्तिम, पुनः पुनरुपदेक्ष्यसि च मां वृत्ति-भोगकाले—स्थापितोऽसि स्वाधिकारे मा गाः प्रमादमिति। महाभाग, यत्तदानीं भवदनुग्रहाद्भागवतं तत्त्वमालोचयितुं दत्तावसरोऽहं तदेव जीवने मरणेऽपि निर्वृतये मे कल्पताम्। स्मरामि देव भूयो भवान-प्रार्थितोऽपि मम राजकीयकर्मप्रार्थनाकाले कथंकारं मामनुकूलयिष्यति। प्रबलानामपि तदानीं वैरं मां प्रति वैयर्थ्यमापादितं प्रायेण भवदानुकूल्ये-नेति कृतज्ञेन हृदयेन ज्ञापयामि जिज्ञासुजनान्।

अचिरातीता खलु मे विश्वविद्यालये संस्कृताध्यापकपदलाभवार्ता। आसीच्च तत्रान्यतमः प्रार्थी पुत्रस्ते प्रतिष्ठितविनयो विनयकुमारः। किन्तु भग्नोऽपि रुग्णोऽपि मामेवानुकूलयितुं प्राप्तोऽसि मिनेटसभां नैहाटिग्रामादशेषाध्वक्लेशमङ्गीकुर्व्वन्, प्रस्तावितवांश्च निर्वाचनाय मन्नाम तस्मिन् सदसि।

भान्त्येवं भो भवदवसाने विरहदुःखेन विमलीकृते मे चेतोदर्पणे त्वत्कृता मयि महोपकृतिस्मृतयः। शतशश्चैवं मादृशाः कृतोपकारा भवता शोचन्त्यधुना स्वं स्वं दीनमात्मानम्।

नितरां तु शोचतु सम्प्रति भारतसमाजः स्वात्मानम्। को नाम पुनः त्वादृशस्तत्रावान्तरसम्प्रदायानां यथास्वमधिकारान् निर्देक्ष्यति। भवानासीदेको निष्णातो निखिलसम्प्रदायरहस्येषु। भवद्विधा एव ज्ञातु-मर्हं—कथं स्वे स्वेऽधिकारेऽप्रमत्तास्ते ते सम्प्रदाया अन्योन्योपकृत्या

समग्रं समाजमुपकर्त्तुं प्रभवन्तीति। अन्योन्योपमर्द्दो हि सर्व्वं मृद्गातीति को नाम मतिमानधिकारसाङ्कर्य्यं प्रोत्साहयेत् ? अत एव वैदिकतान्त्रिक-बौद्धजैनादिनिखिलागमपारदृश्वना भवता ब्राह्मण्यसम्प्रदाये ( हिन्दु-समाजे ) ब्राह्मण्यरक्षायै कृतोऽशेषः प्रयत्नः। को वा न जानाति भवतो ब्राह्मण्यशिक्षाकेन्द्रेषु ब्राह्मण्यप्रतिष्ठार्थं प्रयत्नपरम्पराः ? किन्त्वहो दुर्विलङ्घ्यं कालस्य शासनम्। समन्तात् क्रमते कलिरद्य दुरन्तपरा-क्रमः। इदानीं पुरुषायते रामा, रामायते च पुरुषः ; शूद्रायते ब्राह्मणो ब्राह्मणायते च शूद्रः ; आर्य्यायते म्लेच्छो म्लेच्छायते चार्य्यः ; भूपायते प्रजा, प्रजायते च भूपः ; आचार्य्यायते शिष्यः, शिष्यायते चाचार्य्यः ; पुण्यायते पापं, पापायते च पुण्यम् ; ज्ञानायते मोहो, मोहायते च ज्ञानम्। एवं सर्व्वत्र सर्व्वथा वर्त्तते वर्द्धते च मर्य्यादाविपर्य्यासमयी तामसी कलेः प्रवृत्तिः। शास्त्रिपादाः स्थाने भवता, काले भवतासादितं सात्त्विकं तद् ब्रह्मणः सदनम्। लभतां भवांस्तत्र स्वान्तप्रसादम्। मोदतां तत्र वैराजे लोके शाश्वतैः शुद्धैरानन्दशतैः। शोचाम वयं शप्ते-ऽस्मिन् भारते ब्राह्मण्यविद्यामन्दिरे तिरस्कृतां ब्राह्मण्यविद्याम्। शोचाम वयमनार्य्यैरार्य्यविद्याभिमानवद्भिरार्य्याणामवमाननाम्। धन्यायतां कलि-र्धन्यायन्तां कलेरेकान्तसेवकाः। के वयं कालगतिरोधे ?

---

स्वर्गत-महामहोपाध्याय-

## श्रीहरप्रसादशास्त्रिमहोदयस्य जीवनस्मृतिः

[ निबन्धकः—अध्यापक-श्रीभवविभूतिभट्टाचार्य्य एम, ए, विद्याभूषणः ]

अहो दुर्भाग्यमद्य वङ्गभूमेर्यत् तदीयकृतिसुतानामन्यतमः स्वनामधन्यो महामहोपाध्याय-हरप्रसादशास्त्रिमहोदयः स्वर्लोकं प्रस्थितः। स हि निखिलभारतवर्षीयविद्वद्वृन्दारकाणां वरेण्यो धार्म्मिकवर्य्याणामग्रगण्यो

यशस्विनां मूर्द्धन्यः शिष्याणां शरण्यश्चासीत्। तेन साधयन्तोऽत्र विद्यानां निलयो गुणानामाश्रयस्तेजसां निधिर्ज्ञानरत्नाम्बुधिः पुण्यानां राशिर्यशसा प्रकाशी शशी। तदीयशिष्योचिताकृत्रिमस्नेहपरम्पराभाजनतया या मधुरसरसश्लक्ष्णगिरा प्राच्यप्रतीच्यसाहित्यसमालोचनदक्षिणापूर्व्व-पाठनशैलीसमाकृष्टहृदयतया वा राजकीयसंस्कृतविद्यालयाध्यक्षपदमधि-ष्ठितस्य तस्य ऊर्द्धतन एम, ए, श्रेणीस्थप्रवयोभिश्छात्रैस्तुल्यं निम्नतम-नवमश्रेणीस्थार्भकच्छात्रान् प्रति तदीयानुपमस्नेहसम्पातसन्दर्शनेन च चमत्कृतचित्ततया वा प्रगाढपाण्डित्येऽपि सहजविनयसौजन्यदाक्षिण्य-सारल्यादिनानागुणभूयिष्ठं तं प्रति भक्तिनम्रचेतसा वयं तस्योपरतावस्य निखिलं जगदिदं शून्यं जीर्णारण्यमिव, अस्तगमनादिव च दिवसमणे-रन्धतमससमाच्छन्नं समवलोकयामः। किन्तु किं करवाम वयं सर्व्वथा दैवहतकप्रतिरुद्धशक्तिप्रसरास्तदीयामितशक्तिशृङ्खलितकचरणा निरन्तर-मेव जने जने कृतान्तहतकस्यानन्तप्रभुतां विचिन्त्यानास्तत्प्रभावाच्च सत्यपि दर्शनेन्द्रिये काणा अविकले च वागिन्द्रिये मूका यथावस्थिते च श्रोत्रे बधिराः स्फुरिते च जीविते संज्ञाहीना जड़वत् प्रतीयमानाः स्वातन्त्र्य-शून्याः। किन्तु "शस्यमिव मर्त्यः पच्यते शस्यमिवाजायते पुनः", "नियतं संसरन्ति च सर्व्वे संसारभावाः" इत्यादिश्रुतिस्मृत्युपदेशवाक्यानि संस्मृत्य सर्व्वं नश्वरं विभाव्य शोकसन्तप्तमानसं नः प्रबोधयामः।

## तस्य मित्रप्रीतिः

स ह्यस्मत्पितृपादान् स्वर्गीयहृषीकेशशास्त्रिचरणान् प्रत्या बाल्यात् सतीर्थतया,—समवयस्तया, सन्निहितग्रामवास्तव्यतया च स्वभक्तिप्रेम-प्रवण आसीत्। उभावेवाद्भुतकर्म्माणावास्ताम्। परिणतवयस्यपि प्रतिदिनमष्टनवघटिका युगपत् निखिलपठनादिकर्म्मसु तौ व्यग्रुञ्जाताम्। "भानुः सकृद्युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवहः प्रयाति। शेषः सदैवा-हितभूमिभारः—" इति महाकविवाक्यं तयोर्जीवनमार्गस्य लक्ष्यमासीत्।

परस्परादद्भुतकर्म्मशक्तितया, सहकर्म्मतया, तुल्यकीर्त्तिसम्पत्तया च तयोः सौहार्द्यं परां प्रौढिं समागतम्। सम्प्रति हिन्दीसंस्कृतौ प्रथितयशसा श्रीमत्पद्मसिंहशर्म्मसाहित्याचार्य्यमहोदयेन सङ्कलितसम्पादितस्य पितृपादाना "प्रबन्धमञ्जरी"ति नवप्रकाशितग्रन्थस्य मुखबन्धः श्रीमद्धरप्रसादशास्त्रिपादै र्हार्दिकानुरागप्रणोदितेन व्यरचि। अतो न केवलं तं प्रति गुरुरिति नोऽन्तःकरणतत्त्वस्य प्रह्वीभावोऽपि तु पितृबन्धुरूपेण स्वजनबुद्धिस्तस्मिन्नस्माकमनन्यरूपाऽऽसीत्। स च मित्रपुत्र इत्यस्मान् चिरं व्यलोकयत्।

## छात्रवात्सल्यम्

छात्रा हि तस्य प्राणानां प्राणा इवासन्। तेषां कृते स सर्व्वमपि कर्त्तुं व्यवसितोऽभूत्। स तेषामभ्युदयाय यथोचितं व्यचेष्टत। तस्य प्रयत्नस्य फलरूपेण तदीयच्छात्रा वङ्गीयशिक्षातन्त्राधीनविद्यालयेषु ढाकाविश्वविद्यालये चेदानीं समुच्छ्रितपदान्यलंकुर्व्वन्ति। यदा स संस्कृतविद्यामन्दिरस्याध्यक्षोऽभूत् तदा निम्नतमनवमश्रेणीस्थशिशुच्छात्रानपि स्वेच्छया नियतमध्यापयति स्म। को नाम तथाविधोर्द्ध्वपदमधिरूढः पुरुषप्रवरो भूयिष्ठकर्म्मनिरतोऽपि स्वकीयावकाशं न परिगणय्यैवं शिशुच्छात्रपठन आत्मानं नियोजयेत्। छात्रहितैषैव तदीयकर्म्मण एतस्य प्रमाणम्।

## उत्तमकर्म्मत्वम्

"विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमगुणा न परित्यजन्ती"ति महाकवेर्वाणी सर्व्वथैवोत्तमकर्म्मणि तस्मिन् प्रयुज्यते स्म। वङ्गप्रान्तीयसाहित्यसम्मेलनस्य किमप्यधिवेशनम् तेन स्वग्रामे नैहाटीतिख्याते समाकारि। स्वगुरोः साहित्यसम्राजो वङ्किमचन्द्रस्य नाम्नैव सम्मेलनस्य प्रबन्धः समारब्धः। केचित्त्वर्व्वाचीनाः तोदिष्टव्यापारानवलम्ब्य विविधा बाधा विदधिरे। वयं साहित्यविभागस्य सम्पादक-

पदे नियुक्ता आस्म। अस्माकं दृढानुरागेणोपचितात्स्नेहात्ऽसमत्यर्थ इव स सर्वान् विघ्नानुत्सार्य यथा सम्मेलनं साफल्यं निनाय तद्धि सकल-कर्म्मिणाम् आदर्शभूतं स्यात्।

## मृदुकठोरस्वभावत्वम्

"वज्रादपि कठोराणि मृदूनि कुसुमादपि लोकोत्तराणां चेतांसी"ति महाकविवचनानुसारतो हृदयेऽस्य कोमल-कठोरभावानां समन्वयस्तस्मिन दरीदृश्यते स्म। सत्कर्म्मसाधस्तनकर्म्मसु च तस्य स्वाभाविकप्रीतौ सत्यामपि तेषां स्खलनं कर्त्तव्यकर्म्मणो न स कदापि ममर्ष। प्रीत्यवसरे तदीयमुखं चन्द्रिकास्नातविशारदपूर्ण चन्द्रमण्डलमिव विकचपङ्कजमिव च प्रफुल्लं हसितरञ्जितमासीत्, कर्म्मविच्युतौ तु तेषां पुनः स्वस्यरश्मिसन्निविधमिव मध्याह्नमार्त्तण्डमण्डलमिवोग्रमत्तजञ्चक्षुषा दुर्निरीक्ष्यमभूत् तदीय वदनमण्डलम्।

## प्राचीनपथानुवर्त्तित्वम्

, सामाजिक-धर्म्मगत-व्यापारेषु तु स सर्व्वथा प्राचीनमार्गमनुससार। सन्ध्योपासनातर्पणश्राद्धादिनित्यनैमित्तिकानि कर्माणि स यथावत् प्रत्यह-मनुतस्थौ। धर्म्मशास्त्रादिविषयेषु शूद्राणामध्यापनं न युक्तमिति कृत्वा वाराणसीहिन्दुविश्वविद्यालये ब्राह्मणेतरजातीयाध्यापकनियोगव्यापार-मवलम्ब्य कालप्रभावात् स्वमतरक्षणे विफलोद्यमः स तत्रत्यसंस्कृत-विभागाध्यक्षपदवीं द्राक् तत्याज, धर्म्मसमाजादिविषयेषु स यत्किञ्चि-च्चकार भावपाल्यमेव तस्य प्रणोदकमासीत्। बाह्याकृत्या लोकवञ्चनं न जातु तस्याभिमतमभूत्। स यथार्थतो धार्म्मिक आसीदिति नो हृदयम्। विधवानां पत्यन्तरग्रहणं न तस्याभिमतमासीत्। यदा स्वनामधन्यः श्रीमदा-शुतोषमुखोपाध्यायमहोदयः स्वकीयविधवाकन्यायाः पत्यन्तरसमर्पणे प्रवृत्तोऽभूत्, तदा शास्त्रिपादा बन्धुभावेन प्रथमं प्रतिवादमकुर्वन्। दृढ-चित्तः श्रीमदाशुतोषस्तु "क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभि-

मुखं प्रतीपयेदि"ति न्यायेन सर्व्वेषां मतमुपेक्ष्यैव तदकरोत्। प्राग्-विद्यमानेऽपि प्रगाढसौहार्द्दे मतविरोधात् समजनि तयोः कापि तदवधि विमतिः।

कर्म्म यशश्च प्राक् प्राणप्रियाः पत्नीप्रभृतिस्वजनास्ततः परम्

यदा अक्सफोर्डमहाविद्यालयस्य संस्कृतविभागाध्यक्षप्रवरो भारतीय-च्छात्राणां सुपरिचितः श्रीमान् म्याक्डोनालमहोदयो भारतवर्षस्य नाना-प्रान्तीयसंस्कृतविद्यानुशीलनक्षेत्राणां पर्य्यवेक्षणमिषेण राजपुरुषैर्भारत-भ्रमणकर्म्मसु नियुक्तोऽभूत्—श्रीमन्तः शास्त्रिपादास्तदा राजनियोगात् तस्य साहाय्यके न्ययुज्यन्त। तदानीं तदीयप्राणप्रिया पत्नी केनापि दुःसाध्य-व्याधिना पीडिताऽभूत्। वैदेशिकातिथिपरिचर्य्यापराः शास्त्रिपादास्तु तां रोगक्षुण्णां गृहे विहाय चिकित्सकोपरि तस्या भारं निक्षिप्य स्वीयज्ञान-भाण्डागारं पूरयितुं यशश्चार्जयितुं भारतस्य नानाप्रान्तेषु पर्य्यटितुं प्रययुः। तस्मिन्नवसरे साध्वी पत्नी पतिमपश्यन्ती परलोकं प्रतस्थे। अतः सम्यगेवोक्तम् सीताविवासनव्यवसितेन महाकविकालिदासचित्रितेन लोकोत्तरचरितेन श्रीरामचन्द्रेण "अपि स्वदेहात् किमुतेन्द्रियार्थाद् यशो-धनानां हि यशो गरीय" इति। ये खलु लोकोत्तरचरिता भवेयुस्तेषां यशः कर्म्म च प्रधानम् प्राणप्रियपत्नीप्रभृतिस्वजनाश्च तदधीना गौणा एव भवन्ति।

वङ्गसाहित्ये तदीयश्रमः

वङ्गसाहित्यस्य कृते तस्य श्रमोऽतुल्य एव। वङ्गभाषासाहित्यञ्च सहस्राधिकसंवत्सरेभ्यः प्रागवर्त्ततेति स प्राचीनहस्तलिखितग्रन्था-विष्करणादिप्रमाणपरम्पराभिरुपपादयामास। विश्वविद्यालये वङ्गभाषा-प्रवेशनप्रबन्धस्तत्प्रयत्नोपज्ञमेवेति श्रीमदाशुतोषोऽपि बहुशोऽङ्गीचकार। बीजं तेनोप्तम्, फलपुष्पपल्लवाढ्यतां तु श्रीमदाशुतोषेण नीतम् येनाधुना विश्वविद्यालयस्य समुच्च एम्, ए, परीक्षायां विषयकदम्बेष्वन्तर्भूतः पठ्यते पाठ्यते च।

बङ्गीयसाहित्यपरिषत्

एसियाटिक्सोसाइटीति परिषदोऽनुकरणेन तरुणवङ्गीयविदुषां गवेषणाक्षेत्रं बङ्गीयसाहित्यपरिषत्—यैः खलु महात्मभिः प्रवर्त्तिता, श्रीमदुपस्माद्शास्त्रिमहोदयस्तेषामन्यतमः। आमरणं तदीयप्रयत्न-परिपालितेयं परिषत् सलिलसेकसंवर्द्धिता वल्लीवाद्य फलकुसुमार्घ्येण समुपचरति सर्व्वान् प्रत्नसाहित्यरसिकान्।

पुत्रे यशसि च तदीयपुण्यप्रकाशः

किं बहुना क्षुद्रेऽस्मिन् निबन्धे तदीयाखिलगुणचरितसङ्कलनं न कर्त्तुं शक्यते। अपूर्व्वघटनायशोविचित्रं हि तदीयजीवनम्। तथापि "पुत्रे यशसि तोये च नराणां पुण्यलक्षणमि"ति प्रतिपाद्याद्य समुपसंहरामः। तदीयाः पञ्च पुत्राः सर्व्वे एव गुणाढ्याः कृतिनो धनिनः कृतविद्याश्च। दिष्ट्या तेषु डाक्तारपदलाञ्छनः श्रीमान् विनयतोषभट्टाचार्य्यः एम, ए, पि, एइच, डि, महोदयो बरोदाराज्यान्तर्गतराजकीयग्रन्थागाराध्यक्षपद-मधिकुर्व्वन् विविधप्रत्नतत्त्वगवेषणा-नानापुस्तकप्रणयनसंकलनसम्पादनादि-कर्म्मसु नियुक्तः पितृवत् सुयशोऽर्ज्जयतितरामिति, हृष्यति नो हृदयम्। अत एवोक्तम्—'आकरे पद्मरागाणां जन्म काचमणेः कुतः'।

"अर्द्धशताब्दीं यावत् संस्कृतसाहित्यस्य पाश्चात्यभूखण्डेषु प्रचारणा-मधिकृत्य नवनवतत्त्वाविष्करणलिखनद्वारेण समग्रपृथिव्यां तस्या-खण्डामलयशो विस्तृतमभूदि"ति तस्य स्मृतिमुद्दिश्य वङ्गदेशीयशासक-वरेण श्रीमता ष्ट्यान्लिज्याक्सनमहोदयेन कलिकाताविश्वविद्यालयस्यो-पाधिवितरणसभायाम्, एसियाटिक् सोसाइटीत्यभिधानपरिषदो वार्षिक-सभायां च निःसङ्कोचं तारं तारमुद्घोषितम्। नूनम् असन्यसाधारणा-मस्य यशःसौभाग्यं यस्य कृते वैदेशिकशासनकर्त्तृव्यसकृद् गुणानुरागेण यशोमुग्धहृदयेन च सबहुमानं सगौरवञ्चैवं मन्त्रयामास। पुण्यभाजा-

# अभिभाषणम्

[ निबन्धकः—म०म०श्रीदुर्गाचरण-साङ्ख्यवेदान्ततीर्थः ]

वर्णाश्रमसदाचारधर्म्मवर्त्मविधायिने ।
ब्रह्मण्याय शरण्याय नमोऽनन्ताय चक्रिणे ॥

अयि भोः पुण्यारण्यसञ्चारिणो विभ्रान्त-पान्थशान्तिनिलया आचार्य्य-वर्य्यमहोदयाः, तथा सनातनधर्म्मरक्षापक्षपातिनः सुकृतिनः सदस्य-महाभागाः !

परमकरुणाकर-श्रीमन्नारायणचरणप्रसादाद् यदिदम् "अखिलभारत-वर्षीय-वर्णाश्रमस्वराज्यसङ्घ"स्य पञ्चमं महासम्मेलनं नानोपद्रवसंकुले विघ्नबहुलेऽस्मिन् वङ्गदेशे शक्यसम्पाद्यं जातम्, तेन वयं नितरां मोदामहे ।

किन्तु सजला सफला शस्यश्यामलापि वङ्गभूमिरियं साम्प्रतमसाम्प्रतै-राधिव्याधिसन्तापैः समाकुला जलप्लावनविधौतसुमङ्गला क्षुत्क्षाम-कातर-तरनरनारीबहुला सत्यनुदिनमुपचीयमान-दैन्यदुर्द्दिनतया स्वां रमणीयतां नोपचिनोति, अतीतगौरवकथां नानुमापयति, वर्त्तमानमपि गुणलेशं नोपदर्शयति, सर्व्वात्मना दीनेव दिनं यापयति । एतस्मिन्नपि विघ्नबहुले काले कृपयाभ्यागतानखिलमङ्गलकरान् भवादृशान् पुण्यविग्रहान् कीदृशे-नोपचारेणोपचराम इति निपुणमनुचिन्तयन्तोऽपि वराका वयं न तत्त्व-मधिगच्छामः । तथापि—

"किमाधत्ते वह्निः सघृतसमिधं प्राप्य न तृणम्" ? इति शिष्टोपदिष्टा-मेव सरणिमनुसरतां श्रीमतामस्मदुपचारस्त्वचारुरपि न कथञ्चिदुपेक्षा-पक्षे भविष्यतीत्यतः कृपामेव भवतामभ्यर्थयामहे ।

---

* अखिलभारतवर्षीयवर्णाश्रमस्वराज्यसङ्घस्य १८५३ शकाब्दीय कलिकाताधिवेशने पठितम् ।

स्मृतीतिहास-पुराणादिप्रथितेषु शास्त्रनिबद्धानेषु वर्षेषु मध्ये भारतं नाम वर्षमिदं सर्व्वात्मना सर्व्वाधिक-गौरवपदमधिकरोतीति सुधियो-ऽनुजानन्ति। लुप्तप्रायाण्यतीतस्मृतिकथा पदे पदे गौरवपदमनुमापयति। शिल्पसौष्ठवेन, कलाकौशलेन, ज्ञानसम्पदा, विज्ञानमहिम्ना, योग-चर्या-चातुर्येण च चिरमियमलङ्कृतासीद् भारतभूमिः। यदा किल जगदिदं महत्यन्धे तमसि मग्नमज्ञानबहुलमासीत्, तदासीदध्यात्मविद्याया जन्मान्तरकथायाश्च कथञ्चिदपि परिचयः, तदानीमपि पुराणेऽस्मिन भारते वर्षे नित्यमात्मानात्मविचारचतुरा जन्मान्तरवादविदश्च भूयांसो विद्वांसो व्यचरन्निति पुराविदो वदन्ति।

अत्रैव हि श्रीमन्नारायणचरणनिःसृता त्रिस्रोता भागीरथीव महता भागधेयेन परमकारुणिकपरमेश्वरप्रसूता धर्म्मप्रसूतिः श्रुतिरपि ज्ञान-कर्म्मभक्तिमयीभिस्तिसृभिर्धाराभिर्धरामिमामप्लावयामास। तत एव हि—

शान्तिः क्षमा तपो दानं सत्यमिन्द्रियनिग्रहः।
आविरासन् दयौदार्य-साम्य-मैत्री स्वतन्त्रताः॥

## भारतवर्षस्य वैशिष्ट्यम्

उच्चावचभेदभिन्ने विविधवैचित्र्यपूर्णेऽस्मिन् जगति तथाविधं वस्तु न किमपि सन्दृश्यते, यत्र न किञ्चिद्वैशिष्ट्यमुपलभ्यते। जातिदेशकाल-निर्व्विशेषेण सर्व्वत्रैव कोऽप्यनन्यसाधारणो विशेषः प्रतिवस्तु परिलक्ष्यते। न हि स्वं स्वं विशेषमपहाय वस्तु किञ्चित् क्वचित् कदाचित् कथञ्चिदपि वर्त्तितुमुत्सहते। एवञ्च सति भारतवर्षस्यापि किमप्यनन्यसाधारणं वैशिष्ट्यमस्तीत्यनुमीयत एव। यच्च वैशिष्ट्यं विविधनदनदी-गिरि-गह्वरद्रुमादिरूपं न, परन्तु अपौरुषेयवेदप्रामाण्यं, सनातनधर्म्मपरत्वं, पर-लोकप्रत्ययः, वर्णाश्रमप्रविभागश्चेति सुधीभिरनुमन्यते। एतावन्मात्रं वैशिष्ट्यमुररीकृत्यैव भारतमिदमनेकधा विकृतजाति-धर्म्मसम्प्रदाय-

कृत्स्नमाक्रान्तमपि स्वमस्तित्वमवैति, चिरलुप्तमप्यतीतमवदानमस्माननुस्मारयति च। यदा खलु भारतमेतद्वैशिष्ट्यमपजह्यात्, तदा खलु स्वात्मानमप्युपहन्यादेव। तत्र यथोक्तवैशिष्ट्येषु मध्ये—

धर्म्मः

योऽयं भारतवर्षस्य प्राणप्रतिमो धर्म्मः, नायमर्व्वाचीनजनपरिकल्पितः, परन्तु अपौरुषेयवेदप्रसूत एव, अत एव सनातन उच्यते। धर्म्मो हि सेव्यमानः सेवकं नोपेक्षते, कृतज्ञ इव समनुवर्त्तते, सुहृदिव विपदो वारयति, पितेव सत्पथमुपदिशति, मातेव सततमवति, गुरुरिव विपथादपनयतीत्यतो वर्णाश्रमसदाचारोपेतं वेदोदितं धर्म्ममेव परमं शरणं मेनिरे भारतीयाः।

"धर्म्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्म्मिष्ठं प्रजा उपसर्पन्ति धर्म्मेण पापमपनुदति तस्माद्धर्म्मं परमं वदन्ति" इत्यादिश्रुतिस्मृतिवादा अपि धर्म्मस्य परमं महिमानमाहुः।

सदाचारः

धर्म्मो हि सदाचारपुरःसरमाराधित एव पुरुषमैहिकमामुष्मिकं वाऽभिमतं फलं गमयतीति शास्त्रकृतामनुशासनम्। यथा हि तुषावनद्धमेव शालिबीजमङ्कुराय प्रभवति, न पुनर्वितुषीकृतं, धर्म्मोऽपि तथैव स्वोचितफलोपजनने विहितमाचारपरम्परामपेक्षत एव, अत एव, "आचारप्रभवो धर्म्मः" इत्यादिवचनं धर्म्मकर्म्मणि सदाचारस्योपयोगमुद्दीपयति। आचारश्च शिष्टसम्मत एव परिग्रहणीयो न पुनः स्वेच्छातन्त्रः। आचारश्च देशकालपरिच्छित्तिभेदेन भिद्यमानोऽपि शास्त्राविरुद्धश्चेत् सादरमुपादीयत एव। अत एव भगवान् मनुरपि—

यस्मिन् देशे य आचारः पारम्पर्य्यक्रमागतः।
वर्णानां सान्तरालानां स सदाचार उच्यते॥

इत्यादिभिर्वचनैः शिष्टसम्मतात्त्वारस्यैव सदाचारत्वमाह। ततश्च धर्म्मानुष्ठाने यथोक्ताचारापेक्षा नास्तीत्युक्त्वा ये स्वैराचारमनुसरन्ति, ते तु यथेच्छाचारिणो नियतं श्रेयोमार्गात् परिभ्रष्टा अनर्थमधिगच्छेयुः। सदाचारपरैः समाराधितो धर्म्म एव परलोकप्रस्थितानामन्धतमसोपेते पथि दीपालोकमुपदर्शयति।

## जन्मान्तरवादः

यदा खलु मनुजमण्डली प्राणिमात्रसुलभमाहारविहारादिव्यवहारमेव जीवनसर्व्वस्वमाकलयन्ती सर्व्वात्मना तदाराधनतत्परासीत्तदासीन्न परलोकवार्त्तामात्मानात्मविवेकविज्ञानं वा। न केवलं प्राणिमात्र-सुलभमैहिकमेव सुखभोगमनुसन्दधानास्तदुपायपर्य्यन्वेषणे एव व्यापृताः सुखमासत, अपि तु तदानीमपि भारतवासिनः कृतिनः स्वात्मानुसन्धाने-ऽपि मनो न्ययोजयन्, परलोकचिन्तायामपि परं प्रयोजनमपश्यन्। तेनैव च परं श्रेयः समीक्षमाणास्तदनुसन्धानपरा बभूवुः। परलोकचिन्ता हि पुरुषाणां पापप्रवृत्तिमुपरुणद्धि, सत्प्रवृत्तिमनुबध्नाति, सत्पथमुप-दर्शयति, कुमार्गे निरुणद्धि, प्रतिपदमुत्साहमुपोद्बलयति, वैराग्यमुपनयति, स्वैराचारं वारयति, कुत्सितेऽफल्येऽपि आशा-बन्धनं दृढीकरोति, धर्म्मानुष्ठाने च मनो नियोजयति।

योऽयं सनातनो धर्म्मः प्रागभिहितस्तदनुष्ठाने तत्फललाभे च सदाचारवदधिकारभेदोऽपि नितरामपेक्ष्यते। अधिकारश्च यथा वयो-ऽवस्थादिभिर्भिद्यते, तथा ब्राह्मणादिवर्णभेदेनापि भिद्यत एव। न हि लौकिकोऽधिकारः शास्त्रीये विधावुपयुज्यते, शास्त्रीये तु व्यवहारे कर्म्मणि वा शास्त्रीय एवाधिकार आदरणीयः, लौकिके तु लौकिकः। शास्त्रं पुनः शास्त्रोक्ते कर्म्मणि ब्राह्मणादिवर्णभेदेनैवाधिकारं भिनत्ति। न हि ब्राह्मणो वर्णोत्तम इति सर्व्वस्मिन् कर्म्मण्यधिक्रियते। न खलु ब्राह्मणः शक्ति-मानपि सन् महोदर्केणाश्वमेधेन यजेत। शास्त्रं हि तस्मिन् कर्म्मणि तदधिकारं वारयति। अधिकारविरहेऽपि यदि कश्चित्

कर्म्म विशेषे प्रवर्त्तते, प्रवर्त्ततां नाम, अवमसौ तत्फलेन विप्रलभ्येत, अनर्थं चाधिगच्छेत् ।

अयञ्च चातुर्व्वर्ण्यविभागः सृष्टिसमकालीनो जन्मगत एव न पुनः कर्म्मकृतः, तथा परमेश्वरकृत एव, न पुनरर्व्वाचीनजनोपकल्पित आकस्मिको वा । श्रुतिस्मृतिषु च चातुर्व्वर्ण्यविभागस्य सनातनत्वमसकृदुच्यमानमुपलभ्यते । तत्र दिङ्मात्रमुदाह्रियते श्रोतृकौतूहलवारणाय—

"ब्रह्म वा इदमग्र आसीदेकमेव, तदेकं सन्न व्यभवत्, तच्छ्रेयोरूपमत्यसृजत क्षत्रं, * * * स विशमसृजत, स शौद्रं वर्णमसृजत । तच्छ्रेयोरूपमत्यसृजत धर्म्मम्, * * * तस्माद्ध धर्म्मात् परं नास्ति, अतोऽबलीयान् बलीयांसमाशंसते धर्म्मेण—यथा राज्ञा" इति । ( बृहदारण्यकोपनिषद् १।४ ११-१५ )

"चातुर्व्वर्ण्यं मया सृष्टं गुणकर्म्मविभागशः ।
तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम् ॥" इति च

( भगवद्गीता ।४ )

अत्रोदाहृतश्रुतिवचनन्तु स्पष्टमेव परमेश्वराद्ध विभागशश्चातुर्व्वर्ण्यसमुत्पत्तिमाह । न चैतदप्रमाणं केनचित् प्रक्षिप्तं वा श्रुतिष्विति वक्तुं शक्यते, उपनिषत्सु बृहदारण्यकस्य निष्प्रत्यूहप्रमाणरूपत्वात्, प्रक्षिप्तवादप्रहेलिकामाविष्कुर्वद्भिः पाश्चात्त्यैरपि पण्डितैस्तस्य प्रमाणत्वेन परिगृहीतत्वात् । भगवद्गीतायामपि भगवान् श्रीकृष्णो यथोक्तश्रुतेरेवार्थमत्र संजग्राह । अत्र तु चातुर्व्वर्ण्यं मया परमेश्वरेण सृष्टं न त्वर्वाचीनेन केनचिदित्यनेन चातुर्व्वर्ण्यविभागस्य सृष्टिसमकालीनतया सनातनत्वमेव दृढीकृतं भगवता इत्यनुक्तमपि विज्ञायत एव विज्ञैः ।

आश्रमः

यथा ब्राह्मणक्षत्रियादि-जातिभेदेन चत्वारो वर्णा उच्चावचफलोपधायके कर्म्मणि विनियुज्यन्ते, ब्रह्मचर्य्यादय आश्रमा अपि तथैव समा-

श्रीयन्ते कर्म्मणि। ब्रह्मचारिणां कुत्रचित् कर्म्मविशेषेऽधिकारो न गृहस्थस्य, तथा गृहस्थस्य कुत्रचिदधिकारो, न तत्र ब्रह्मचारिणोऽन्यस्य,—इत्येवमन्योन्यापेक्षित-वर्णाश्रम-सदाचारेणैतद् धर्म्मराज्यमनिशमावर्त्तते। मन्यामहे, भगवान् विश्वविधातैव निखिलजगदेकमङ्गलनिदानं शाश्वत-शान्ति-सदनमिदं वैदिकधर्म्ममण्डपं सदाचारैः समाच्छाद्य यथोक्तैराश्रमैश्चोपष्टभ्य स्तम्भैरिव चतुर्ष्वाश्रमेषु न्यवेशयत्। भारतीयाश्च तदुपाश्रयेण चिरमवतिष्ठमानाः सुखेनैव दिनान्यनयन्। एतदेव भारतीयानां महद्वैशिष्ट्यं, यदन्योन्यवृत्तिसाङ्कर्य्यपरिहारेण निराबाध-जीवनयापनयोग्यत्वम्।

ब्राह्मणादयश्चानन्यकर्म्माणः अक्लेशाहृतैरेव द्रव्यैरात्मानं परिपालयन्तो ज्ञानविज्ञानशिल्पकलादिसमुद्भावनेन विश्वजनीनकल्याणमाकलयाञ्चक्रुः।

अनेनैव वर्णाश्रमाचारानुगतधर्म्मवर्त्मना भारतीयाः पुरुषाः स्मरणातीतकालात् प्रभृति स्वां स्वां वृत्तिमुपयुञ्जाना अन्याविरोधेन परां प्रीतिमाजह्रुः।

हन्त भोः! दुर्वारकलिकालप्रभावाद्वा, विधेर्दुर्विलसिताद्वा, दुष्कर्म्मपरिपाकवशाद्वा, विजातीयभावानुषङ्गाद्वा, विकृतशिक्षासङ्क्रमणाद्वा, अस्मदीयदुर्भाग्यवशाद्वा, अनिशमावर्त्तमानेन महता कालचक्रेण निर्दयं निपीड्यमानमिव तदेव प्रियतममस्मदीयं धर्म्ममन्दिरं सर्व्वतो विध्वस्तमिव, विपर्य्यस्तमिव हृतसारमिव, किं बहुना, सर्व्वथा प्राप्तविकारमिव संजातम्। तेन च साम्प्रतं प्रायेण धर्म्मात् प्रमाद्यति, हितादुद्विजते, सदाचारात् त्रस्यति, विपरीतन्तु सर्व्वं सर्व्वथा श्रद्धत्तेऽयं लोकः। एवमनेकधा विकारमुपगच्छत्यार्य्यसमाजे सामाजिका अपि प्रातिस्विककल्पितभेदेन प्रबलच्छिद्रान्वेषेण च यथेच्छं कल्पनाराज्यमातन्वन्ति।

तत्र केचन विचक्षणा आत्मनः कल्पनाकौशलमाविष्कुर्वन्तः संस्कारकाः सनातनधर्म्मोऽयमात्मम्भरीणां ब्राह्मणानामुपजीव्यसंग्रहकौशलमात्रमिति व्याचक्षाणा धर्म्ममेवात्मोन्नतेरन्तरायञ्च मन्यमानास्तमेव नियतं विक्षिपन्ति

तदुच्छेदाय च नितरां यतन्ते। यद्येवम्, तर्हि एवमपि वक्तुमुचित यद् धर्म्मव्यवस्थापकेषु महद् गौरवपदमापन्नः क्षत्रजातिर्भगवान् मनुर्हि "इतो नादेयं, ततो नादेयं इतो न पेयं ततो न भोज्यम्" इत्यादिभिर्निषेधशतै-र्भोगसौभाग्याद्वञ्चयन्, पापानुष्ठाने चेतरापेक्षया समधिकं दण्डयन् भक्ष्य-भोजनञ्च पूणयन् ब्राह्मणानेव निग्रहनिगडैरयोजयत्। न ज्ञायते तत्र ब्राह्मणानां कियत् कौशलं स्वार्थपरता वा, येन ते तथाविधानुयोज्या भवेयुः। अपि च यमिमं धर्म्ममार्गमधिष्ठायास्मत्पितृपुरुषाः सर्व्वतो विजयिन आसन्, क्षत्रिया अपि धर्म्ममार्गमपरित्यजन्त एव विश्वविजयमादधुः। वैश्या अपि स्वधर्म्ममुपजीवन्त एव नाना दिग्देशाद्धनान्याहृत्य भारतभूमि परं गौरवमुपानयन्। शूद्रजातीया अप्यनायासेनार्ज्जनयोग्यैः सेवाधर्म्मैरेव भगवत्प्रसादमपि समजनयन्। सोऽयं धर्म्ममार्गो वर्णाश्रमप्रविभागश्च नूनं नामौलिकः, परन्तु स्वतःप्रमाणाद् वेदशास्त्रात् प्रवर्त्तितो वेदबोधित एव, ततः सनातन इत्याचक्षते महर्षयः।

श्रुतिस्मृतिपुराणादिग्रन्थेष्वपि ब्राह्मणादिवर्णानां तद्धर्म्मभेदानाञ्च समुत्पत्तिः परिश्रूयते इत्युक्तपूर्व्वमेव। स्मृतिश्च—

> "चातुर्व्वर्ण्यं मया सृष्टं गुणकर्म्मविभागशः।
> तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम्॥"

इत्यादिका परमेश्वरकर्त्तृकमेव चातुर्व्वर्ण्यविभागमाह। न पुन-रर्व्वाचीनजनकल्पितम्; तर्हि 'मया' इति वचनमसङ्गतमेव स्यात्। अने-नैव मिषेण अस्पृश्यतावादमपि केचिदुपक्षिपन्ति। ते तु सर्व्ववर्णाना-मन्योन्यमबाधं पानभोजनादिकं साधयितुमिच्छन्ति। असवर्णविवाहं, विवाहविच्छेदं, बाल्यविवाहनिरोधं तथाविधमन्यच्च चालयितुं कामयन्ते, तान् प्रति नास्मदीयं किमपि वक्तव्यमस्ति।

यदि नाम तैस्तथाविधैरेव व्यापारैर्भारतवर्षस्य स्वाधीनता सर्व्वाङ्गीण-समुन्नतिश्च परिकल्प्येते, तर्हि स्वयं तथा तथा कुर्व्वन्तु नाम, कस्तान्

वारयितुमर्हति, परन्तु ते येन स्वकीयकामचारव्यापारमपि शास्त्रीयमिति कृत्वा धर्मपराणामनुमतीनां युक्तिव्यामोहमुत्पादयितुमिच्छन्ति, तदर्थं सदाचारमुल्लंघयन्ति, शास्त्राण्यपि कदर्थयन्ति, तेनास्माकं हृदयं खिद्यते। नितरां दूयमाना वयन्तु ब्रूमः--

शास्त्रतो गर्हितस्पर्शानां कतिपयानां लघुसंसर्गे स्पर्शव्यवहारः प्रकृत्यैव सम्पादितः, तत्र प्रयासो निरर्थक एव। पानभोजनादिव्यवहारास्तु धर्म-शास्त्रविगर्हिततया सामाजिकैः कथमनुमन्यन्ताम्? विधवाविवाहस्तु कामचारिणामभीप्सिततमोऽपि शास्त्रविरुद्धतया निन्दनीयतया च साधुभि-र्नोपादेयत एव, तत्प्रयासोऽपि धार्मिकाणां नैवानुमतो भवितुमर्हति। असवर्णाविवाहोऽपि तथैव। बाल्यविवाहस्तु धर्मतः पूर्णमिततया लोक-तश्च गार्हस्थ्यसुखशान्त्यनुकूलतया सामाजिकैः कथमुपेक्ष्येत? इत्थञ्च सनातनधर्मस्य चिरन्तनसमाजव्यवस्थायाश्च संरक्षणाय देशमातृकायाः शान्तिसमृद्धिसमुन्नतिवर्द्धनाय च इदानीमपि सनातनधर्माचारप्रियाणां सङ्घबद्धभावेन सम्मेलनमावश्यकं जातं, तदर्थमेव वर्णाश्रमसङ्घस्याय-मारम्भः।

यथास्मिन् प्रतिष्ठाने सामाजिकानां समधिका कश्चिदुपयोग "सङ्घ-शक्तिः कलौ युगे" इति शिष्टसम्मतेरपि तथाविधः प्रयत्नः सर्वथा करणीय एव। एतदर्थं च देशे देशे नगरे नगरे धार्मिकैः सनातन-धर्मस्य स्वरूप-मुपकारिता महिमा च भूयसा कीर्त्तनीयानि। तदर्थं धर्मज्ञानसम्पन्ना वाग्विन्यासचतुराः प्रचारकाश्च संग्रहणीयाः प्रेषणीयाश्च यथाकालम्।

तदेतत्साधनाय प्रार्थयामहे, ये तावदिदानीमपि सनातनधर्माचार-रक्षापक्षपातिनः सामाजिका विराजन्ते, ते सर्वे जातिवर्णनिर्विशेषेण मिलित्वा स्वं स्वं स्वार्थं द्वेषहिंसादिकं सम्प्रदायविरोधञ्च विसृज्य सम-प्राणाः सन्तः स्वाभीष्टसिद्धये कातरकण्ठेन करुणाकर नु-चिन्त्य तत्संविध एव भारतवर्षस्य धर्मज्ञानवीर्य्यैश्वर्य्यशक्तिभिः पुनरभ्यु-दयार्थं समं प्रार्थयन्ताम्, येन तदीय-करुणाभाजो वयं भवेम। किमन्यत्ततः

परं ब्रूमः। तदिदानीं विविधविघ्नोपहतमतयो वयं करुणामयं भगवन्तमेव चिन्तयन्तो निवेदयामः—

ध्वान्तौघः कवलीकरोति जगतीं निर्व्वान्ति सूर्य्योपलाः
खद्योताश्च परिस्फुरन्ति परितः सीदन्ति पद्मान्यपि।
ये तु ध्वाङ्क्षभयेन कोटरबहिर्निर्यान्ति नो कर्हिचित्
तेऽप्युच्चैर्विहरन्ति हा दिनमणे कुत्र त्वया प्रस्थितम्॥

॥ शान्तिः शान्तिः शान्तिः॥

---

# सर्वप्रत्ययमाला

[ शङ्कराचार्यविरचिता ]

( पूर्व्वानुवृत्ता )

फेनिलः पिच्छिलश्चैव मांसलः पांसुलोऽपरः।
* स स्याद् वषड्वलो यस्तु वषड्गुणसमावृतः॥ ५३॥
दन्तुरस्तून्नतरदो दन्तादुरचि चोन्नते।
तदस्य जातमित्यर्थे स्यादितच् तारकादिषु॥ ५४॥
नभस्तारकितं वृक्षो वने कुसुमितोऽखिलः।
एतत् प्रमाणमस्येति त्वर्थे द्वयसजादयः॥ ५५॥
ऊरुमात्रं जलं नद्यां कण्ठमात्रं कचिज्जलम्।
जानुप्रमाणमस्त्यत्र जानुद्वयसमित्यपि॥ ५६॥
जानुदघ्नं चेति तथा प्रयोगेषूह्यतां पुनः।
इयान् वतुप् स्यादेतावान् परिमाणे कियानिति॥ ५७

* स; स्यात् षषंडलो यस्तु षषंडगुणसमावृतः। इति स्यात्।

आकर्षादिगणेभ्यः* कप् समर्थस्याकर्षको तथा ।
पारम्परीणं † सर्वान्नं पुत्रपौत्रीणमेव तत् ॥ ५८ ॥
न भवत्यनुगामीनो बुद्धिमान् वैरिणां भवेत् ।
प्रातेन जीवी प्रातीनः सख्यं स्यात्साप्तपदीनवत् ॥ ५९ ॥
हैयङ्गवीनं संज्ञायां पश्चात् तिः पक्तिर्भवेत् ।
पाश्चात्यो दाक्षिणात्यश्च पौरस्त्यस्त्यगुर्दाक्षितः ॥ ६० ॥
कन्यः कुतस्त्यः कुत्रत्यो नीचैस्त्यस्त्यप्ययेष्वपि ।
अर्थेऽतिशायने स्यातां प्रत्ययौ तमबिष्ठनौ ॥ ६१ ॥
ज्येष्ठो वरिष्ठो बृन्दिष्ठः श्रेष्ठः प्रेष्ठो वरिष्ठवत् ।
पिता गुरुतमो नृणामुत्तमो भुवि सत्तमः ॥ ६२ ॥
नार्याः प्रियतमो भर्ता कृतघ्नः पापकृत्तमः ।
तरबेव भवेन्नित्यं द्वयोश्चेदतिशायनम् ॥ ६३ ॥
द्वयोरन्यतरः श्रेयान् पुत्रयोरित्युदाहृतिः ।
ज्येष्ठः श्रेष्ठो गरिष्ठः स्याद्विष्ठन्नन्ता यविष्ठवत् ॥ ६४ ॥
श्रेयान् गरीयान् द्राघीयान् पटीयानतिशायने ।
ज्यायान् यवीयान् प्रह्वीयान् कनीयानेवमादिकम् ॥ ६५ ॥
त्वतलावण् ष्यञ्च भावे भवेच्चाणप्रत्ययः क्वचित् ।
ब्राह्मणत्वं मनुष्यत्वं क्षत्रियत्वं त्वलिष्यते ॥ ६६ ॥
तल्प्रत्ययो ब्राह्मणता स्यान्मूर्खता च मनुष्यता ।
अण्प्रत्ययो भवेद् भावे गौरवं लाघवं तथा ॥ ६७ ॥
मार्दवं सौष्ठवं तद्वत् तानवं पाटवं त्विति ॥ ६८ ॥

इति श्री...र्यविरचितायां संस्कृतव्याकरणकारिकायां तद्धितप्रकरणं समाप्तम् ।

( क्रमशः )

* "आकर्षादिभ्यः कन्" इति तु पाणिनिः ।

† पणितप्रकाशके तु ...मतिक्रम्य कोऽपि पाठः ... यथामति संशोधनपुरःसरं मुद्रितमस्माभिः ।

# सर्वशास्त्रप्रबोधिनी

[ श्रीमद्बोपदेवविरचिततया प्रसिद्धा ]

[ मुकुन्दं सच्चिदानन्दं प्रणिपत्य प्रणीयते ।
मुग्धबोधं व्याकरणं परोपकृतये मया ॥ ]

ॐ नमो गणेशाय

त्रैलोक्यपितरौ वन्दे गङ्गाधरगदाधरौ ।
प्रलयस्थितिकर्त्तारौ भर्त्तारौ जगतां करौ ॥
पाणिनिर्वार्त्तिकं भाष्यं महाभाष्यन्ततः फणी * ।
प्रक्रियारत्नकारश्च † काशिकावृत्तिरेव च ॥
इन्द्रश्चन्द्रो ‡ महेन्द्रोऽपि चान्द्रः § कान्द्रः कपालिनी ।
कैयटो हरदत्तश्च कजटो दीक्षितः शुभः ॥
शाकटायनजैनेन्द्रौ सारस्वतसरोरुहौ ।
जुमरामरभट्टाश्च मेदिन्याद्या रसाभुजः ॥
बुद्धिपादकलापौ च रत्नमाला च मालिका ।
नैयासिकमहाशङ्कुः सुपद्मः कमलासनः ॥
एतेषां मतमालोक्य मुग्धबोधं मया कृतम् ।
क्रियते तस्य व्याख्यासौ सर्वशास्त्रप्रबोधिनी ॥

विघ्नविघाताय ग्रन्थकृदुचितेष्टदेवतानमस्काररूपं मङ्गलं कुर्वंश्चिकीर्षितं प्रतिजानीते—मुकुन्दमित्यादि । मया मुकुन्दं प्रणिपत्य व्याकरणं

---

* ततः फणीति । तस्य भाष्यं फणीति व्युत्पत्त्या फणिभाष्यम् इत्यर्थः ।

† काशिकावृत्तिः पाणिनिव्याख्यानीत्यर्थः ।

‡ महेन्द्रो मिथिलायां प्रसिद्धः ।

§ चान्द्र इति पश्चिमायान्दिशि प्रसिद्धः शाकटायनस्य व्याख्याता।

प्रणीयत इत्यन्वयः। मुकुन्दमिति— मुकुं ददातीति दः। तथाहि 'मुकुः स्यात् कुत्सिते हिंस्रे पुंसि निर्वाणे मुकुमव्ययम्' इति कोषः। यत्तु मुकुन्द-पदसाधनाय मुकेर्मुकुमिति सूत्रितं तदपार्थमेव मुकुमशब्दस्य सत्त्वात्। सच्चिदानन्दमिति विशेषणं समासो विभाषासमासान्तं ध्वनितम्। अत्र च

तद्धितार्थो द्विगुश्चैव कर्मधारय एव च।
तथा तत्पुरुषश्चैव त्रिपदो न समस्यते॥

इति दुर्गसिंहजौमरादयः। तदनादरणीयम्, प्राचीनानामसम्मतत्वात्। अत एव शाकटायनटीकायाम्—

* तत्र तत्पुरुषे यावत्तुल्याधिकरणे † पदे।
त्रिपदं चापि कर्त्तव्यं न स्वीकुर्वन्ति बर्बराः॥

अत एव "कालाः " [ पा २।१।५ ] इति सूत्रं त्रिपदं स्वीकृतम्। जिनेन्द्रबुद्धिपादादयस्त्वेवं सूत्रम्। † व्याकरणमिति। व्याक्रियन्तेऽनुशिष्यन्ते व्युत्पाद्यन्ते वा शब्दा अनेनेत्यनट्। मुग्धबोधमिति। मुग्धः सुन्दरो बोधो यस्मादिति तत्।

[ ॐ नमः शिवाय

इति नमस्कारसूत्रम्। ]

ओमिति मङ्गलम्। तथाच मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि अव्याहतप्रसराणि आयुष्मद्व्याख्यातृकाणि भवन्तीति श्रुतिः।

[ शं शब्दैः ।

शब्दैः मंगलं स्यात् । इति ग्रन्थारम्भाभिधेयसम्बन्धाः

शमिति । स्पष्टम् ।

[ अ इ ऋ लृ क ए ओ ङ ऐ औ च ह य व र ल ञ ण न ङ म भ ढ ध घ भ ज ड द ग ब ख फ छ ठ थ च ट त क प श ष साद्यन्ताख्याः

एषां मध्ये ये वर्णाः आदिवर्णान्तवर्णसमाहारसंज्ञाः स्युः

नन्वत्र "आदिगेचोः—" [सू० २३] इत्यादि सूत्रविहितं कार्य्यं कथं न स्यात् । न चात्र "नाजोऽन्त—" [सू० ४१ ] इति सूत्रेऽज्मात्रत्वात् सन्धिनिषेध इति वाच्यम्, तथा सति * "आवत्—" [सू० ५] इत्यादावपि तथात्वापत्तेः । वस्तुतोऽत्र नानात्वापत्तेर्भ्रमनिरासार्थमेव

[ इत् कृते ।

कस्मिंश्चित् कार्यार्थोच्चार्यमाणो वर्ण इत्संज्ञः स्यात् । तस्य कार्यंऽनुच्चारः । यथा अचि कञ्चाः संज्ञार्थाः । इहेऽकार उच्चारणार्थः । ]

कृते इति लुप्तचतुर्थीकम् । तथा च "कृतेऽव्ययं निमित्ते स्यात्" इति कोषः । कृते च कृते चेत्येकशेषस्ततश्चतुर्थी लुप्ता, तथा च "कृतं युगेऽपि पर्य्याप्तौ हिंसायां विहिते फले" इति कोषः । कस्मैचित् माणो यो वर्णः सः, अफले उच्चार्यमाणो यो वर्णः स च इत्संज्ञः स्यात् । यथाचि, रामाणामित्यादौ आदिनिमित्तस्य मकारस्य इत्वम्, अफलत्वादुकारस्य तत्वम् । स च लोप एव । लोपस्तु वर्णानामदर्शनम् । नन्वेवं नित्यानां वर्णानां कथं लोप इत्युच्यते । तथाच—

---

* आवत् अवग्रहचिह्नरहित अत्र आव अव इति विग्रहे सन्धिनिषेधापत्तेरित्याशयः ।

यत्तु पाणिन्यादिना *अकारादीनामष्टादशादिसंज्ञा कृता तद्वैदिकप्रयोगाय। अतएव

अकाराद्याश्च ये वर्णा ह्रस्वदीर्घप्लुतार्थकाः।
ततस्ते क्रमशो ज्ञेया उदात्तादिस्वरैस्त्रिधा॥
ततोऽपि द्विविधा ज्ञेयाऽनुनासिकोनासिकात् (?)।
पर्यायेण प्रयोक्तव्यमित्थं छन्दसि धीमता॥

छन्दसीति वचनाल्लौकिके ह्रस्वदीर्घप्लुता एव प्रयोक्तव्याः। अत्र ऌकारस्य दीर्घत्वं नास्तीति शाकटायनः। अस्तीति प्रक्रियारत्नकारकञ्जटौ। पाणिनिवृत्तौ भट्टोजिदीक्षितेनापि ऌवर्णस्य द्वादश तस्य दीर्घाभावात् इत्युक्तम्, यदा ह्रस्व ऌकारोऽस्ति तदा दीर्घोऽप्यस्तीति दुर्गसिंहः। वस्तुत ऌकारस्य दीर्घत्वमप्यस्तीत्यस्माकं सम्मतम्। अतएव महाभाष्येणापि (?) धातोरुपसर्गोऽतीति (उपसर्गादृति धातौ) [पा—६।१।९१] तपरत्वात् ॡकारमिच्छतीति ॡकारीयति ततः प्लकारीयतीत्येवोदाहृतम्। पुरुषोत्तमेनापि—

"ऌकारो देवमाता स्याद् ॡकारो दनुजप्रसूः"

इत्युक्तम्। एचः सन्ध्यक्षरत्वेन वर्णद्वयघटितत्वात् स्वं नास्तीति।

## [ अपोऽक् समो णं त्रक् च।

समानो अपोऽक् च परस्परं णसंज्ञः स्यात्, त्रक् च। साम्यन्तु कण्ठानत्वम्।

अवयम् ए ह क ख ग घङाः कण्ठ्याः।
इवयं च छ ज झ ञ श ए ऐ यास्तालव्याः।
ऋवयं ट ठ ड ढ ण र षा मूर्धन्याः।
ऌवयं त थ द ध न ल सा वो दन्त्याः।
उवयं प फ ब भ म वा ओ औ ओष्ठ्याः।

एषां यो येन समः स तस्य तत्र ततः ]।

* प्रत्यर्धतरादौ व्यञ्जनस्यार्धमात्रकमिति स्मरणात्, अर्धमात्रकपदह्रस्वद्वयसंयोगादेकमात्रत्वे "स्वस्य तन् पिति" [सू-८८३] इति तनापत्त्यैवोरुकमिदम्।

† आदिना अनुदात्तस्वरितयोः। तथाच, उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरित इति पाणिनिसूत्राणि।

[ इङोऽरलेङ् गुः ।

इकः स्थाने अर् अल् एङ् एते गसंज्ञाः स्युः । ]

एङ् इङौ समाहारौ । यत्र गु विधीयते तत्रेङ इति षष्ठ्यन्तं पदमुपतिष्ठत इत्यर्थः । तेषां यो येन सम इति नियमाच्च यथाक्रमम् ।

[ अच आरालैज् त्रिः ।

अचः स्थाने आ आर् आल् ऐच् एते त्रिसंज्ञाः स्युः । ]

आश्च आर् च आल् च ऐच् च तत् । सूत्रत्वात् "चैक्याद्—" [ सू० ३२४ ] इत्याकारो न । तथाच "छन्दोवत् सूत्राणि भवन्ती"ति स्मरणात् । शेषं पूर्ववत् ।

[ प्रमरापसंन्यवानुनिदुर्व्यधिसूत्परिप्रत्यभ्यत्यप्युपाङ् गिः ।

अभावार्थे स्वतौ वातिक्रमेऽति: पर्यधी गतौ ।
अपि: पदार्थसम्भाव्यनगर्हासमुच्चये ॥

प्रश्च पराश्च अपश्चेत्यादि चः । निर् दुर् इति दन्त्यसान्तः । तथाच—"दुर्दुःखभावने कोपे निर्निश्चयनिषेधयोः" इति दन्त्यसान्ते मेदिनी *। यत्तु "दुर्निषेधे च कष्टे च [ निर्निर्णयनिषेधयो ]" इति रेफान्तेऽपि मेदिनी तदनुपसर्गाव्ययानुकरणपरम् । अतएव "नान्यर्थे निश्चये त्यागे निषेधे निस्तदव्ययम्" इति रेफान्तेषु सुभूतिः । "निषेधे निश्चये निः स्याद्दुःखदुस्तारकोपयोः" इति दन्त्यसान्ते विश्वप्रकाशः ।

निस्निदुस्सदुरिति पाणिनिः । उभौ सान्तरेफान्ताविति पाणिनिः । वस्तुतस्तु उपसर्गद्वयस्य पदवैलक्षण्याभावाल्लाघवात् सान्त एव । स्पष्टीकृतश्च "निसः शतो डः" [सू० ४०३] इति सूत्रे । अत्रेति । अत्र प्रादौ स्वती अर्चायां न गी इत्यर्थः । यथा सुस्तुतः अतिस्तुत इत्यादौ न षः । अत्यतिक्रमे गिर्नः । फलोदये सति क्रियाऽपरित्यागोऽतिक्रमः । यथा अतिसिञ्चति

* मुद्रिते मेदिनीकोषे तु "निर्निषेधे च निश्चये" इति दन्त्यसान्त उपलभ्यते । ]

अस्माकल्येऽनादरं च निश्चयेऽवोऽत्र कथ्यते ॥ ५ ॥
वीप्सेत्थम्भावहीने च पश्चात्साहृश्ययोरनु ।
समीपार्थे सहार्थे च पौनःपुन्ये च कथ्यते ॥ ६ ॥
नास्त्यर्थे निश्चये भिन्ने निषेधे निः प्रगद्यते ॥ ७ ॥
दुर्निषेधे च कष्टे च दुःखे दुःस्तारकोपयोः ॥ ८ ॥
विर्विशेषे च वैकल्ये नञर्थे गतिदानयोः ॥ ९ ॥
अधिरौपरिभाव्ये च गतौ चातिशये तथा ॥ १० ॥
अर्थादौ शोभने सुः स्यादुदूर्द्धोत्कर्षयोरपि ॥ ११।१२ ॥
प्राकट्ये च स्यादैकार्थ्ये तथा कृत्ये धनादिषु ।
वीप्सेत्थम्भावचिह्नेषु नियमे त्यागभागयोः ।
आशये सर्व्वतोभावे गतौ च परिरुच्यते ॥ १३ ॥
वीप्सेत्थम्भावचिह्ने च भागसाहृश्ययोरपि ।
व्यावृत्तौ च प्रार्पणे च प्रशस्तौ प्रतिरुच्यते ॥ १४ ॥
समन्तादुभयार्थेऽभिर्वीप्सेत्थम्भावधर्षणे ॥ १५ ॥
अतिक्रान्तावतिः पूज्येऽसम्भाव्येऽतिशयेऽपि च ॥ १६ ॥
अपिः पदार्थसम्भाव्यगर्हानुज्ञासमुच्चये ।
... ... ... कम्पनादौ च कथ्यते ॥ १७ ॥
अनुर्गतौ तथा पश्चाद्भावेऽनुकम्पनेऽपि च ।
सामीप्ये प्रथमे चैव त्यागे चोपश्च कथ्यते ॥ १८ ॥
वाक्यस्मरणयोराङः मर्य्यादाभिविधावपि ।
क्रियायोगेषवर्थे च समन्तात् सम्यकेऽपि (?) च ॥ १९ ॥

पतितमेतत् * ।

यद्वर्थं (?) यस्य यत्प्रोक्तं ज्ञेयन्तदुपलक्षणम् ।
अव्ययानामनेकार्थाच्छेषं शिष्टप्रयोगतः ।

---

समन्तादायत्तणे चापि प्रत्याख्यानौ च धीमता ।
सदर्थञ्च तथाख्यातिः कथ्यते पण्डितैः सदा ॥ इति दुर्गादासः ।

तथाच —

धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते ।
तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा ॥

इति विस्तरचूर्णिः ।

[ भ्वादिर्धुः ।

भू सत्तायामित्यादिगणः भूरतः स्या ।१ ]

भू आदिर्यस्य स तद्गुणाहः । सत्तायामित्यनेन क्रियावाचित्वं दर्शितं, तथाच भूसत्तायामित्यादिबृहद्गणपरिपठितानां क्रियावाचिनां धुसंज्ञा-त्यर्थः । दश गणा हि—

"भ्वाद्यदादी जुहोत्यादिर्दिवादिः स्वादिरेव च ।
तुदादिश्च रुधादिश्च तनक्र्यादिचुरादयः ॥"

चुरादेर्गणत्वात् सिद्धौ विकल्पितप्रयत्नानां धुत्वार्थमिह पाठः ।
। क्रिया द्विधा सिद्धा असिद्धा च । सिद्धा यथा—

स्थितोऽस्ति । असिद्धा यथा—घटं करोति ।

तथाचोक्तं—

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात् सा ।

इति वैयाकरणभूषणादौ द्रष्टव्यम् । * इदन्तु पूर्व्वस्यधातुपाठाभिप्रायेण । इतरथा शुम्भिप्रभृतीनां स्वकृते इदित्वादेव कं सिद्धे कं स्यात् ।

[ सित्यादिः स्फिः ।

स्यादिष्यादिष तिमङ: स्या१ । ]

सुगमम् ।

[ अत्र किञ्चित् पतित, स्यादिति प्रतिभाति । ]